# चैतन्यचन्द्रोदयनाटकम् ।

महाकवि श्रीकर्णपूरविरचितम् ।

बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचितया टीकया
समलङ्कृतम् ।

तेनैव संस्कृतं प्रकाशितञ्च ।



कलिकाता राजधान्याम् ।
सरस्वतीयन्त्रे मुद्रितम् ।

ई १८८५ ।

# चैतन्यचन्द्रोदयनाटकम् ।

•◦○◦•

ः ।

प्रस्तावना ।

नान्दी ।

निधिषु कुमुदपद्मशङ्खमुख्ये-
ष्वरुचिकरो नवभक्तिचन्द्रकान्तैः ।
विरचितकलिकोकशोकशङ्कु-
र्विषयतमांसि छिनत्तु गौरचन्द्रः ॥ (क)

(क) ग्रन्थारम्भे ग्रन्थप्रतिपाद्यपरमदेवताचैतन्यदेवप्रभावकीर्त्तन-रूपां नान्दीमाह, निधिष्विति । नवाः भक्तय एव चन्द्रकान्ताः मणिविशेषाः तैः कुमुदपद्मशङ्खमुख्येषु कुमुदादिषु निधिषु शेवधिषु, निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेरित्यमरः । अरुचिम् अननुरागं करोति जनयतीति तथोक्तः, गौरचन्द्रेण लोकेषु तथा भक्तिमार्गः प्रदर्शितः येन ते निधीनपि तुच्छान् मन्यन्ते इति भावः । तथा, विरचितः अर्पितः निखात इत्यर्थः कलिकोके कलिकालरूपचक्रवाके शोक एव शङ्कुः कीलरूपास्त्रविशेषः येन तथाभूतः, चन्द्रोदये चक्रवाकीविरहात् यथा चक्रवाकस्य शोकः स्यात् तथा नवभक्तिप्रदर्शनेन अधर्मव्यपगमात् अधर्मराजस्य कलेः शोक इति भावः । गौर एव चन्द्रः चैतन्यदेवः, विषयाः स्रक्चन्दनवनिताद्युपभोगरूपसंसारवासनाः एव तमांसि

नान्द्यन्ते सूत्रधारः (ख)। अलमतिप्रसङ्गेन। भो भो! अद्याहं रत्नाकरवेला—कन्दलितदलित—कज्जलोज्ज्वलन्महानील-मणिकन्दलस्य नीलगिरि-दरी-दरीदृश्यमान-घनदलमाल-तमालतरु-कडम्बस्य गभीरतर-कोटर-महाऽवटवट-निकट-प्रकट-प्रमद-मातङ्गस्य भगवतः श्रीपुरुषोत्तमस्य गुण्डिचा-यात्रायां सकल-दिग्विदिग्विहारि-हारि-नरनिकर-मुखर-

---

तिमिराणि छिनत्तु नाशयतु। रूपकालङ्कारः। तदुक्तं दर्पणे, रूपकं रूपितारोपाद् विषये निरपह्नवे इति। पुष्पिताग्रावृत्तम्, अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात्।

(ख) नान्दी। नन्दयन्ति सभ्यानिति नान्दी। तदुक्तं दर्पणे, देवद्विजनृपादीनां स्तुतिर्यस्मात् प्रयुज्यते। आशीर्वचनसंयुक्ता तस्मात् नान्दीति कथ्यते। मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी। पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुतेति। पदशब्देनात्र श्लोकचतुर्थभागः सुप्तिङन्तं वा उच्यते। अत्राष्टपदा नान्दीति बोद्धव्यम्।

(ग) अतिप्रसङ्गेन [illegible] [illegible] वेलायां [illegible] रत्नाकरस्य [illegible] तद्वत् तटे कन्दलितः अङ्कुरितः दलितं मर्दितं यत् कज्जलम् अञ्जनं [illegible] उज्ज्वलन् दीप्यमानः यः महानीलमणिः महान् नीलकान्तोपलः तस्य कन्दलः नवाङ्कुरः तस्य नीलगिरेः नीलाचलस्य दर्यां गुहायां दरी-दृश्यमानः पुनरतिशयेन दृश्यमानः घना निविड़ा दलमाला पत्रावलिः यस्य तादृशः यः तमालतरुः तस्य कडम्बस्य कोरकस्य। गभीरतरम् अतिगभीरं कोटरं गह्वरं यस्य तादृशस्य महतः अवटवटस्य अक्षय-वटस्य निकटे प्रकटः उत्कटः प्रमदः मदमत्तः यः मातङ्गः गजेन्द्रः तस्य तत्स्वरूपस्येत्यर्थः श्रीपुरुषोत्तमस्य श्रीजगन्नाथदेवस्य रथमारुह्य यत्र मन्दिरे याति तत् गुण्डिचेत्यभिधीयते तत्र यात्रायां रथ-

मुख-रममाण-जयध्वनि-ध्वनित-जगदण्डभाण्ड-कुहरे प्रमो-
द-मोदमान-मानस-रसाऽविभक्त-भक्तजन-जनित-भगवत्की-
र्त्तन-कुतूहल-हलहलास्वन-स्वानन्दित-दिग्वधूनिकरे स-
विमर्द्द-मर्द्दल-साहचर्य्यलम्पट-पटह-महापण-पणवस्वन-स्व-
नल्प-ढक्का-ढक्कार-गभीरभेरी-भाङ्कृति-दुन्दुभि-दुङ्कार-कार-
णान्यशब्दाग्रहनिरवधि-वधिरायमाण-जननिकरे क्वचन
समये सेवाधिकारितयाऽरतया समुपसीदता सीदता च

यात्रायामिति भावः । सकलेति सकलैः सर्वैः दिग्विदिग्विहारिभिः दिग्विदिग्वासिभिरित्यर्थः हारिभिः मनोहारिभिः नरनिकरैः मानव-वृन्दैः कर्त्तृभिः मुखरेषु वाचालेषु मुखेषु रममाणैः मुखेभ्यः उच्चरद्भि-रिति भावः जयध्वनिभिः जय जगन्नाथ ! जय पुरुषोत्तम ! इत्येवं-रूपैरित्यर्थः करणभूतैः ध्वनितं पूरितं जगदण्डभाण्डकुहरं ब्रह्माण्ड-विवरमित्यर्थः यस्मिन् तादृशे । प्रमोदेति प्रमोदेन प्रहर्षेण मोदमानं हृष्यत् मानसं यैः तादृशेषु रसेषु भगवद्भक्तिरसेष्वित्यर्थः अविभक्ताः अकृतविभागाः तुल्याधिकारिण इत्यर्थः ये भक्तजनाः तैः जनितम् उत्पादितं प्रस्तुतमित्यर्थः यत् भगवत्कीर्त्तनं पुरुषोत्तमस्तुतिरित्यर्थः तत्र कुतूहलेन तदाकर्णनौत्सुक्येनेति भावः यः हलहलास्वनः साधारणजनकोलाहलशब्दः तेन स्वानन्दितः सुष्ठु हर्षितः दिशो वध्व इव तासां निकरः समूहः यस्मिन् तथाभूते । सविमर्द्देति विमर्द्देन ताड़नाविशेषेण सह वर्त्तमानाः ये मर्द्दलाः वाद्यभेदाः तेषां साहचर्य्ये साहाय्ये लम्पटाः प्रियाः ये पटहाः वादित्रविशेषाः मर्द्दलेन सह पटहस्वनोऽतिमधुर इति भावः, तथा महान् पणः मूल्यं येषां तादृशाः ये पणवाः वाद्यविशेषाः तेषां स्वनैः शब्दैः, स्वनल्पानां बहूनां ढक्कानां वाद्यविशेषाणां ढक्कारैः रवविशेषैः, गभीराभिः घनाभिः भेरीणां भाङ्कृतिभिः शब्दविशेषैः, तथा

भगवत्-कृष्णचैतन्य–तन्यमान-तिरोभाव-भाव-भा-भावित-मानसाऽरुषा परुषाऽऽपद्दशावशाद्दशातशातवैमुख्येन मुख्येन हेतुना तथाविधेऽपि परमानन्दे मानं देयमपि न कुर्वता यताऽवनिभृताऽनिभृताऽभिलाषेण गजपतिना प्रतापरुद्रेणाऽऽदिष्टोऽस्मि। यथा, हंहो चारणाचार्य्य! (ग)

दुन्दुभीनां तदाख्यवाद्यानां दुङ्कारैः कारणैः हेतुभिः अन्येषां शब्दानाम् अग्रहेण अश्रवणेन निरवधि अनवरतं वधिरायमाणाः वधिरा इव आचरन्तः जननिकराः लोकसङ्घाः यस्मिन् तथाविधे। सेवेति सेवायां जगन्नाथस्य परिचर्य्यायाम् अधिकारितया। अरतया अविरतया इत्यर्थः। समुपसीदता समुपस्थायिनेत्यर्थः सीदता सेवाव्यग्रतया क्लिश्यतेत्यर्थः। भगवद्दिति भगः ऐश्वर्य्यादिषट्कं विद्यते अस्य स भगवान्, ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना इति। तेन कृष्णचैतन्येन चैतन्यदेवेनेत्यर्थः तन्यमानः क्रियमाणः यस्तिरोभावः स्वात्मनि लय इत्यर्थः स एव भावः व्यापारः तस्य भा प्रकाशः तया भावितं चिन्तितं मानसं हृदयं यस्य सः, तेन अरुषा मर्मव्यथा येन तादृशेन चैतन्यदेवतिरोधानम् अरुन्तुदमिव मन्यमानेनेत्यर्थः, अपरुषा रोषशून्येन। नास्ति शातं सुखं शुभमित्यर्थः यस्मात् सः अशातः अतिशुभस्वरूपः तादृशस्य शातस्य मङ्गलमयस्य परमसुहृद इत्यर्थः शर्मशातसुखानि चेत्यमरः, चैतन्यदेवस्येति भावः वैमुख्येन तिरोधानवशात् स्वपरित्यागरूपेणेति भावः मुख्येन प्रधानेन हेतुना आपद्दशावशात् विपत्समयवशात्। मानं सम्भ्रान्तजनगणसम्मानमित्यर्थः। अयता रक्षता अवनिभृता राज्ञा अनिभृताभिलाषेण असिद्धमनोरथेन चैतन्यतिरोधानात् मनोरथमपूर्णं मन्यमानेनेत्यर्थः गजपतिना तदुपाधिनेत्यर्थः। चारणाचार्य्य! नटगुरो!

सोऽयं नीलगिरीश्वरः स विभवो यात्रा च सा गुण्डिचा
ते ते दिग्विदिगागताः सुकृतिनस्तास्ता दिदृक्षार्त्तयः ।
आरामाश्च त एव नन्दनवनश्रीणां तिरस्कारिणः
सर्वाण्येव महाप्रभुं वत विना शून्यानि मन्यामहे ॥ (घ)

तदिदानीं प्रेम-सौभगवतो भगवतो यतीन्द्रस्य तस्यैव गुणपरिमलोद्गार-सारेण रसारेण केनापि प्रयोगेण शुभ-वता भवताऽहमानन्दनीयः (ङ) । यतः

प्रियस्य साक्षादविलोकजन्यां
बाधां विसोढुं न हि कोऽप्युपायः ।
सुहृद्भिरुक्तादथवाऽभिनीता-
दृते तदीयाद् गुणसम्प्रयोगात् ॥ (च)

(घ) स इति । अयं सः नीलगिरीश्वरः नीलाचलेश्वरः, स विभवः सम्पद्, सा च गुण्डिचायात्रा रथयात्रेत्यर्थः, ते ते प्रसिद्धाः सम्भ्रान्ता इत्यर्थः दिग्भ्यः विदिग्भ्यश्च आगताः सुकृतिनः पुण्यवन्तः, ताः ताः दिदृक्षासु दर्शनेच्छासु आर्त्तयः व्यग्रता इत्यर्थः, त एव च नन्दनवनश्रीणां तिरस्कारिणः पराभवकारिणः आरामाः उद्यानानि, एतानि सर्वाण्येव नत खेदे महाप्रभुं श्रीचैतन्यदेवं विना शून्यानि मन्यामहे तर्कयामः । शार्दूलविक्रीड़ितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितमिति लक्षणात् ।

(ङ) प्रेमेति प्रेम भक्तिः तेन यत् सौभगं बाहुल्यं तद्वतः । यतीन्द्रस्य योगीन्द्रस्य तस्यैव चैतन्यदेवस्येत्यर्थः । गुणेति गुणानां भक्त्यादीनां यः परिमलः सौरभं तस्य उद्गारः प्रकाश इत्यर्थः सारः प्रधानं यत्र तादृशेन रसारेण रसालेन रसवतेत्यर्थः । प्रयोगेण नाट्येन । शुभवता सौख्येन । आनन्दनीयः विनोदनीयः ।

(च) प्रियस्येति । सुहृद्भिः बन्धुवर्गैः उक्तात् कथितात् अथवा

इति तद्वचस्समत यतनीयम् । चिन्त्यैतत् ।

निर्धूमोऽप्यनुमीयते प्रतिदिशं यस्य प्रतापानलः
साधूनां सुखदो विपक्षशलभव्यूहस्य दाहोद्धुरः ।
प्रागेव स्फुटने विशङ्कितधिया यस्योष्मणां प्रक्रमैः
श्रीशेनावरणैरकारि बहुभिर्ब्रह्माण्डलेपो बहिः ॥ (छ)

सोऽयं मूर्त्तिमानिव निवद्धीभूतः पराक्रमः क्रम-समुपचीयमान-भगवद्भाव-स्वभाव-स्वयमाविर्भूत-शान्तिरसाऽवगाहनिर्धूतरजस्तमस्तया अस्तया अविद्यया शम इव शरीरी परेषामपि मनसि न सिध्यन्तीं विषयवासनां करोति ।

अभिनीतात् नाट्येन प्रयुक्तात् तदीयात् प्रियसम्बन्धिन इत्यर्थः गुणानां सम्प्रयोगात् समालोचनादित्यर्थः ऋते विना प्रियस्य अविलोकजन्यां विरहजनितामित्यर्थः बाधां पीड़ां विसोढुं विशेषेण सहितुं साक्षात् स्वतः कोऽपि उपायः न हि नैव अस्तीति शेषः । अत्रेन्द्रवज्रोपेन्द्रवज्राख्ययोर्मिश्रणात् उपजातिवृत्तम्, अनन्तरोदीरितलक्षभाजौ पादौ यदीयावुपजातयस्ता इति, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमे लघौ सेति तल्लक्षणात् ।

(छ) निर्धूम इति । साधूनां सतां सुखदः शान्तिप्रदः तथा विपक्षाः शत्रवः शलभाः पतङ्गा इव तेषां व्यूहस्य निवहस्य दाहे भस्मीकरणे उद्धुरः उद्भटः यस्य प्रतापरुद्रस्य प्रतापानलः निर्धूमोऽपि धूमशून्योऽपि प्रतिदिशम् अनुमीयते प्रतीयते । यस्य प्रतापानलस्य उष्मणाम् उत्तापानां प्रक्रमैः प्रभावैः स्फुटने विदारणे विशङ्किता विशेषेण शङ्किता धीर्यस्य तादृशेन श्रीशेन नारायणेन प्रागेव पूर्वमेव बहुभिः आवरणैः बहिः ब्रह्माण्डस्य लेपः अकारि कृतः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ज) सोऽयमिति सः अयं प्रतापानलः मूर्त्तिमान् देहवद्भः

तदधुना धुनानः सन्देहं देहस्य कृतार्थयन्नयमहं श्रीनाथे-नाऽनुगृहीतेन तस्यैव भगवतोऽवतो निजकरुणां श्रीकृष्ण-चैतन्यस्य प्रियपार्षदस्य शिवानन्दसेनस्य तनुजेन निर्मितं परमानन्ददास-कविना विनाशित-हृत्कषाय-तिमिरं श्री-चैतन्यचन्द्रोदयं नाम नाटकमभिनीय समीहित-हितमस्य नृपतेः करिष्यामि (च)। अग्रतोऽवलोक्य। भो भो! इत इतः।

प्रविश्य पारिपार्श्विकः। भाव! आश्चर्यमाश्चर्यम्।

सूत्रधारः। मारिष! किन्तत्।

निबद्धीभूतः घनीभूतः पराक्रम इव स्थित इत्यर्थः, क्रमेण समुपचीय-मानस्य सम्यग् वर्द्धमानस्य भगवतः श्रीचैतन्यस्य भावस्य स्वभावेन स्वयमाविर्भूतः यः शान्तिरसः तस्मिन् अवगाहेन प्रवेशेन निर्धूते चालिते रजस्तमसी यस्य तत्तया अस्तया विध्वस्तया अविद्यया मायया मायाविध्वंसनेनेत्यर्थः शरीरी मूर्त्तिमान् शम इव शान्ति-मापद्यमान इत्यर्थः परेषाम् अन्येषामपि किं पुनः स्वस्येति भावः मनसि स्थितामिति शेषः विषयवासनां भोगतृष्णां सिध्यन्तीं सफलां न करोति, राज्ञः प्रतापरुद्रस्य मनसि ईदृशः शान्तिरसो जातः येन तद्दर्शनेन तत्सहचारिणामन्येषामपि विषयतृष्णानिवृत्तिर्दृश्यते इति भावः। धुनानः कम्पयन् निरस्यन्नित्यर्थः। कृतार्थयन् चरि-तार्थं कुर्वन्नित्यर्थः। श्रीनाथेन नारायणेन वा राज्ञा प्रतापरुद्रेण। अवतः रक्षतः प्रियपार्षदस्य प्रियसहचरस्य। तनुजेन पुत्रेण। विनाशितेति विनाशितं विध्वंसितं हृदः हृदयस्य कषायं कालिम्य-विधायकं तिमिरं येन तादृशं श्रीचैतन्यं श्रीयुक्तं ज्ञानं चन्द्रोदय इव यस्मात् तथोक्तम्। अभिनीय नाट्येन प्रयुज्य। समीहितहितं वाञ्छितहितकार्यम्।

पारिपार्श्विकः। एतावत्यपि भगवतः श्रीनीलाचल-चलदानन्दकन्दस्य स्यन्दन-यात्रा-परमानन्दे कतिपये सुखोपरमे परमविमनस्कास्तमस्काण्ड-भाण्डमिव ब्रह्माण्डं मन्यमाना विलपन्तः सन्ति (झ)। तथाहि,

अहो ! सोऽयं नीलाचलतिलकयात्राविधिरियं
नवोद्यानश्रेणीरथविजयवर्त्माऽपि तदिदम्।
दहत्युच्चैः पित्तज्वर इव दृशौ क्रन्तति मनः
खलानां वाणीव व्यथयति तनुं हृद्व्रण इव ॥ (ञ)

(झ) एतावतीति एतत्परिमाणके सुमधिके इत्यर्थः श्रीनीलाचले चलन् तिष्ठन् यः आनन्दकन्दः आनन्दमूलं जगन्नाथदेव इति भावः तस्य स्यन्दनयात्रा रथयात्रा एव परमानन्दः महोत्सवः तत्र कतिपये जना इति शेषः सुखस्य आनन्दस्य उपरमे व्यपगमे इवेत्यत्राध्याहार्यम् अथवा प्रतीयमानोत्प्रेक्षा। परमविमनस्काः अतिविकृतमनसः सन्तः तमस्काण्डानां तिमिरराशीनां भाण्डम् आधारमिव अन्धकारपूर्णमिवेत्यर्थः। विलपन्तः परिदेवयन्तः, विलापः परिदेवनमित्यमरः।

(ञ) अहो इति। अहो आश्चर्यं सः अयं नीलाचलस्य तिलकं ललाटभूषणं श्रीपुरुषोत्तम इत्यर्थः तस्य यात्राविधिः रथयात्रामहोत्सव इत्यर्थः, इयं नवा नवीना उद्यानश्रेणी, तत् इदं रथविजयवर्त्म रथयात्राया विजयमार्गः, एतत् सर्वं पित्तज्वरः पैत्तिको ज्वररोग इव उच्चैः अतिशयेन दृशौ नेत्रे दहति, खलानां दुर्जनानां वाणीव वचनमिव मनः कृन्तति क्षोभयति, तथा हृद्व्रण इव कृतमर्मक्षतमिव तनुं शरीरं व्यथयति व्याकुलीकरोति। शिखरिण्यावृत्तं, रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात्। अत्र मालोपमानुप्राणितविभावनाविशेषोक्त्योः सङ्करः।

तत् कथय किमत्र रहस्यम् । (ट)

सूत्र । मारिष ! धन्योऽसि । यस्य तेऽस्य ते किलानयो-र्नयनयोर्नयसाफल्यकारिणः परमभागवता अद्य गोचरी-भूता भूतारणकृतः । (ठ)

पारिपार्श्विकः । भाव ! केऽमी ।

सूत्र । श्रीकृष्णचैतन्यपार्षदाः ।

पारि । कोऽसौ चैतन्यगोस्वामी ।

सूत्र । मारिष ! अद्यापि जननी-जठर-पिठरपिहित एवाऽसि यदिदं महाप्रभोस्तस्य नाम नाम च न श्रुतम् (ड) । श्रूयताम् ।

आश्चर्यं यस्य कन्दो यतिमुकुटमणिर्माधवाख्यो मुनीन्द्रः
श्रीलाद्वैतः प्ररोहस्त्रिभुवनविदितः स्कन्ध एवावधूतः ।

उक्तं हि दर्पणे, मालोपमा यदेकस्योपमानं बहु दृश्यते इति । विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति । सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति । अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ । सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनरिति च ।

(ट) रहस्यं गोप्यं गूढं वस्तु इत्यर्थः ।

(ठ) नयसाफल्यकारिणः दर्शनचरितार्थताविधायिनः, परमभागवताः परमभगवद्भक्ता इत्यर्थः । गोचरीभूताः दर्शनपथं गता इत्यर्थः, भूतारणकृतः पृथिव्युद्धारणकारिणः ।

(ड) जननीति । जनन्याः मातुः जठरं कुक्षिरेव पिठरं कटाहं तेन पिहितः आच्छादितः मातृगर्भस्थित इत्यर्थः । नाम सम्भावनायां वा प्रसिद्धौ ।

(ढ) आश्चर्यमिति । आश्चर्यं यतीनां सन्न्यासिनां मुकुटमणिः किरीटरत्नं माधवाख्यः माधवो नाम मुनीन्द्रः यस्येति सर्वत्र योज्यं,

श्रीमद्वक्रेश्वराद्या रसमयवपुषः स्कन्धशाखास्वरूपा
विस्तारी भक्तियोगः कुसुममथ फलं प्रेम निष्कैतवं यत् ॥ (ढ)

अपिच,

ब्रह्मानन्दञ्च भित्त्वा विलसति शिखरं यस्य यावात्तमोहं
राधाकृष्णाख्यलीलामयखगमिथुनं भिन्नभावेन हीनम् ।
यस्य छाया भवाध्वश्रमशमनकरी भक्तसङ्कल्पसिद्धे-
र्हेतुश्चैतन्यकल्पद्रुम इह भुवने कश्चन प्रादुरासीत् ॥ (ण)

पारि । भाव ! किम्प्रयोजनो जनोहदूरोऽयमवतारः । (त)

महाप्रभोः चैतन्यदेवस्य कन्दः मूलं, श्रीलाद्वैतः श्रीमान् अद्वैतः प्ररोहः अङ्कुरः, त्रिभुवने विदितः प्रसिद्धः अवधूतः योगिविशेषः स्कन्धः प्रकाण्डः, श्रीमन्तः वक्रेश्वरप्रभृतयः रसमयं शान्तरसपूर्णं वपुः शरीरं येषां तादृशाः अतएव स्कन्धस्य काण्डस्य शाखास्वरूपाः स्कन्धविनिर्गता विटपा एवेत्यर्थः, विस्तारः प्रभूतः भक्तियोगः कुसुमं, यत् निष्कैतवम् अकृत्रिमं प्रेम तत् फलम् । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ।

(ण) ब्रह्मानन्दमिति । यस्य शिखरम् अग्रभागः ब्रह्मानन्दं भित्त्वा विदार्य्य अवगाह्येत्यर्थः विलसति विभाति, यत्र राधाकृष्णौ आख्या यस्य यथोक्तं लीलामयखगमिथुनं क्रीड़ामयपक्षियुगलं भिन्नभावेन पार्थक्येन हीनम् अभिन्नमित्यर्थः सत् आस्ते; अहीनः नीड़ः कुलायः येन तथोक्तं कृतनिलयमित्यर्थः, यस्य छाया भवाध्वनः संसारमार्गस्य यः श्रमः क्लेशः तस्य शमनकरी शान्तिविधायिनी, तादृशः कश्चन भक्तानां सङ्कल्पस्य मानसस्य सिद्धेः हेतुः कारणभूतः चैतन्य एव कल्पद्रुमः इह भुवने प्रादुरासीत् आविर्बभूव । स्रग्धरावृत्तम् ।

(त) किम्प्रयोजनः किमर्थः, जनानाम् ऊहः तर्कः तस्य दूरः अतर्कणीय इत्यर्थः, अयम् अवतारः चैतन्याविर्भाव इत्यर्थः ।

सूत्र। मारिष ! अवधेहि वधे हि मनसो निर्विशेषेऽशेषे परे ब्रह्मणि लय एव परः पुरुषार्थस्तत्साधनं धनं हि केवलम् अद्वैतभावनेति सर्वशास्त्रप्रतिपाद्यत्वेनाऽऽद्यत्वेनाऽपि मन्वानानां विदुषां स्वमताऽऽग्रह-ग्रहगृहीतानाम् अनाकलितं तत्र तत्रैव शास्त्रेषु गूढतयोढतयोत्तमत्वेन स्थितमपि सच्चिदानन्दघनविग्रहो नित्यलीलोऽखिलसौभगवान् भगवान् श्रीकृष्ण एव सविशेषं ब्रह्मेति तत्त्वं तस्योपासनं सनन्दनाद्युपगीतं विगीतमविकलः पुरुषार्थस्तस्य साधनं नाम नामसङ्कीर्त्तनप्रधानं विविधभक्तियोगमाविर्भावयितुं भगवान् चैतन्यरूपी चैतन्यरूपीभवन्नाविरासीत्। (थ)

(थ) अवधेहि अवधानं कुरु श्रूयतामित्यर्थः। वधे दमने वशीकरणे इत्यर्थः सतीत्यर्थः निर्विशेषे विशेषः भेदः तद्रहिते अभिन्ने अशेषे पूर्णे इत्यर्थः परे परमे ब्रह्मणि परमात्मनि लयः विलीनत्वं कैवल्यावाप्तिरित्यर्थः पुरुषार्थः प्रधानपुरुषप्रयोजनं मुक्तिरित्यर्थः तस्य साध्यते अनेनेति साधनम् उपायभूतं धनं द्रव्यं केवलम् एकमात्रम् अद्वैतभावना जीवब्रह्मणोरैक्यचिन्तनमित्यर्थः। सर्वेषां शास्त्राणां प्रतिपाद्यत्वेन बोध्यत्वेन आद्यत्वेन मुख्यत्वेन अपि मन्वानानां भावयतां विदुषां विद्यावतां स्वमतस्य स्वसिद्धान्तस्य आग्रहः निर्बन्ध एव ग्रहः तेन गृहीतानां स्वं स्वं मतं पुष्णताम् अनाकलितम् अविवेचितं गूढतया रहस्यतया ऊढतया गृहीततया उत्तमत्वेन उत्कर्षेण स्थितमपि। सच्चिदानन्दघनविग्रहः नित्यज्ञानानन्दपूर्णशरीरः नित्यलीलः सततविहारी अखिलसौभगवान् सर्वसौभाग्यपूर्णः। सविशेषं सम्पूर्णं ब्रह्म परमात्मा इति तत्त्वं याथार्थ्यम्। सनन्दनादिभिः ब्रह्मसुतैः

पारि। भाव! किं तेनेह वेने हरिणा स्वाऽभिमत-मतव्यञ्जको ग्रन्थः। (द)

सूत्र। यद्यपि को न वेद वेदकर्तृत्वं भगवतस्तथाऽपि खल्वन्तर्यामी यामीहते प्रेरणां न खलु सा वाह्योपदेशतो देशतो वा कालतश्च परिच्छिन्ना भवितुमर्हति। (ध)

पारि। भाव! तर्हि कथं तत्रैवोदारमते रमते न सर्वः। (न)

उपगीतं कीर्त्तितं विगीतं विशेषेण गीतञ्च। स एव अविकलः सम्यक् पुरुषार्थः कैवल्यसाधनमित्यर्थः। तस्य उपासनस्य साधनम् उपायः नाम प्रसिद्धं नामसङ्कीर्त्तनमेव प्रधानं यत्र तादृशं विविधं नानाविधं भक्तियोगम् आविर्भावयितुं प्रकटयितुं चैतन्यरूपी चित्स्वरूपः परमात्मा इत्यर्थः चैतन्यरूपीभवन् श्रीचैतन्यदेवमूर्त्तिः सन् आविरासीत् प्रादुर्बभूव।

(द) तेने विस्तृतः प्रकाशितः स्वाभिमतस्य स्वाभिप्रेतस्य मतस्य व्यञ्जकः प्रकाशकः। ग्रन्थः सन्दर्भः।

(ध) वेदकर्त्तृत्वमिति भगवतः परमात्मनः वेदकर्त्तृत्वं श्रुतिप्रणेतृत्वं को जनः न वेद न जानाति? अपितु सर्व एव जानातीत्यर्थः। अन्तर्यामी सर्वेषाम् अन्तरात्मस्वरूपः सः यां प्रेरणां नियोगम् ईहते चेष्टते यया प्रणाल्या लोकान् नियन्तुमिच्छतीति भावः सा प्रेरणा वाह्योपदेशतः वाह्यविषयोपदेशेन देशतः देशानुसारेण कालतः समयानुसारेण च परिच्छिन्ना निर्णीता न खलु नैव भवितुमर्हति। तत्सन्दर्भे यादृशं मतं प्रकटितं तत् खलु वाह्योपदेशतः देशकालविभागतश्च प्रकटयितुं न शक्यते इति भावः।

(न) उदारमते उत्कृष्टाभिमतविषये सर्वः जनः न रमते न व्यासजति।

सूत्र। विविधवासना-सनाथो हि लोको लोकोत्तरे वर्त्मनि कथं सर्व एव प्रवर्त्तताम्। वासनाबद्धा श्रद्धाऽऽश्रयते हि भेदकतां मतेरिति। (प)

पारि। भाव! भक्तियोगो योऽगोचरः शास्त्रकृतां स च सचमत्कारं ज्ञानमेव जनयति तस्य ब्रह्मकैवल्यं बल्यं फलमिति को भेदः। (फ)

सूत्र। मारिष! "एवंव्रतः स्वप्रियनामकीर्त्त्या जातानुरागो द्रुतचित्त उच्चैरित्यादिना" भगवन्नामसङ्कीर्त्तनादिरूपस्य भक्तियोगस्य योऽगस्य रतिजनकभावः स खलु पार्षद्भावं भावं भावमवतिष्ठते (ब)। तथाच "तैर्दर्शनीयावय-

---

(प) विविधेति विविधाः नानाप्रकाराः याः वासनाः संस्कारविशेषाः ताभिः सनाथः युक्तः। लोकोत्तरे अलौकिके। वासनया बद्धा नियन्त्रिता श्रद्धा विश्वासविशेषः मतेः बुद्धेः भेदकतां विभिन्नताम् आश्रयते बुद्धिभेदं करोतीत्यर्थः।

(फ) भक्तियोग इति भक्तिः पूज्येष्वनुरागः स चात्र प्रेमविशेषः तस्याः योगः उद्रेकः। अगोचरः अविदितः शास्त्रकृद्भिर्भक्तिमार्गो न दर्शित इति भावः। स च भक्तियोगः सचमत्कारं साद्भुतम्। ब्रह्मकैवल्यं ब्रह्माद्वैतं बल्यं मुख्यम्। को भेदः विशेषः वेदादिशास्त्रस्य अभिनवसन्दर्भस्य चैतन्यप्रणीतस्य चानयोरिति भावः।

(ब) एवमिति व्रतं नियमवान् स्वस्य प्रियस्य प्रीतिभाजनस्य चैतन्यरूपिणः कृष्णस्य नामकीर्त्त्या नामकीर्त्तनेन जातानुरागः अनुरक्तः तथा उच्चैरतिशयेन द्रुतचित्तः आर्द्रमनाः। अगस्य न गच्छतीति अगः तस्य स्थावरस्य दृषत्पर्वतादेरपीति भावः रतिजनकभावः प्रेमोद्रेकत्वमित्यर्थः पार्षद्भावं सालोक्यरूपं भावं भावं भूत्वा भूत्वा अवतिष्ठते, तादृशप्रेमार्द्रीभावः सालोक्यमुक्तिरूपेण तिष्ठतीत्यर्थः।

वैरित्यारभ्य पश्यन्ति ते मे रुचिराण्यम्ब ! सन्तः प्रसन्नहासा रुणलोचनानि। रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्तीति" तद्रूपतैव तेषां मोक्षो न तु कैवल्य-मत एव त एवमूचिरे कपिलपादाः। "भक्तिः सिद्धेर्गरीय-सीति"। अतः खलु कलौ नाम नामसङ्कीर्त्तनमेव पुरुषा-र्थसाधकताऽतिरस्कारिपुरस्कारि रत्याख्यभावस्य। (भ)

पारि। भाव! भावत्कं वचनमिदम् अतीव विस्मापकं यतो भगवन्नाम मुक्तिमेव जनयतीति शास्त्रं तदन्यथा चेत्। उच्यते। वस्तुतस्तु "नारायणेति म्रियमाण इयाय मुक्तिमिति" श्रूयते। (म)

(भ) तैरिति दर्शनीयः अवयवः येभ्यः तादृशैः तैः अस्मद्दर्शन-प्राप्तियोग्यैरित्यर्थः। पश्यन्तीति हे अम्ब! मातः! ते सन्तः, साधवः मे मम प्रसन्नः हासो येषां तादृशानि तथा अरुणे रक्ते लोचने येषां तानि दिव्यानि वरप्रदानि रूपाणि पश्यन्ति साक्षात्-कुर्वन्ति तथा साकं सह तैः रूपैरिति शेषः स्पृहणीयां मनोज्ञां वाचं वदन्ति। तद्रूपता सालोक्यरूपेत्यर्थः। भक्तिः भगवति प्रेमभावः सिद्धेः कैवल्यरूपायाः मुक्तेः गरीयसी श्रेयसी, कैवल्यं हि ब्रह्मीभावः का तत्र सुखाशा ? सालोक्ये तु सततमेव तं साक्षात्कुर्वन्तः परमा-नन्दमनुभवन्तीति भावः। पुरुषार्थसाधकतेति पुरुषार्थस्य सालोक्य-रूपमुक्तेः साधकतां न तिरस्करोति नाद्रियतेति तथोक्तं प्रत्युत पुरः करोति प्रकटयतीति तथोक्तञ्च इत्यर्थः रत्याख्यभावस्य प्रेमभावस्य इत्यर्थः।

(म) भावत्कं भवत इदं भवदीयमित्यर्थः। विस्मापकं विस्मय-जनकम्। नारायणेति म्रियमाणः मुमूर्षुर्जनः नारायण! इति वद-न्निति शेषः मुक्तिम् इयाय प्राप।

सूत्र। विहस्य। मुक्तिशब्दोऽत्र पार्षदस्वरूपपरः। यतस्तत्रैव "सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्त्तिनामिति"। इदमेव श्रीकृष्णचैतन्यमतमन्यमतमपास्तं करोति। अनुतिष्ठन्ति चैतत् सुकृतिनः कृतिनः (य)। अतस्तदवतारेण कलिरप्ययं कृतार्थः।

पारि। कथमेतत्।

कलौ न राजन्! जगतां परं गुरुं
त्रिलोकनाथानतपादपङ्कजम्।
प्रायेण मर्त्या भगवन्तमच्युतं
यक्ष्यन्ति पाषण्डविभिन्नचेतसः॥ (र)

इति निन्दाश्रवणात्।

सूत्र। तत् तु श्रीकृष्णावतारतः पूर्वपूर्वकलिपरम्। अन्यथा,

कलौ जनिष्यमाणानां दुःखशोकतमोनुदम्।
अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः॥ (ल)

(य) सद्य इति सद्यः सपदि भगवतः पार्श्ववर्त्तिनां पार्श्वचराणां स्वरूपं जगृहे। अपास्तं करोति निराकरोति। एतत् मतं सुकृतिनः पुण्यवन्तः कृतिनः कार्य्यकुशला नराः अनुतिष्ठन्ति आश्रयन्ति।

(र) कलाविति। हे राजन्! कलौ प्रायेण बाहुल्येन पाषण्डैः विधर्म्मिभिः विभिन्नं विकृतं चेतः येषां तादृशाः मर्त्त्याः मानवाः जगतां परं गुरुं त्रिलोकनाथेन इन्द्रेण आनतं पादपङ्कजं यस्य तादृशं भगवन्तम् अच्युतं नारायणं न यक्ष्यन्ति न पूजयिष्यन्ति। वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात्।

(ल) कलाविति। कलौ जनिष्यमाणानाम् उत्पत्स्यमानानां

वैरित्यारभ्य पश्यन्ति ते मे रुचिराण्यम्ब ! सन्तः प्रसन्नहासा रुणलोचनानि। रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्तीति” तद्रूपतैव तेषां मोक्षो न तु कैवल्य-मत एव त एवमूचिरे कपिलपादाः। “भक्तिः सिद्धेर्गरीय-सीति”। अतः खलु कलौ नाम नामसङ्कीर्त्तनमेव पुरुषार्थसाधकताऽतिरस्कारिपुरस्कारि रत्याख्यभावस्य। (भ)

पारि। भाव! भावत्कं वचनमिदम् अतीव विस्मापकं यतो भगवन्नाम मुक्तिमेव जनयतीति शास्त्रं तदन्यथा चेत्। उच्यते। वस्तुतस्तु “नारायणेति म्रियमाण इयाय मुक्तिमिति” श्रूयते। (म)

---

(भ) तैरिति दर्शनीयः अवयवः येभ्यः तादृशैः तैः अस्मद्दर्शन-प्राप्तियोग्यैरित्यर्थः। पश्यन्तीति हे अम्ब! मातः! ते सन्तः साधवः मे मम प्रसन्नः हासो येषां तादृशानि तथा अरुणे रक्ते लोचने येषां तानि दिव्यानि वरप्रदानि रूपाणि पश्यन्ति साक्षात्-कुर्वन्ति तथा साकं सह तैः रूपैरिति शेषः स्पृहणीयां मनोज्ञां वाचं वदन्ति। तद्रूपता सालोक्यरूपेत्यर्थः। भक्तिः भगवति प्रेमभावः सिद्धेः कैवल्यरूपाया मुक्तेः गरीयसी श्रेयसी, कैवल्यं हि ब्रह्मीभावः का तत्र सुखाशा? सालोक्ये तु सततमेव तं साक्षात्कुर्वन्तः परमा-नन्दमनुभवन्तीति भावः। पुरुषार्थसाधकतेति पुरुषार्थस्य सालोक्य-रूपमुक्तेः साधकतां न तिरस्करोति नाद्रियतेति तथोक्तं प्रत्युत पुरः करोति प्रकटयतीति तथोक्तञ्च इत्यर्थः रत्याख्यभावस्य प्रेमभावस्य इत्यर्थः।

(म) भावत्कं भवत इदं भवदीयमित्यर्थः। विस्मापकं विस्मय-जनकम्। नारायणेति म्रियमाणः मुमूर्षुर्जनः नारायण! इति वदन्निति शेषः मुक्तिम् इयाय प्राप।

सूत्र। विहस्य। मुक्तिशब्दोऽत्र पार्षदस्वरूपपरः। यतस्तत्रैव "सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्त्तिनामिति"। इदमेव श्रीकृष्णचैतन्यमतमन्यमतमपास्तं करोति। अनुतिष्ठन्ति चैतत् सुकृतिनः कृतिनः (य)। अतस्तदवतारेण कलिरप्ययं कृतार्थः।

पारि। कथमेतत्।

कलौ न राजन्! जगतां परं गुरुं
त्रिलोकनाथानतपादपङ्कजम्।
प्रायेण मर्त्या भगवन्तमच्युतं
यक्ष्यन्ति पाषण्डविभिन्नचेतसः॥ (र)

इति निन्दाश्रवणात्।

सूत्र। तत् तु श्रीकृष्णावतारतः पूर्वपूर्वकलिपरम्।
अन्यथा,

कलौ जनिष्यमाणानां दुःखशोकतमोनुदम्।
अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद् यशः॥ (ल)

---

(य) सद्य इति सद्यः सपदि भगवतः पार्श्ववर्त्तिनां पार्श्वचराणां स्वरूपं जगृहे। अपास्तं करोति निराकरोति। एतत् मतं सुकृतिनः पुण्यवन्तः कृतिनः कार्य्यकुशला नराः अनुतिष्ठन्ति आश्रयन्ति।

(र) कलाविति। हे राजन्! कलौ प्रायेण बाहुल्येन पाषण्डैः विधर्म्मिभिः विभिन्नं विकृतं चेतः येषां तादृशाः मर्त्त्याः मानवाः जगतां परं गुरुं त्रिलोकनाथेन इन्द्रेण आनतं पादपङ्कजं यस्य तादृशं भगवन्तम् अच्युतं नारायणं न यक्ष्यन्ति न पूजयिष्यन्ति। वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात्।

(ल) कलाविति। कलौ जनिष्यमाणानाम् उत्पत्स्यमानानां

कलौ खलु भविष्यन्ति नारायणपरायणाः ।
कृतादिषु प्रजा राजन् ! कलाविच्छन्ति सम्भवम् ॥ (व)

इत्यादीनि भाविचैतन्यावतारपराणि वचनानि विरुध्येरन् । (श)

पारि । कथमेतान् न बाधते कलिः । (ष)

सूत्र । कृष्णपक्षेऽनुदिवसं चयमाप्नोति यः सदा ।
दोषाकरो बाधतां किं स वै विष्णुपदाश्रितान् ॥ (स)

नेपथ्ये । कस्त्वं भो ! दोषाकरत्वेन मां जुगुप्सयन् (ह) सुधाकरमुपस्थापयसि ।

भक्तानाम् अनुग्रहाय अनुकम्पायै दुःखशोकतमोनुदं सुपुण्यम् अतिपावनं यशः व्यतनोत् विस्तारयामास नारायण इति शेषः ।

(व) कलाविति । कलौ नराः नारायणः परम् अयनम् आश्रयः येषां तादृशाः हरिभक्ता इत्यर्थः भविष्यन्ति । हे राजन् ! कृतादिषु सत्यत्रेताद्वापरेषु सम्भूता इति शेषः प्रजाः कलौ सम्भवं जन्म इच्छन्ति तत्र नारायणपरत्वेन तेषां सद्गतिलाभसम्भवादिति भावः ।

(श) भावीति भविष्यतः चैतन्यावतारस्य सूचकानीत्यर्थः । विरुध्येरन् विरोधमापद्येरन्नित्यर्थः ।

(ष) बाधते पीड़यति धर्मात् भ्रंशयतीत्यर्थः ।

(स) कृष्णपक्षे इति । यः सदा कृष्णपक्षे बहुलपक्षे अन्यत्र विष्णुभक्ते अनुदिवसं चयम् आप्नोति लभते, स वै निश्चितं दोषाकरः चन्द्रः अन्यत्र अधर्माकरः विष्णुपदाश्रितान् आकाशस्थान्, वियद् विष्णुपदं वापीत्यमरः । अन्यत्र कृष्णभक्तान् किं बाधतां पीड़यतु? विष्णुभक्तपीड़नं न कलेः साध्यमिति भावः ।

(ह) जुगुप्सयन् गर्हयन् ।

सूत्र ! निपुणं निभाल्य । मारिष ! यथाप्रस्तावमयममर्षो-त्कर्षहृदयोऽदयोदयो ह्यधर्मेण ( च ) प्रियसखेन सममित एवाभिवर्त्तते तदितोऽपसराव: । इति निष्क्रान्तौ ।

( इति प्रस्तावना ) । ( क )

ततः प्रविशत्यधर्मेणोपास्यमानः कलिः ।

कलिः । सखे अधर्म ! सत्यमेवाह चारणाचार्य्यः ।

अधर्मः । किं तत् ।

कलिः । कृष्णपक्षे इत्यादि पुनः पठति ।

अध । सखे युगराज ! दोषाकर इति भवन्तमेवा-ऽऽक्षिप्तवानयमधमः । आः पाप कुशील कुशीलव ! ( ख ) शृणु रे ।

शौचाचारतपःक्षमाशमदमैः सार्द्धं विवेकादिभिः
सामन्तैरपि येन धर्मनृपतिर्निर्मूलमुन्मूलितः ।

---

(च) निभाल्य अवलोक्य। यथाप्रस्तावं प्रस्तावानुसारेण इत्यर्थः। अयं कलिः अमर्षं क्रोधम् उत्कर्षतीति तथोक्तं हृदयं यस्य तादृशः क्रुद्ध इत्यर्थः। नास्ति दयायाः उदयः उद्रेकः यस्य तथाभूतः निर्दय इत्यर्थः। अधर्मेण पापेन ।

( क ) प्रस्तावना । प्रस्ताव्यते प्रसङ्गात् आनीयते प्रकृतमनयेति आमुखापरनाम्नी प्रकृतार्थसूचिका वाक्यावलीत्यर्थः। तदुक्तं दर्पणे, नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि चेति ।

( ख ) आक्षिप्तवान् तिरस्कृतवान् । कुशील कुचरित्र ! कुशीलव नट ! ।

( ग ) शौचेति । येन एकेन मया शौचं वाह्याभ्यन्तरमलशुद्धिः

ये दृष्टैव पुनन्ति तेऽपि सहसैवाङ्गीकृतास्तत्प्रिया
येनैकेन मया स यस्य वशगः सोऽयं कलिर्निन्द्यते ॥ (ग)

तिष्ठ रे पाप ! तिष्ठ ।

यतो धर्मस्तत कृष्णो यतः कृष्णस्ततो जयः ।
धर्माभावे कुतः कृष्णः पक्षे यस्य कलेः क्षयः ॥ (घ)

कलिः । सखि ! नायमाक्षिप्यतामवधारय । यतः

गतः स कालो मम साम्प्रतं सखे !
हृतप्रभावोऽस्मि कुमारकादतः ।
महौषधेरङ्कुरनिर्गमादिव
क्षतप्रभस्तक्षकनागपुङ्गवः ॥ (ङ)

आचारः वैदिककर्मानुष्ठानं तपः चान्द्रायणादिकं व्रतं क्षमा मत्यपि अपराधे अपरेषां दोषमार्जनं शमः शान्तिः दमः इन्द्रियाणां विषयेभ्यः निवर्त्तनं तैः तथा विवेकादिभिः सामन्तैः अधीश्वरन्वपैरपि सार्द्धं धर्मन्वपतिः धर्मराजः निर्मूलं यथा तथा उन्मूलितः विध्वंसित इत्यर्थः ये च दृष्ट्वैव पुनन्ति पवित्रीकुर्वन्ति लोकानिति शेषः तेऽपि तस्य धर्मन्वपतेः प्रियाः साधव इत्यर्थः सहसैव अङ्गीकृताः तिरस्कृता इत्यर्थः सः अधर्मः यस्य वशगः किङ्कर इत्यर्थः सोऽयं कलिः निन्द्यते ? शार्दूलविक्रीड़ितं वृत्तम् ।

(घ) यत इति । यतः यत्र धर्मः तिष्ठतीति शेषः ततः तत्र कृष्णः नारायणः तिष्ठतीति शेषः, यतः यत्र कृष्णः ततः तत्र जयः उत्कर्षलाभ इत्यर्थः स्यादिति भावः । धर्मस्य अभावे सति कृष्णः कुतः ? यस्य कृष्णस्य पक्षे कालः क्षयः भवतीति शेषः यदा धर्म एव निर्मूलितः तदा कथं कृष्णस्तिष्ठेत् कथं वा तत्पक्षे कलिपराभव इति भावः ।

(ङ) गत इति । हे सखे ! मम स कालः प्रादुर्भावसमय

अधर्मः । युगराज ! कोऽसौ कुमारकः किं कुत्सितो मारकः किं कोः पृथिव्या वा मारकः । (च)

कलिः । नोभयम् । नोभयं नो भयं कर्त्तुमीष्टे किन्तु नवद्वीपे जगन्नाथनाम्नो मिश्रपुरन्दराज्जातः शच्यां कुमारोऽयं मम मर्माणि क्रन्तति । (छ)

अध । विहस्य । हंहो युगराज !

यस्योच्चैर्भुजदण्डचण्डिममहामार्त्तण्डतेजोभयान्-
मूको घूक इवाद्रिकन्दरगतः पादैकशेषो वृषः ।
स त्वं मद्विधभृत्यसेवितपदो भूदेवबालादतो
भीतिं विन्दसि हन्त ! कोऽयमतुलश्चित्तस्य ते विभ्रमः ॥ (ज)

---

इत्यर्थः गतः । साम्प्रतम् अतः अस्मात् कुमारकात् महौषधेः चक्रुरस्य प्ररोहस्य निर्गमात् जातप्रभः निस्तेजाः तक्षकनागपुङ्गव इव नागराजस्तक्षक इव हृतप्रभावः निष्प्रताप इत्यर्थः अस्मि । वंशस्थविलं वृत्तम् । उपमालङ्कारः ।

(च) मारकः मारयतीति मारकः विनाशकः ।

(छ) नोभयम् उभयं कुत्सितो मारक इति कोः पृथिव्याः मारक इति च न इत्यर्थः । उभयम् एतद्द्वयमित्यर्थः नः अस्माकं भयं कर्त्तुं जनयितुं न ईष्टे न प्रभवति । मिश्रपुरन्दरात् मिश्रश्रेष्ठादित्यर्थः । क्रन्तति छिनत्ति ।

(ज) यस्येति । वृषः धर्मः यस्य तव उच्चैः महान् यः भुजदण्डः तस्य यश्चण्डिमा चण्डत्वं स एव महान् मार्त्तण्डः सूर्यः तस्य तेजसः तापात् यत् भयं तस्मात् पादैकशेषः एकाङ्घ्रिणा स्थित इत्यर्थः घूक इव पेचक इव मूकः निःशब्दः अक्षम इत्यर्थः अद्रिकन्दरगतः पर्वतगुहां प्राप्तः, यथा कोऽपि शत्रुजितः पर्वतगुहाभ्यन्तरे तिष्ठति तद्वदिति भावः । सः तथा प्रभाववान् तथा मद्विधेन

कलिः। सखे ! नायं केवलो भूदेवबालः, अपितु बाल-देवदेवः। (झ) तथाहि,

हरिहरि ! हरिभक्तियोगशिक्षा-
सरसमना जगदेव निष्पुनानः।
हरिरिह कनकाब्जकान्तकान्ति-
र्द्विजभवनेऽवततार बाललीलः॥ (ञ)

तथाच,

जायमानः पूर्णिमायामुपरागच्छलेन यः।
ग्राहयामास युगपद्धरेर्नाम जगज्जनान्॥ (ट)

---

भृत्येन किङ्करेण सेवितपदः सन् अतः अस्मात् भूदेवबालात् विप्रकुमारात् भीतिं विन्दसि प्राप्नोषि ? हन्त खेदे, अयं ते तव चित्तस्य मनसः अतुलः असमः विभ्रमः विशिष्टा भ्रान्तिरित्यर्थः कः ? न किमपि भयकारणमस्तीति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

(झ) बालदेवदेवः बालकमूर्त्तिः देवदेवः देवाधीश्वर इत्यर्थः।

(ञ) हरीति। हरिहरि इति खेदसूचकमव्ययं, हरिः नारायण एव हरौ निजतत्त्वे या भक्तिः प्रेम तस्याः योगः उपायः तस्य शिक्षायाम् उपदेशे सरसं मनो यस्य तादृशः एव जगत् निष्पुनानः निश्चयेन पवित्रीकुर्वन् कनकाब्जस्येव कान्ता रम्या कान्तिर्यस्य तथाभूतः गौराङ्ग इत्यर्थः तथा बाला अभिनवा लीला विलासो यस्य तथाविधः नवीनां लीलापद्धतिं प्रकटयन्नित्यर्थः इह द्विजभवने ब्राह्मणगृहे अवततार आविर्बभूव। पुष्पिताग्रावृत्तम्, अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात्।

(ट) जायमान इति। यः हरिः पूर्णिमायां जायमानः गौराङ्गत्वेनाविर्भवन्नित्यर्थः उपरागः राहुकर्त्तृकः चन्द्रसूर्ययोरन्यतरस्य ग्रासः स एव छलं व्याजः प्रसङ्ग इति यावत् तेन जगज्जनान् पृथिवीस्थान्

अध । अयमपि ते भ्रमः । यदिदं काकतालीयन्यायेनोपपन्नमन्यथा कल्पयसि (ठ) । शृणु भोः ! शृणु ।

महाप्रभावाः सुमहासहायाः
क्व यूयमुच्चैश्चिरबद्धमूलाः ।
क्वाऽयं कडम्बो द्विजवंशजात-
स्ततोऽपि भीः कोऽयमहो ! भ्रमस्ते ॥ (ड)

कलिः । सखे ! यथार्थमाकलय । (ढ)

स्वयम्प्रकाशाः किल कालदेश-
वयोऽन्वयादौ न हि सव्यपेक्षाः ।

---

सर्वान् जनान् युगपत् समकालं हरेर्नाम ग्राहयामास हरिमन्त्रेण दीक्षितवानित्यर्थः ।

(ठ) काकतालीयन्यायेनेति काकगमनेन तालपतनमिव अतर्कितम् असम्भवनीयं कार्य्यं यत् सहसा सिध्यति असौ काकतालीयन्यायः तेन, यथा परिणततालफलस्य पातसमकाले एव तदुपरि काकागमनात् जनाः काकगमनेनैव तालस्य पातः जात इति मन्यन्ते परं वस्तुगत्या तदलीकं तथा बालककर्तृकं जगतीस्थजनानां हरिनामदीक्षणमलीकमिति भावः ।

(ड) महाप्रभावा इति । महाप्रभावाः सुमहासहायाः प्रबलसहायसम्पन्नाः उच्चैरतिशयेन चिराय बद्धं दृढं मूलं येषां तादृशाः यूयं क्व ? अयं द्विजवंशजातः कडम्बः कोरकः ब्राह्मणशिशुरित्यर्थः क्व ? क्वद्वयं महदन्तरं सूचयति । ततो बालकादपि भीः भयम्, अहो ! आश्चर्य्यं ते तव कोऽयं भ्रमः ? उपजातिवृत्तम् ।

(ढ) आकलय विवेचय ।

(ण) स्वयमिति । स्वयं प्रकाशन्ते विराजन्ते इति तथोक्ताः जनाः किल निश्चयेन कालः समयः देशः स्थानं वयः बाल्यादिकम्

उद्यातमात्रः खलु बालसूर्य्यो
गाढ़ं तमस्काण्डमपाकरोति ॥ (ण)

नाप्ययमसहायः। यतः खलु स्वावतारात् पूर्व्वमेवाय-मवनितले प्रियपार्षदनिवहानाविर्भावयामास। (त)

तथाहि,

अद्वैताचार्य्यवर्य्यो भगवदनवमं शाम्भवं धाम साक्षा-
न्नित्यानन्दावधूतो मह इह महितं हन्त साङ्कर्षणं यः।
श्रीकान्तश्रीपतिभ्यामपि सह विजयी श्रीलरामेण सार्द्धं
कोऽपि श्रीवासनामा द्विजकुलतिलको नारदीयं हि तेजः (थ

---

अन्वयः कुलञ्च आदि यस्य तस्मिन् विषये मत्यपेक्षाः विशिष्टया अपेक्षया सह वर्त्तमानाः न हि नैव भवन्तीति शेषः। बालसूर्य्यः उद्यातमात्रः उदित एव खलु गाढ़ं सान्द्रं तमस्काण्डं तिमिर-राशिम् अपाकरोति ध्वंसयति। विशेषेण सामान्यसमर्थनरूपोऽय-मर्थान्तरन्यासः। तदुक्तं दर्पणे, सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरे-णार्थान्तरन्यासोऽष्टधा ततः इति। उपजातिवृत्तम्।

(त) प्रियपार्षदनिवहान् प्रियसहचरसङ्घान्।

(थ) अद्वैतेति। अद्वैतनामा आचार्य्यवर्य्यः गुरूणामग्रणीः भगवतः नारायणात् अनवमम् अन्यूनं साक्षात् शाम्भवं धाम स्वयं शम्भुरेव अद्वैतनाम्ना अवतीर्ण इत्यर्थः। यः नित्यानन्दो नाम अवधूतः सन्न्यासी स इह जगति महितं पूजितं साङ्कर्षणं हालधरं महः तेजः हन्तेति खेदे, बलदेव एव नित्यानन्दनाम्ना अवतीर्ण इत्यर्थः। श्रीकान्तश्रीपतिभ्यां तथा श्रीलरामेण श्रीमता रामेण सार्द्धं सह विजयी श्रीवासनामा कोऽपि द्विजकुलतिलकः ब्राह्मणवंशललाट-भूषणभूतः नारदीयं तेजः हि, स्वयं नारद एव श्रीरामनाम्ना अवतीर्णः,

अपिच,

आचार्य्यरत्नहरिदासमुरारिगङ्गा-
दासादयः सह गदाधरपण्डिताद्याः ।
विद्यानिधिप्रभृतयोऽपि च वासुदेवा-
ऽऽचार्य्यादयः सह मुकुन्दमुखास्तथान्ये ॥ (द)

अपिच,

श्रीवक्रेश्वरवान् नृसिंहसहितः शुक्लाम्बरेणायुतः
श्रीदामोदरशङ्करौ च जगदानन्दञ्च मुख्यं दधत् ।
नानाभावविलासलास्यरसिकः प्रेमास्पदानाङ्गणो
यद्बाल्यावधिबान्धवः स जगतीत्राणाय भूमिं गतः ॥ (ध)

श्रीकान्तश्रीपतिरामास्तत्सहचरा इत्यर्थः । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तिता सेति तल्लक्षणात् ।

(द) आचार्य्येति । आचार्य्येषु रत्नानीव आचार्य्यरत्नानि हरिदासमुरारिगङ्गादासादयः, गदाधरपण्डिताद्यैः सह वर्त्तमानाः विद्यानिधिप्रभृतयः तथा वासुदेवाचार्य्यादयः सहमुकुन्दमुखाः मुकुन्दप्रभृतिभिः सह वर्त्तमानाः, अन्येऽपि मत्सहाया इति शेषः । वसन्ततिलकं वृत्तं, उक्तं वसन्ततिलकं तभजा जगौ ग इति लक्षणात् ।

(ध) श्रीति । श्रीवक्रेश्वरवान् नृसिंहसहितः शुक्लाम्बरेण आयुतः सहितः श्रीदामोदरशङ्करौ मुख्यं प्रधानं जगदानन्दञ्च दधत् दधानः वक्रेश्वरनृसिंहशुक्लाम्बरदामोदरशङ्करजगदानन्दसहित इत्यर्थः नाना विविधाः ये भावविलासाः प्रेमविजृम्भितानि तेषां लास्येषु ताण्डवेषु रसिकः निपुण इत्यर्थः प्रेमास्पदानां भगवत्परायणानां गणः वर्गः यस्य बाल्यावधि आशैशवं बान्धवः सहचर इत्यर्थः सः हरिः जगतीत्राणाय पापेभ्यः जगद्रक्षणाय भूमिं गतः पृथिव्यामवतीर्ण इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ।

अध। युगराज ! कथमयमीश्वर इति निरणायि। (न)

कलिः। सखे ! सकलजनान्तःकरणाकर्षित्वं हि भगवतोऽसाधारणं लिङ्गम् आनन्दमयत्वात्। आनन्दमयो हि जीवान् आनन्दयितुमर्हति। यथा प्रचुरधनः परमपि धनिनं करोति। एतावत्त्वं हि परमैश्वरं लिङ्गमस्य (प) यद् बाल एव सकलजनचित्तचमत्कारकारकः। तथाहि।

शिवशिव ! शिशुतायामेव गाम्भीर्य्यधैर्य्य-
स्मृतिमतिरतिविद्यामाधुरीस्निग्धताद्याः।
निखिलजनविशेषाकर्षिणो ये गुणास्तै-
रिह न विदधतां के विष्णुरित्येव बुद्धिम्॥ (फ)

अध। अनैकान्तिकमिदम्। प्रकृष्ट एव कश्चिज्जीवो भवतु। (ब)

(न) निरणायि निर्णीतः निर्द्धारित इत्यर्थः।

(प) असाधारणम् असामान्यं लिङ्गं लक्षणम्। प्रचुरधनः प्रभूतैश्वर्य्यः। एतावत्त्वम् ईदृग्भावः परं महत् ऐश्वरम् ईश्वरसम्बन्धि लिङ्गं चिह्नम्।

(फ) शिवेति। शिवशिव इति खेदसूचकमव्ययम्। शिशुतायां शैशव एव गाम्भीर्य्यादयः निखिलजनानां विशेषेण आकर्षिणः ये गुणाः तैः इह जगति के जनाः विष्णुरेव नारायण एवायमिति बुद्धिं न विदधतां न कुर्वन्तु अपितु सर्व्व एवास्मिन् नारायणबुद्धिं दधतीत्यर्थः।

(ब) अनैकान्तिकम् अनिश्चितम्। प्रकृष्टः प्रकर्षवान् महान् इत्यर्थः।

कलिः । मैवम् ।

यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोऽंशसम्भवम् ॥ (भ)

इति भगवतः सामान्योक्तेस्तथाविधाऽयुतगुणवत्तया भगवत्तैवास्य सिद्धेति वयमेव प्रमाणम् । यद् वयं जीवतो न बिभीमः । (म)

अथ । स किल कृतोद्वाह इति श्रूयते ।

कलिः । अथ किम् ।

अवतरति जगत्यामीश्वरे हन्त ! तस्या-
प्यवतरति हि शक्तिः काप्यसौ रूपिणी श्रीः ।
अनुकृतनरलीलां तामुरीकृत्य नीत्वा
कतिपयदिनमन्तर्धापयामास देवः ॥ (य)

(भ) यदिति । यत् यत् विभूतिमत् ऐश्वर्य्यवत्, विभूतिर्भूतिरैश्वर्य्यमित्यमरः । श्रीमत् शोभमानं वा ऊर्जितं तेजिष्ठं सत्त्वं जीवः तत्तदेव त्वं मम तेजोऽंशसम्भवं मत्तेजःसम्भूतम् अवगच्छ जानीहि । इति अर्जुनं प्रति भगवत उक्तिः ।

(म) तथाविधायुतगुणवत्तया तादृशबहुसंख्यकगुणशालितया भगवत्ता ईश्वरत्वम् । वयमेव प्रमाणं निदर्शनभूता इत्यर्थः । जीवतः जीवात् । अस्माकं भगवदंशसम्भूतत्वादिति भावः ।

(य) अवतरतीति । जगत्याम् ईश्वरे अवतरति सति हन्त हर्षे तस्य शक्तिः रूपिणी मूर्त्तिमती कापि अनिर्वचनीया असौ श्रीरपि अवतरति हि अवतीर्णा भवत्येव । देवः नारायणः अनुकृता नरलीला मानवी लीला यया तादृशीं तां श्रियम् उरीकृत्य अङ्गीकृत्य गृहीत्वेत्यर्थः कतिपयदिनं नीत्वा यापयित्वा अन्तर्धापयामास अन्त-

तथाच तस्या मानुषीभावः।

"देवत्वे देवरूपा सा मानुषत्वे च मानुषी" इति।

किञ्च, भुवोऽंशरूपामपराञ्च विष्णु-
प्रियेति विश्रुतां परिणीय कान्ताम्।
वैराग्यशिक्षां प्रकटीकरिष्यन्
हास्यत्यथैनां स नवां नवीनः॥ (र)

अपिच, अस्याग्रजस्त्वकृतदारपरिग्रहः सन्
सङ्कर्षणः स भगवान् भुवि विश्वरूपः।
स्वीयं महः किल पुरीश्वरमापयित्वा
पूर्वं परिव्रजित एव तिरोबभूव॥ (ल)

अथ। क्षणं विचिन्त्य स्वगतम्। अहो! कष्टमिव प्रति-

ष्ठितां कारयामास। मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगि-लोकैरिति तल्लक्षणात्।

(र) भुव इति। स नवीनः नवावतारः हरिरित्यर्थः भुवः पृथिव्याः अंशरूपां विष्णुप्रिया श्रीरिति विश्रुतां ख्याताम् अपराञ्च कान्तां परिणीय उद्वाह्य अथ कियद्दिनानन्तरमित्यर्थः वैराग्यशिक्षां वासनाशान्तिविधायिनीं शिक्षाम् उपदेशं प्रकटयिष्यन् आविष्करिष्यन् एनां नवां कान्तां हास्यति परित्यक्ष्यति। उपजातिवृत्तम्।

(ल) अस्येति। अस्य श्रीचैतन्यस्य अग्रजः ज्येष्ठः स भगवान् विश्वरूपः सङ्कर्षणः बलदेवः अकृतदारपरिग्रहः विवाहमकुर्वन्नित्यर्थः पुरीश्वरं पुरीस्थितम् ईश्वरं स्वीयं महः तेजः आपयित्वा प्रापय्य पुरीश्वरे तेजो निधायेत्यर्थः पूर्वं चैतन्यप्रव्रजनात् प्राक् एव परिव्रजितः प्रव्रज्यां गतः सन् तिरोबभूव अन्तर्दधे। वसन्ततिलकं वृत्तम्।

भाति । प्रतिभाऽतिरेकेणैवाहमन्यथाकुर्वन्नस्मि (व) । किन्तु,

ग्लपयति हृदयं मे स्रंसयत्यङ्गमङ्गं
विधुरयति विधेयं सर्वमेवेन्द्रियाणाम् ।
स्मृतिमहह ! लुनीते हन्त ! धैर्य्यं धुनीते
न हि महदभिधानादस्ति मे कष्टमन्यत् ॥ (श)

कलिः । सखे ! अनुभूतमिदानीमनुभूयताम् । (ष)

अध । सखे ! अस्त्युपायोऽपायोज्झितः कश्चिदस्य पराभवाय भवाय चास्माकम् । (स)

कलिः । कोऽसौ ।

अध । कामादयो ये षडमी अमात्या-
स्तेषामशक्यं न हि किञ्चिदास्ते ।

---

(व) प्रतिभातिरेकेण बुद्धिमाहात्म्येन अन्यथाकुर्वन् धर्मविनाशने उद्युक्तोऽस्मीत्यर्थः ।

(श) ग्लपयतीति । महताम् अभिधानात् नामोच्चारणात् अन्यत् अपरं कष्टं मे मम न हि अस्ति, महात्मनां नामकीर्त्तनस्य अधर्मनाशकत्वादिति भावः । तथाहि, मे मम हृदयम् अन्तःकरणं ग्लपयति ग्लानिं नयति, सर्वत्र महदभिधानं कर्त्तृपदं योज्यम् । अङ्गम् अङ्गं प्रत्यङ्गमित्यर्थः स्रंसयति शिथिलयतीत्यर्थः, इन्द्रियाणां विधेयं वश्यं सर्वमेव वस्तु विधुरयति आकुलयति । अहह खेदसूचकमव्ययमेतत् स्मृतिं लुनीते भ्रंशयति तथा हन्त खेदे धैर्य्यं धुनीते कम्पयति द्योतयति । मालिनीवृत्तम् ।

(ष) अनुभूतं मयेति शेषः । अनुभूयतां त्वयेति शेषः, उभयत्र कष्टमिति कर्मपदमूहनीयम् ।

(स) अपायोज्झितः निर्बाध इत्यर्थः । अस्य महदभिधानस्य धर्मस्य वा । भवाय मङ्गलाय ।

येषामखण्डाद् भुजदण्डदर्पा-
देकातपत्रं तव विश्वमेव ॥ (छ)

सम्प्रति च ते दिग्विजयतः षड़ेव निवृत्ताः सन्ति। एकैके खलु एकैकां दिशं विजित्य निष्कण्टकमेव जगत् कृत्वा स्वामिनस्तव पादमूलमधुना धुनानाः (ज) सन्देहं समागमिष्यन्ति। तानेवास्य पराभवाय सर्वानेव युगपन्नियोजयिष्यामः। तथाहि, तेषां पराक्रमं वर्णयामः।

यद्दोर्दर्पात् स्वयमुपगतः पद्मयोनिः स्वपुत्री-
मात्मारामोऽपि च पशुपतिर्मोहिनीं धावति स्म।
सोऽयं कामस्त्रिभुवनजये यस्य विख्यातिरुच्चैः
स्त्रीणां क्रीडोतव इव परे तत्र केऽमी वराकाः? ॥(झ)

(छ) कामादय इति। ये अमी कामादयः कामक्रोधलोभमदमात्सर्यादीत्यर्थः षट् अमात्याः सचिवाः भवत इति शेषः तेषाम् अशक्यम् असाध्यं किञ्चिदपि कर्मेति शेषः न हि अस्ति, सर्वमेव एते कर्त्तुमीशते इति भावः। तेषां कामादीनाम् अखण्डात् अस्खलितादित्यर्थः भुजदण्डदर्पात् बाहुबलमदात् विश्वं सर्वमेव जगत् तव एकातपत्रम् एकच्छत्रं सर्वस्मिन् संसारे तवैव आधिपत्यमिति भावः। इन्द्रवज्राछन्दः, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति तल्लक्षणात्।

(ज) दिग्विजयतः दिशां विजयात् विजयं कृत्वेत्यर्थः ल्यबर्थे पञ्चमी। धुनानाः कम्पयन्तः निराकुर्वन्त इत्यर्थः तवाधिपत्ये इति शेषः।

(झ) यदिति। स्वयं पद्मयोनिः ब्रह्मा यस्य कामस्य दोर्दर्पात् बाहुबलात् स्वपुत्रीं स्वां कन्यां सन्ध्याम् उपगतः रन्तुम् अभिययौ इत्यर्थः तथा आत्मारामोऽपि ब्रह्मपरायणोऽपि पशुपतिः शङ्करः मोहिनीम् असुरमोहनार्थं मोहनमूर्त्तिं हरिणा मायारचितां

कलिः । सखे ! अज्ञोऽसि भगवत्तायाः । (ख)

> नारायणस्यैष पुरा पराभवे
> गतः स्वयं तेन पराजितोऽभवत् ।
> न वै जगन्मोहनमोहनं हरिं
> देहभृतो मोहयितुं समीशते ॥ (ग)

तथापि ते मयैव नियुक्ताः सन्ति प्रतिज्ञातञ्च तैः सति शिशुतापगमेऽस्माभिरयं (घ) पराभवनीय इति तदप्यसम्भाव्यमेव । यतः,

---

नारीं धारति स तथा त्रिभुवनजये यस्य कामस्य लब्धैः महती विख्यातिः विशिष्टा कीर्तिः अस्तीति शेषः, सः अयं कामः तव सहाय इति शेषः तत्र कामे स्त्रीणां योषितां क्रीडोतव इव क्रीडामार्जारा इव परे शत्रवः अमी वराकाः तुच्छा इत्यर्थः अर्हतादयः के ? कामसमीपे एते सर्व एव पराजीयन्ते इति भावः । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् ।

(ख) भगवत्तायाः भगवद्भावस्य ऐश्वर्यस्य इत्यर्थः ।

(ग) नारायणस्येति । एषः कामः पुरा पूर्वस्मिन् काले नारायणस्य पराभवे पराजयार्थमित्यर्थः गतः सन् तेन नारायणेन स्वयं पराजितः अभवत् । पुरा नारायणमृषिं प्रलोभयितुं कामप्रेरिताः अप्सरसः वदरिकाश्रमं तत्तपोवनं गताः । नारायणस्तु तासामभिप्रायं ज्ञात्वा तरायमवगम्य स्वात् ऊरुदेशात् ताभ्यः अपि परमसुन्दरीं कामपि दिव्याङ्गनां निष्काश्य ताभ्यः प्रायच्छत् । तान्तु अवलोक्य ताः पराजिताः लज्जिताश्च स्वं स्वं रूपं निन्दन्त्यः तयैव सह दिवं प्रस्थिता इति पुराणवार्त्तानुसन्धेया । देहभृतः देहिनः कोऽपीति शेषः जगतां मोहनस्य कामस्यापि मोहनं तं हरिं मोहयितुं न वै नैवेत्यर्थः ईशते समर्था भवन्तीत्यर्थः ।

(घ) अयं शिशुकुमारः चैतन्यदेव इत्यर्थः ।

आरम्भ एव वयसोऽभिनवस्य नव्यां
लक्ष्मीमिव द्युतिमतीं स विहाय भार्य्याम् ।
सम्पालयन्निजनिदेशमथो गयायां
यातश्चकार जनकस्य परेतकार्य्यम् ॥ (ङ)

अपिच, तत्रैव दैववशतः समुपेयिवांस-
न्यासीन्द्रमीश्वरपुरीसुररीचकार ।
शिक्षागुरुर्गुरुतया दशवर्णविद्या-
मासाद्य माधवपुरीन्द्रवशां वशीशः ॥ (च)

अपिच, आगत्य स स्वभवनं प्रियसम्प्रदायैः
श्रीवासरामहरिदासमुखैः परीतः ।
गायन्नटन्नभिनयन् विकिरन्नमन्द-
मानन्दसिन्धुषु निमज्जयति त्रिलोकीम् ॥ (छ)

(ङ) आरम्भ इति । सः चैतन्यः अभिनवस्य वयसः आरम्भे एव नव्यां नवीनां लक्ष्मीमिव द्युतिमतीं सुन्दरीं भार्य्यां विहाय परित्यज्य अथो अनन्तरं निजनिदेशं स्वां प्रतिज्ञां सम्पालयन् निष्पादयन् गयायां यातः गतः सन् जनकस्य पितुः जगन्नाथमिश्रस्य परेतकार्य्यं प्रेतक्रियाम् और्द्ध्वदैहिकं कर्म इत्यर्थः चकार अनुष्ठितवान् । वसन्ततिलकं वृत्तम् ।

(च) तत्रेति । वशिनां जितेन्द्रियाणां ईशः श्रेष्ठः शिक्षागुरुः सः चैतन्यः तत्रैव गयायामेव दैववशतः सहसा समुपेयिवांसम् उपस्थितं न्यासीन्द्रं योगीन्द्रं कमपीति शेषः गुरुतया आचार्य्यत्वेन आसाद्य प्राप्य ईश्वरपुरीं माधवपुरीन्द्रवशां दशवर्णविद्याञ्च उररीचकार अङ्गीकृतवान् । वसन्ततिलकं वृत्तम् ।

(छ) आगत्येति । सः चैतन्यः स्वभवनम् आगत्य श्रीवासरामहरिदासमुखैः प्रियसम्प्रदायैः प्रियसहचरैः परीतः समवेतः गायन् सङ्गीतं कुर्वन् नटन् नृत्यन् अभिनयन् भावं प्रदर्शयन् तथा अमन्दं

कथमत्र कामवराकोऽवसरमुपैतु । (ज)

अथ । सखे ! मैवं वादीः ।

उग्रैरुग्रैस्तपोभिः शमदमनियमैर्धारणाध्यानयोगै-
र्युक्ता आपारमेष्ठ्यं त्रिभुवनविभवे छर्दितान्नावबोधाः ।
कन्दर्पादीनमित्रानपि सहजतया दुर्ज्जयानेव जित्वा
येन स्पृष्टा निपेतुः कथय कथमसौ केन कोपो विजेयः ॥ (झ)

कलिः । सखे ! कोपो वराकस्तस्य किं करोतु । तथाहि, यः खलु विविध-विधर्म्म नर्म्म-सचिवयोः सप्रपञ्च-पञ्च-महापाप-पापच्यमान-मानसयोः सकल-लोकोपप्लवमात्र-मात्रयोः परमलुण्ठाकयोः कयोश्चिद्ब्राह्मणचेलयोः कुचेलयोः कुकर्म्मकर्म्मठयोः सोदर्य्ययोः कदर्य्ययोः कपट-पटहाऽऽकार-

• विरुदन् सन् आनन्दसिन्धुषु प्रमोदनदीषु त्रिलोकीं निमज्जयति अवतारयति । वसन्ततिलकं वृत्तम् ।

(ज) कामवराकः दीनः काम इत्यर्थः ।

(झ) उग्रैरिति । उग्रैः उग्रैः अत्युग्रैः तपोभिः पराकादिभिः शमदमनियमैः धारणया एकाग्रतया ध्यानयोगैः समाधिभिः युक्ताः आपारमेष्ठ्यं ब्रह्मपदपर्य्यन्तं त्रिभुवनविभवे त्रिलोकैश्वर्य्ये छर्दितं त्रिजतम् उच्छिष्टं वा यत् अन्नं तत्रैव अवबोधः ज्ञानं येषां तथाभूताश्च त्रिलोकैश्वर्य्यं तुच्छं मन्यमाना अपीति भावः सहजतया स्वाभाविकतया अपरिहार्य्यत्वेनेति भावः दुर्ज्जयान् जेतुमशक्यानपि अमित्रान् रिपून् कन्दर्पादीन् जित्वापि येन कोपेन रिपुणा स्पृष्टाः आक्रान्ताः सन्तः निपेतुः अधोगतिं जग्मुरित्यर्थः असौ कोपः कथं केन प्रकारेण विजेयः जेतुं शक्यः, कथय । कथञ्चित् यदि कोऽपि कामं जयेत् तदपि क्रोधं कथमपि जेतुं न शक्नुयादिति भावः । स्रग्धरावृत्तम् ।

योर्जगन्नाथमाधवाभिधानयोरनयोरहरहरतीव वर्द्धमानमा-
नस-मलयोः सानुबन्ध-बन्धमात्मनैवाहूय पुरतः समानीत-
योः किल्बिष विषलोभवद्भ्यां भवद्भ्यां यद्यदेनो व्यरचि त-
दखिलमेव मेऽवधानपूर्वकं ददतमिति गदितयोः कथं कथ-
मपि विस्मयचमत्कार-कारणेन क्षणं स्थगितयोरनन्तरं ददा-
मीति निगदतोः करतो जलं गृहीत्वा सद्य एव देदीप्यमा-
नीक्रियमाणयोरुद्गित्वरत्वरमाण-विपुल-पुलक-कञ्चुकयोरा-
नन्द-मन्ददीक्षणसलिलयोः कृष्ण कृष्णेति गद्गद-गदन-कुण्ठक-
ण्ठयोश्चिर-समय-समयमान-मनोनिर्मलतया चिरसमुपपन्न-

---

(ञ) य इत्यादि। यः चैतन्यः। त्रिविधेति त्रिविधानां विधर्म्माणां पापानां नर्म्मसचिवयोः विहारामात्ययोः बहुदुष्कृतकारिणोरित्यर्थः। सप्तपञ्चेति सप्तपञ्चैः सविस्तारैः पञ्चभिः महापापैः ब्रह्महत्यादिभिः। पञ्च महापातकानि स्मृतिसंहितासु, ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः। महान्ति पातकान्याहुः तत्संसर्गश्च पञ्चम इति। पापच्यमानं पुनः पुनरतिशयेन वा पच्यमानं मलिनीक्रियमाणमित्यर्थः मानसं ययोः तथाभूतयोः। सकलेति सकलानां लोकानाम् उपप्लवमात्रम् उत्पीडनमेव कार्य्यं ययोः तथोक्तयोः। परमेति परमम् अत्यर्थं लुण्ठाकौ लुण्ठनकारिणौ तयोः ब्राह्मणचेलयोः ब्राह्मणसुतयोः कुचेलयोः ज[illegible]योः। कुकर्मेति कुकर्मसु दुष्कृतेषु कर्मठयोः निपुणयोः। सोदर्ययोः सहोदरयोः। कपटेति कपटस्य कूटस्य यः पटहः तस्येव आकारो ययोः तादृशयोः कपटप्रसिद्धयोरिति भावः। वर्द्धमानेति वर्द्धमानः वृद्धिं गच्छन् मानसमलः मनोमालिन्यं ययोः तथाविधयोः। सानुबन्धेति अनुबन्धेन यः बन्धः निर्बन्धः तेन सह वर्त्तमानं यथा तथा सनिर्बन्धेन अनुबन्धेनेत्यर्थः। आत्मनैव स्वयं, पुरतः अग्रतः। किल्बिषेति किल्बिषं पापमेव विषं तत्र लोभवद्भ्याम् आसक्ताभ्यां भवद्भ्यां युवाभ्याम्। एनः पापं

भक्तियोग-योगतो गतोद्दाम-कामादिदोषयोः परमभागवतानां पदवीमारूढयोस्तादृशेनानन्दविकारेण पश्यतः पश्यतः सन्देहं सकलानेव जनांश्चित्रार्पितानिवाऽनिवारितमेवाऽकार्षीत् । तस्य खलु सकललाघवकारिणः कटाक्षपातमात्रेणैव परहृदयादपि कामादिषड्विपक्ष-पक्षच्छिदो भगवतः क्रोधवशीकारः किञ्चित्रम् ( ञ ) । नेपथ्ये आनन्द-कोलाहलः ।

व्यरचि विरचितं कृतमित्यर्थः । अखिलं समग्रं मे मह्यम्, अवधानपूर्वकं साभिनिवेशं यथा तथा ददतं दत्तमित्यर्थः ददधातोरूपमिदम् । गदितयोः उक्तयोः । स्थगितयोः स्तम्भितयोः । निगदतोः कथयतोः । करतः हस्तात् जलं पापोत्सर्गजलमित्यर्थः । सद्य एव तत्क्षणादेव पापोत्सर्गानन्तरमेव देदीप्यमानीक्रियमाणयोः अतिदीप्तिशालीक्रियमाणयोः पापध्वंसात् समुज्ज्वलीकृतदेहयोरिति भावः । उदित्वरेति उदित्वरम् उद्गच्छत् त्वरमाणं तत्क्षणजायमानं विपुलं महत् पुलकमेव कञ्चुकं वर्म ययोः तथोक्तयोः कण्टकिततन्वोरित्यर्थः । आनन्देति आनन्देन कर्षेण नन्दत् गलत् ईक्षणसलिलं नेत्रजलं ययोः तथोक्तयोः आनन्दवाष्पं विसृजतोरित्यर्थः । गद्गदेति गद्गदगदनेन अर्द्धस्खलितकथनेन रुद्धः कण्ठो ययोः तथाविधयोः । चिरेति चिरसमयात् चिरात् समयमाना सङ्कुचन्ती या मनसः निर्मलता पापराहित्यमित्यर्थः तया । चिरेति चिरात् समुल्लसत् सञ्जातस्य भक्तियोगस्य भगवत्प्रेमभावस्य योगतः आसङ्गात् । गतेति गतः विनष्टः उद्दामः उत्कटः कामादिदोषः ययोः तथाभूतयोः । परमभागवतानां परमवैष्णवानां पदवीं प्रतिष्ठाम् । आनन्दविकारेण आनन्दभणितेन भावान्तरेण । पश्यतः अवलोकयतः, सन्देहं स्यतः निरस्यतः गतसंशयानित्यर्थः । तस्य चैतन्यस्य । सकलेति सकलानां सर्वेषाम् लाघवं गौरवमित्यर्थः तस्य कारिणः पापमोचनेन सत्कार्योपदेशेन

कलिः। श्रुतिमभिनीय। सखे! श्रुतमिदम्। अद्य खलु श्रीवासवासान्तरे यदयमानन्दकुतूहलहलहला-रावः श्रूयते तेनानुमितममितमहमहनीयं तस्यैव किमपि चेतश्चमत्-कार-कारि चरितमुन्मीलति (ट)। पुनर्नेपथ्ये उलूलुध्वनि-सहचरो विविधवादित्रध्वनिः।

कलिः। निपुणं निभाल्य। अये! सत्यमेवानुमितमस्माद्दृश्या-ऽदृश्यमानमिवैतत्। पश्य भूसुर-सुरस-तरुणीगण-मुख-मुखरितमङ्गलोलूलुध्वनि-सहचर-चरमपरितोषसमुच्चरज्जय-जयनिस्वनानुवादिवादित्र-समूहनिर्घोष-परिपोषविशृङ्खल-शङ्खघण्टारवैरवैयग्रतः श्रवणावट-घटमान-सुधारसाऽऽसार इव कश्चन महोत्सवसमयोऽयमुन्मीलति। तदिदमवश्यमेव निपुणं निभालनीयमिति (ठ) तथा करोति। पुनस्तत्रैव।

च सर्व्वानेव गौरभक्तान् कुर्व्वत इत्यर्थः। कामादीति कामादयः षट् विपक्षाः रिपवः तेषां पक्षच्छिदः पक्षदलनस्य भगवतः सर्व्वशक्ति-मतः। चित्रम् आश्चर्य्यम् ?

(ट) श्रीवासेति श्रीवासस्य वासान्तरे भवनाभ्यन्तरे। अमितेति अमितेन अपरिमितेन महेन उत्सवेन, मह उद्धव उत्सव इत्यमरः। महनीयं पूजनीयं प्रशंसनीयमित्यर्थः किमपि अनिर्व्वचनीयम्। चेतसः चित्तस्य चमत्कारकारि चमत्कारकारणम्। उन्मीलति स्फुरति।

(ठ) निभाल्य दृष्ट्वा। भूसुरेति भूसुराणां भूदेवानां ब्राह्मणानां सुरसाः सुरसिकाः यास्तरुण्यः युवत्यः तासां गणस्य मुखैः मुखरितः उच्चरितः यः मङ्गलः माङ्गलिकः उलूलुध्वनिः तत्सहचरेण तत्-समभिव्याहारिणा चरमपरितोषेण परमोल्लासेनेत्यर्थः समुच्चरन् यः जयजयनिस्वनः जयजयध्वनिः तदनुवादिनः तत्तच्च तात्पर्यानस्य

रामार्घ्यादीन्यरमुपहर श्रीपते ! भव्यनव्यान्
कुम्भानष्टोत्तरशतमुपासाद्य त्वं जवेन ।
श्रीकान्त ! त्वं प्रतिदिश वधूवर्गमन्यांश्च धन्या
भूदेवस्त्रीरमरसरितो नीरमभ्यानयन्तु ॥ (ड)

कविः । सखे ! सम्यगालक्षि मया । यदयं श्रीवासः सहोदरानादिशति तथा मन्ये तस्यैव विश्वम्भरदेवस्य प्रकट-घटमान-निजावेशविकस्वर-परमप्रभावस्य महाभिषेक-महोत्सव-समारम्भः समुज्जृम्भते । (ढ)

वादित्रसमूहस्य मृदङ्गादेरित्यर्थः निर्घोषस्य शब्दस्य परिपोषाः परिपोषकाः वर्द्धका इत्यर्थः विसङ्कुलाः तुमुलाः ये शङ्खानां घण्टानाञ्च रवाः तैः अवैयग्र्यतः अव्यग्रतया अनायासेनेत्यर्थः श्रवणपुटेषु कर्णकुहरेषु घटमानः प्रविशन्नित्यर्थः सुधारसानाम् अमृतरसानाम् आसारः धारा यस्मिन् तथाभूतः । निभालनीयं दर्शनीयम् ।

(ड) रामेति । हे राम ! अर्घ्यादीनि पूजोपकरणानीत्यर्थः अरं द्रुतं, लघु क्षिप्रमरं द्रुतमित्यमरः । उपहर आनय । हे श्रीपते ! त्वं जवेन सत्वरमित्यर्थः भव्यनव्यान् उत्कृष्टान् नवांश्च अष्टोत्तरशतम् अष्टाधिकशतसंख्यकानित्यर्थः कुम्भान् कलशान् उपासाद्य उपाहर । हे श्रीकान्त ! त्वं वधूवर्गम् अन्यांश्च धन्याः पुण्यशीलाः भूदेवस्त्रीः ब्राह्मणपत्नीः अमरसरितः गङ्गायाः नीरं जलम् अभ्यानयन्तु इति प्रतिदिश आज्ञापय । मन्दाक्रान्तावृत्तम् ।

(ढ) आलक्षि दृष्टम् । मन्ये तर्कयामि । विश्वम्भरदेवस्य चैतन्यस्य इत्यर्थः । प्रकटेति प्रकटम् अत्यर्थं घटमानेन जायमानेन निजावेशेन स्वव्यापारेण अलौकिककर्मणा इत्यर्थः विकस्वरः विकाशं गतः वर्द्धमान इत्यर्थः महान् प्रभावः यस्य तादृशस्य । महान् यः अभिषेकः ऐश्वर्य्यदीक्षास्नानविशेषः स एव महोत्सवः तस्य समारम्भः समुद्योगः समुज्जृम्भते समुल्लसति ।

अथ। यद्ययं स्वयं स्वयन्त्रित ईश्वर एव तदा कथमाधुनिक आवेशः। (थ)

कलिः। श्रूयताम्।

नित्यो यद्यप्यहह ! बलवानीश्वरस्येशभावः
स्वाधीनत्वात्तदपि न स तं सर्वदैव व्यनक्ति।
इच्छाऽऽदत्ते कुतुकवशतो लौकिकीमिव चेष्टां
लीलामाहुः परममधुरसां तस्य तामेव तज्ज्ञाः॥ (त)

पुनर्नेपथ्याभिमुखमवलोक्य। सखे ! पश्य पश्य तत्कालोदितदिनकर-कर-निकर-निर्भर-परिरब्धजाम्बूनद-शिखरि-शिखर-मरीचि-वीचि-निचय-रुचिमञ्जरीभिरिलावृतवर्षस्यैकखण्डमिव भूसुरवरश्रीवास-वासमखिल-जन-लोचनगोचरीकुर्व-

---

(थ) स्वयन्त्रितः स्वेन आत्मनैव यन्त्रितः सिद्धः। आधुनिकः नवीनः आवेशः प्रकटनं स्वप्रभावस्येति भावः।

(त) नित्य इति। अहहेति विस्मयद्योतकमव्ययम्। यद्यपि ईश्वरस्य बलवान् प्रबलः ईशभावः ईश्वरत्वं नित्यः, तदपि सः ईश्वरः स्वाधीनत्वात् तम् ईशभावं सर्वदैव न व्यनक्ति न प्रकटयति यदा तस्य इच्छा स्यात् तदैव प्रकटयतीति, भावः। इन्नेति पदमव्ययं पादपूरणार्थकमत्र बोध्यम्। कुतुकवशतः कौतुकवशात् लौकिकीमेव मानवीमेव चेष्टां व्यापारम् आदत्ते गृह्णाति अवलम्बते तथा लोकः कदाचित् स्वेच्छतः किमपि करोति कदाचिद्वा न करोति तद्वदिति भावः। तज्ज्ञाः तद्विदः ईश्वरतत्त्वविद इत्यर्थः तस्य तामेव चेष्टां परममधुरसाम् उत्कृष्टरसवतीं लीलां विलासविशेषमाहुः कथयन्ति। मन्दाक्रान्तावृत्तम्।

(थ) तत्कालेत्यादि। तस्मिन् काले मध्याभिषेककाले उदितस्य दिनकरस्य सूर्यस्य करनिकरेण किरणसमूहेन निर्भरं गाढं यथा

ष्विव निबिडीभूतानन्दमहोन्मादिष्णुरिव युगपदुद्दित्वर-समुद्दाम-विद्युद्दाम-पुञ्ज इव भगवद्गेहमनुप्रविश्य विशाल-शालग्रामादिपर्य्यङ्कमधिरुह्य शालग्रामादिकमेकतोऽवक्षिप्य समुपविष्टः सकलैरेव ससम्भ्रम-भ्रमणमितस्ततो धावद्भिः सविपुल-पुलकाश्रुभिरानर्याद्भिः पूर्वोद्दिष्टानि पूजोपकरणानि करणाऽनियतपाटवैरिव वैरि-वधरूपविषयवासना-वास-नाश-विशदान्तरैरभितोऽभितः परिवव्रे (ग)। पुनर्नेपथ्ये।

---

ष्यात् तथा परिरभ्य आलिङ्गितस्य व्याप्तस्येत्यर्थः आम्बूनदगिरिवरिष्ठः सुमेरोः शिखराणां शृङ्गाणां मरीचिवीचीनां मयूखतरङ्गाणां निचयाः निवहा एव रुचिमञ्जर्य्यः प्रभावल्लर्य्यस्ताभिः इलावृतवर्षस्य तदाख्य-भूगोलखण्डस्य एकदेशमिव एकं प्रदेशमिव भूसुरवरस्य ब्राह्मणश्रेष्ठस्य श्रीवासस्य वासं भवनम् अखिलजनानां समस्तजनानां लोचनगोचरीकुर्व्वन् नयनविषयं कुर्व्वन् सूर्य्य किरणैः प्रतिफलितानां सुमेरुशृङ्गाणां प्रभाभिर्यथा इलावृतवर्षैकखण्डं दीप्यते तथा स्वप्रभाभिर्दीप्यमानं श्रीवासभवनं लोकान् दर्शयन्निति भावः। निबिडीभूतः घनीभूतः यः आनन्दमहः आनन्दोत्सवः तेन उन्मादिष्णुरिव उन्मादरोगग्रस्त इव युगपत् समकालम् उद्दित्वरः उद्गच्छन् समुद्दामः समुत्कटः तीव्रः विद्युद्दाम्नां तडिन्मालानां पुञ्जः राशिरिव स्वप्रभाभिरिति भावः। भगवद्गेहम् देवगृहम्। विशालम् उन्नतं शालग्रामादीनां देव-मूर्त्तिभेदानां पर्य्यङ्कम्। अवक्षिप्य अपसार्य्य। ससम्भ्रमं सव्यग्रं भ्रमणं यस्मिन् तद् यथा तथा। स विपुलेति विपुलैः समधिकैः पुलकैः रोमाञ्चैः अश्रुभिः आनन्दवाष्पैश्च सहितैः। करणेति करणेषु इन्द्रियेषु करणं साधकतमं क्षेत्रज्ञस्येन्द्रियेष्वपीत्यमरः। अनियतं पाटवं सामर्थ्यं येषां तैः केवलं तद्भावभावनया इन्द्रियव्यापारेषु शिथिलप्रयत्नैरिति भावः। वैरीति वैरिणां शत्रूणां वधरूपे विषये या वासना इच्छाविशेषः तस्या वासस्य स्थितेः नाशेन विशदानि

कुरुष्व सुरभीरपश्चाभिरिह राम ! संशोभिता
मुकुन्द ! रचय स्वयन्त्वमभिषेकसामग्रिकाम् ।
गदाधर ! विधत्स्व भो ! वसनमाल्यभूषादिकं
यथाऽयमभिषेक्ष्यते हरिरिहैव खट्टोपरि ॥ (द)

कलिः । नेपथ्याभिमुखं परितोऽवलोक्य । सखे ! पश्य पश्य ।

यान्त्यायान्ति च हन्त ! मङ्गलघटव्यग्राग्रहस्ताः स्त्रियो
या एताः परितः पुरात् सुरधुनीं तत्कूलमूलात् पुरम् ।
तासां वाचि तदीङ्गितं नयनयोरस्रन्तनौ वेपथु-
र्धम्मिल्ले श्लथता कपोलफलके रोमाञ्च इत्यद्भुतम् ॥ (ध)

---

निर्मलानि अन्तराणि अन्तःकरणानि येषां तथाभूतैः शान्तात्मतया वैरभावव्यपगमादिति भावः । अभितः समन्तात् । परियन्ने परिवृतः ।

(द) कुरुष्वेति । हे राम ! त्वम् इह सुरभीः सौरभवतीः अपः जलानि संशोभिताः मन्त्रपूताः कुरुष्व । हे मुकुन्द ! त्वं स्वयम् अभिषेकसामग्रिकां रचय । हे गदाधर ! त्वं वसनमाल्यभूषादिकं विधत्स्व उपाहर । यथा इहैव खट्टोपरि पर्य्यङ्के अयं हरिः चैतन्यदेवः अभिषेक्ष्यते अभिषिक्तः करिष्यते । पृथ्वीवृत्तं, जसौ जसयला वसु-ग्रहयतिश्च पृथ्वी गुरुरिति तल्लक्षणात् ।

(ध) यान्तीति । हन्तेति अव्ययम् । या एताः स्त्रियः योषितः मङ्गलघटेषु माङ्गल्यकुम्भेषु व्यग्रा अग्रहस्ता हस्ताग्राणि यासां तथाभूताः सत्यः परितः समन्तात् पुरात् सुरधुनीं यान्ति गच्छन्ति तत्-कूलमूलात् तस्याः सुरधुन्याः कूलमूलात् तटमूलात् पुरम् आयान्ति आगच्छन्ति च । तासां नारीणां वाचि तत् चैतन्याभिषेकविषयम् ईङ्गितं चेष्टितम् उक्तिरिति भावः । नयनयोः अस्रम् आनन्दबाष्पं तनौ शरीरे वेपथुः कम्पः, धम्मिल्ले केशे श्लथता व्यस्तता बन्धना-भावादिति भावः, तथा कपोलफलके गण्डप्रदेशे रोमाञ्चः पुलकम् इति अद्भुतम् आश्चर्यम् । शार्दूलविक्रीडितं वृत्तम् ।

अथ । धम्मिल्लि श्रवता तदेतदखिलं कामस्य विस्फूर्जितमित्येव भण्यताम् (न) । यतः,

यत्र यत्र हरिणीदृशां क्रम-
स्तत्र तत्र मदनस्य विक्रमः ।
स्वप्रकर्षजननीं विना चमूं
केवलो जयति किञ्चमूपतिः ॥ (प)

कलिः । नाप्येतत् ।

भावेनोपहृतं चेतो द्वयेषां क्षोभकारकम् ।
निर्भावानां पुनस्तेषामाकारो नापराध्यति ॥ (फ)

पुनर्नेपथ्ये । तुमुलनिर्घोषपोषकः पुरुषसूक्तपारायणस्वरः कर्णकलः (ब) ।

(न) विस्फूर्जितं विलसितम् । भण्यतां कथ्यताम् ।

(प) यत्रेति । यत्र यत्र हरिणीदृशां क्रमः पदविक्षेपः, तत्र तत्र मदनस्य कामस्य विक्रमः पराक्रमः । केवलः एकः चमूपतिः सेनानीः स्वस्य आत्मनः प्रकर्षजननीम् उत्कर्षविधायिनीं चमूं सेनां विना किं जयति शत्रूनिति शेषः । रथोद्धतावृत्तं, रान्नराविह रथोद्धतेति तल्लक्षणात् ।

(फ) भावेनेति । भावेन प्रेम्णा उपहृतं विकृतं चेतः द्वयेषां स्त्रीपुरुषाणामित्यर्थः क्षोभकारकं विकृतिविधायकम् । निर्भावानां भावशून्यानां प्रेमरहितानामित्यर्थः तेषां स्त्रीपुरुषाणाम् आकारः न अपराध्यति न दूष्यति । पथ्यावक्त्रं वृत्तं, युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितमिति लक्षणात् ।

(ब) तुमुलेति । तुमुलं सङ्कुलं निर्घोषं निस्वनं पुष्णातीति तथोक्तः । पुरुषसूक्तानां वैदिकमन्त्रविशेषाणां पारायणेन आद्यन्तपाठेन स्वरः शब्दः कुत्सादः श्रुतिसुखः इत्यर्थः ।

कविः । निर्वर्ण्य । अहो ! अत्यद्भुतम् ।

एते ब्रह्मकमण्डलोरिव घटाद्भिः स्यन्दमानैर्मुहुः
स्वर्गङ्गाजलनिर्झरैरविकलक्लिन्नात् सुमेरोरिव ।
गौराङ्गस्य शरीरतो निपततां भूमण्डलोल्लासिनां
निस्यन्दाः सुमहाभिषेकपयसां सस्रुस्ततो दिशः ॥ (भ)

अपि च । अभिषिक्तस्य निःसारित-सारि-तराभिषेक-कीलालस्य लालस्यमान-वसनपरिधापन-पावनशोभमानस्य मानस्य परितोष-विशेषेणाशेषेणानुलिप्तस्य भक्तजनैः कैश्चन कृतालङ्करणस्य करणास्पदेन कैरपि धावितचरणकमलस्य ज्वलन-धौत-कलधौत-कलशा नीराजित-राजित-गौर-महसो मह-सोसूयमान-महिम्नः श्रीविश्वम्भरस्य भरास्पदेन प्रभूणां सर्वेषामेव पादाम्बुजपङ्क्तौ यथा-वैभवं वैभवं पुरस्कृत्य हैतं हैतं दूरयद्भिः कनकमणिरमणाद्योन्युपढौक्यते (म)

(भ) एते इति । ब्रह्मकमण्डलोरिव घटात् कलशात् मुहुः पुनः पुनः निस्यन्दमानैः निःसरद्भिः स्वर्गङ्गाजलनिर्झरैः मन्दाकिनीजलधाराभिः अविकलं सम्यक् यथा तथा क्लिन्नात् अभिषिक्तात् सुमेरोरिव गौराङ्गस्य चैतन्यदेवस्य शरीरतः देहात् निपततां भूमण्डलोल्लासिनां पृथिवीमण्डलशोभिनां सुमहाभिषेकपयसां निस्यन्दाः स्रावाः ततः दिशः सस्रुः व्यापुः । शार्दूलविक्रीडितं वृत्तम् । उपमयोः संसृष्टिरूपोऽलङ्कारः । तदुक्तं दर्पणे, मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते इति साम्यं वाच्यमवैधर्म्ये वाक्यैक्ये उपमा द्वयोरिति च ।

(म) अभिषिक्तस्य तथा स्नापितस्य । निःसारितेति निःसारितम् अपसारितं सारितरं सरित्श्रेष्ठम् अभिषेककीलालम् अभिषेकजलं कीलालममृतं जलमित्यमरः । यस्मात् तथाभूतस्य गात्रमोचन्या मोचितजलस्य निरासितजलस्येत्यर्थः । लालस्यमानेति लालस्यमानम्

अथ। सखे! अयमवसरो लोभस्य। यतः,

धैर्य्यध्वंसी परिणतिसुखद्वेषणो ह्रीविरोधी
जेतुं शक्यो भवति नितरां हन्त केनापि लोभः।
क्षीराम्भोधेर्मथनजनितं रत्नभूतस्य रत्नं
देवो विष्णुः किमपि चकमे कौस्तुभञ्च श्रियञ्च॥ (य)

कलिः। नायं तथा। इति निभाल्य। पश्य पश्य एष खलु।

---

अतिशयेन विलसत् अतिपरिष्कृतमिति भावः यत् वसनं वस्त्रं तस्य परिधापनपणनेन परिधापनभङ्ग्या इत्यर्थः शोभमानस्य विराजतः। मानस्येति। मानः अर्थं मानस्य यः परितोषविशेषः सन्तोषातिशयः तेन अनुलितस्य युक्तस्य इत्यर्थः। करणास्पदेन कारणेनेत्यर्थः। ज्वलनेति ज्वलनः अग्निः, स एव धौतं विशुद्धं कलधौतं स्वर्णं तस्य कलया ज्वालया नीराजितम् आएव राजितं शोभितं गौरं महः तेजः यस्य तथाविधस्य। सन्नेति सन्नेन उत्सवेन सोच्छ्रयमानः अतिशयेन जायमानः महिमा यस्य तादृशस्य अत्यामहिमशालिन इत्यर्थः। भरास्पदेन आतिशय्येन। यथावैभवं यथैश्वर्यं सम्पदमनुसृत्येत्यर्थः अद्वैतम् अद्वितीयम् असममित्यर्थः वैभवं सम्पदं पुरस्कृत्य समाहृत्य इत्यर्थः इतम् ईश्वरभावं संशयं दूरयद्भिः त्यजद्भिः निःसंशयमीश्वरं जानद्भिरित्यर्थः उपढौक्यन्ते उपहारीक्रियन्ते।

(य) धैर्य्येति। धैर्य्यं ध्वंसयतीति धैर्य्यध्वंसी धैर्य्यापहारकः। परिणत्यां यत् सुखं तस्य द्वेषणः विद्वेषी भाविसुखहारीत्यर्थः। ह्रीविरोधी निर्लज्जतापादक इत्यर्थः लोभः केनापि नितराम् अतिशयेन जेतुं शक्यः भवति? नैवेत्यर्थः हन्त इति खेदसूचकमव्ययं तथाहि देवो विष्णुरपि क्षीराम्भोधेः क्षीरसागरात् मथनेन जनितम् उत्थापितं रत्नभूतस्य रत्नजातस्य रत्नम् अलङ्कारभूतं किमपि अनिर्वचनीयं कौस्तुभं मणिविशेषं श्रियं लक्ष्मीञ्च चकमे कामयामास। विष्णुरपि लोभपरवशोऽभूदिति भावः। मन्दाक्रान्ताछन्दः।

न भाषते नेक्षते च न शृणोति च किञ्चन ।
स्वानन्दस्तिमितः किन्तु तेजसा परमेधते ॥ (र)

अथ । सखे ! इयमपि मदस्य रीतिः । (ल)

मूकीकरोत्यलममूकमहो घनान्ध-
मन्धीकरोत्यबधिरं बधिरीकरोति ।
योऽयं बली सुमनसं विमनीकरोति
स श्रीमदो वद न कस्य महोपहत्यै ॥ (व) ।

तदलमत्र चिन्तया एकस्यावसरे सर्वेषामेवावसरोऽनु-मेयः । एकयोगनिर्दिष्टानामित्यादि (श) । तेन

(र) नेति । अयं चैतन्यदेवः न भाषते न देहीति कथयतीत्यर्थः न ईक्षते न पश्यति उपहारद्रव्याणीति शेषः किञ्चन न शृणोति स्तुतिवादादीनाकर्णयतीत्यर्थः । किन्तु स्वानन्देन निजप्रमोदेन स्तिमितः स्तम्भितः उल्लसित इत्यर्थः परं केवल तेजसा एधते अभ्युदेति वृद्धिं गच्छतीत्यर्थः । पथ्यावक्त्रं वृत्तम् ।

(ल) मदस्य—गर्वस्य ।

(व) मूकीकरोतीति । यः मदः अमूकं वाचालम् अलम् अत्यर्थं मूकीकरोति वर्णानुच्चारकं करोति । अहो इति आश्चर्यद्योतकम् अव्ययम् । अनन्धं चक्षुष्मन्तम् अन्धीकरोति अचक्षुषं करोति । अबधिरं समर्थश्रोत्रेन्द्रियं बधिरीकरोति श्रोत्रेन्द्रियशून्यं करोति । तथा सुमनसं प्रसन्नमनसं विमनीकरोति विमनसं करोति । अयं सः बली बलवान् प्रबलः श्रीमदः श्रीमत्तता कस्य जनस्य महत्याः उपहत्यै उपघाताय न भवतीति शेषः वद कथय । सर्वस्यैव उपघाताय भवतीत्यर्थः । वसन्ततिलकं वृत्तम् ।

(श) एतस्य कामादीनामन्यतमस्येत्यर्थः अवसरे अवकाशे प्रतिष्ठाप्रसङ्गे इति भावः सर्वेषामेव कामादीनाम् अवसरः प्रतिष्ठा अनुमेयः

अन्योत्कर्षासहत्वान्मनसि मलिनता क्रौर्यकार्पण्यकारी
यत्रोत्पद्येत तं हि प्रदहति सहसा कोटराग्निर्यथाऽगम्।
येनाक्रान्तान्तराणां खल इति वदते विश्वविक्षोभिकाख्या
सोऽयं मात्सर्यनामा तव सचिववरो वर्त्तते मूढमत्र॥ (ष)

पुनर्नेपथ्ये। हन्त भो अद्वैत!।

अष्टादशैव यामाः क्षणा इव नाभवन् यस्य।
तस्मिन्नानन्दमये किमुपचरामो वयं क्षुद्राः॥ (स)

तदधुना सर्व एव तथा स्थध्वम्। यथायं सहजमपि सान्द्रमानन्दं प्रतनूकृत्य भक्तवात्सल्यादिष्टमिदमावध्यते। (ह)

अनुमानसिद्धः। एकेति एकस्य योगे सर्वेषामेव योग इत्येव निरूपितानां कामादीनामिति शेषः।

(ष) अन्योत्कर्षासहत्वादिति। अन्येषाम् उत्कर्षासहत्वात् प्रकर्षसहनायोग्यत्वात् मनसि मलिनतां मालिन्यं क्रौर्यं निष्ठुरतां कार्पण्यञ्च करोति जनयतीति तथोक्तः यः मात्सर्यनामा रिपुः यत्र उत्पद्येत तिष्ठेत् इत्यर्थः तं कोटराग्निः गर्त्तस्थितः अनलः अगं वृक्षं यथा शैलवृक्षौ नगावगावित्यमरः। सहसा प्रदहति हि भस्मीकरोत्येव, तथा येन मात्सर्येण आक्रान्तम् अन्तरं मनः येषां तादृशानां खलः दुर्जन इति विशेषात् सर्वेषां विक्षोभिका विशेषेण क्षोभकारिणी उद्वेगजननीत्यर्थः आख्या संज्ञा वदने वक्ति। सः अयं मात्सर्यनामा तव सचिववरः प्रधानामात्यः अत्र चैतन्यदेवे मूढ यथा तथा वर्त्तते विहरति। स्रग्धरावृत्तम्। उपमालङ्कारश्च।

(स) अष्टादशेति। यस्य देवस्य चैतन्यस्य अष्टादश यामाः प्रहराः क्षणा इव नाम अभवन् आनन्दमये तस्मिन् चैतन्यदेवे क्षुद्राः अधमा वयं किम् उपचरामः कथं परिचरामः इत्यर्थः।

(ह) स्थध्वं स्थितिं कुरुत। प्रतनूकृत्य शिथिलयित्वा भक्तानामस्माकं वात्सल्यात् स्नेहात् यदिष्टं तत् वाह्यमालापादिकम् आवध्यते

कलिः। सखे! श्रुतम् श्रुतम्।

भक्ता हि केवलमैश्वर्यं न सहन्ते यदेवं श्रीवासो निगदति।

अध। श्रुतम्। किन्तु एभिरेवास्यान्तर्वर्त्ती (ख) मदः प्रख्याप्यते समनन्तरं मोहस्य। तथाहि

आनन्दः सहजो भवेद्यदि तदा नासौ विहातुं क्षम-
स्तेनान्तर्मदमेदुरोऽतिकपटाद्विश्वं तृणं मन्यते।
मोहश्चेत् स्वजनेषु नास्य किमहो तेषां वचो गृह्यते (क)

कलिः। वात्सल्यात्। (ख)।

अध। क्षुद्रे मोह इतीतरत्र स जनैर्वात्सल्यमित्युच्यते॥(ग)

करोति सततमयम् आनन्दमयब्रह्मभावेन अवतिष्ठते तेनास्मासु दृष्टिं न पातयति तद्यथा अस्मासु अस्य कृपादृष्टिः स्यात् तथा त्वया प्रयतितव्यमिति फलितार्थः।

(ख) अन्तर्वर्त्ती गूढ़रूपेण शरीरस्थित इत्यर्थः।

(क) आनन्द इति। यदि सहजः स्वाभाविकः आनन्दः भवेत्, तदा असौ तम् आनन्दं विहातुं त्यक्तुं न क्षमः न शक्तः। तेन आनन्दत्यागेन यदि आनन्दं त्यजति तदा इति भावः अन्तर्मदेन आन्तरिकगर्वेण मेदुरः स्निग्धः गर्वस्य गूढ़त्वात् बहिः स्निग्ध इव प्रतीयमान इति भावः अयम् अतिकपटात् प्रकाशकापट्यं न तथा दोषः प्रतीकारार्हत्वात् अन्तःकापट्यमेव महान् दोषः तस्य अप्रतीकार्य्यत्वादितिकपटस्य अतिविशेषणमिति भावः। विश्वं जगत् तृणम् अतितुच्छं मन्यते। चेत् यदि अस्य स्वजनेषु मोहः माया न स्यात्, तदा किं कथम् अनेन तेषां स्वजनानां वचः गृह्यते?।

(ख) वात्सल्यात् स्नेहात्।

(ग) क्षुद्रे जने मोह इति। इतरत्र अन्यत्र महति जने

कलिः। अत्र जीवाश्रयोऽयं विकारः क्षुद्राक्षुद्रत्वस्य जीवगतत्वादिति। (घ)

पुनर्नेपथ्याभिमुखमवलोक्य। अहो! कथमकस्मादेव।

अर्हैतप्रमुखाः पतन्ति युगपत्सर्वे क्षितौ दण्डवच्छ्रीवासादिचतुःसहोदरवधूमुख्याः स्त्रियश्चाखिलाः।

ज्ञातम्।

व्याकोषाम्बुजमालिके इव कृपामाध्वीकनिस्यन्दिके
स्वानन्दोर्मिविनिद्रिते विकचयामासायमीशो दृशौ॥ (ङ)

पुनश्चिरं निरूप्य। अहो! अत्यद्भुतम्।

मच्चित्ता भवतेति वारिदघटागम्भीरधीरस्वरं
भाषित्वाऽङ्घ्रिसरोरुहे भगवताऽमीषां शिरःस्वर्पिते।

इत्यर्थः स मोक्षः जनैः सालोक्यमिति उच्यते कथ्यते। शार्दूलविक्रीडितं वृत्तम्।

(घ) अत्रेति अत्रः अविचलश्च यः जीवः प्राणी, स एव आश्रयो यस्य तथाभूतः। जीवगतत्वात् प्राणिधर्मत्वादित्यर्थः।

(ङ) अर्हैतेति। अर्हैतप्रमुखाः अर्हैतप्रभृतयः सर्वे तथा श्रीवासादीनां चतुर्णां सहोदराणां वध्वः स्त्रियः मुख्याः अग्रण्यः यासां ताः अखिलाः समस्ताः स्त्रियः नार्यश्च युगपत् समकालं क्षितौ दण्डवत् निपतन्ति प्रणमन्तीत्यर्थः। ईशः ईश्वरः चैतन्यदेवः व्याकोषाणां विकचानां, व्याकोषविकचस्फुटा इत्यमरः। अम्बुजानां पद्मानां मालिके इव स्रजाविव कृपा एव माध्वीकं मधु तस्य निस्यन्दिके स्राविणी इत्यर्थः तथा स्वस्य आनन्दस्य ऊर्मिषु तरङ्गेषु विनिद्रिते निमीलिते दृशौ नेत्रे विकचयामास विकासयामास। शार्दूलविक्रीडितं वृत्तम्।

(च) मच्चित्ता इति। मच्चित्ता मयि अर्पितमनसः भवत इति भगवता चैतन्येन वारिदघटानां मेघनिचयानाम् इव गम्भीरः धीरः

साश्रं सोत्कलिकं सवेपथु सशीत्कारं सरोमोद्गमं
सोल्लासञ्च सकौतुकञ्च यदमी आनन्दतन्द्रां ययुः ॥ (च)

तदतः परमत्रैवागमिष्यन्ति सर्वे तदेहि स्थानान्तरं चिन्तयामः ।

अध । सखे ! ममावस्थानं क्व चिन्तनीयम् ।

कलिः । चिन्तितमस्ति श्रूयताम् ।

विद्याशीलतपःकुलाश्रमयुजोऽप्येकान्तदान्ताश्च ये
निन्दन्त्यस्य विभोश्चरित्रमनघं तेषु त्वया स्थीयताम् ।
त्वत्पत्नी तु मृषा बहिर्मुखमुखेष्वास्तां तनूजश्च ते
दम्भः केवलशुष्ककर्मकुशलेष्वेतेन मा खिद्यताम् ॥ (छ) ।

सद्गदः स्वरो यस्मिन् तत् यथा तथा भाषित्वा उक्त्वा अमीषां श्रीवासादीनां शिरःसु अङ्घ्रिसरोरुहे पादपद्मे अर्पिते सति अमी श्रीवासादयः साश्रं सानन्दबाष्पं सोत्कलिकं सौत्सुक्यं सवेपथु सकम्पं सशीत्कारं सरोमोद्गमं सलोमाञ्चं सोल्लासं सकौतुकञ्च यथा तथा यत् आनन्दतन्द्राम् आनन्दनिमीलितत्वं ययुः प्रापुः, एतदत्यद्भुतमिति पूर्वेणान्वयः ।

(छ) विद्येति । विद्या शास्त्रार्थज्ञानं शीलं सद्वृत्तं तपः चान्द्रायणादिकं कुलम् आभिजात्यम् आश्रमं गार्हस्थ्यादिकञ्च युञ्जते सेवन्ते इति तथोक्ताः तथा एकान्तदान्ता अतिसंयतचित्ता अपि ये अस्य विभोः ईश्वरस्य अनघं निष्पापं चरित्रं निन्दन्ति द्विषन्ति, त्वया तेषु जनेषु स्थीयताम् । तव पत्नी मृषा मिथ्या तु बहिर्मुखानां ब्राह्मणानां मुखेषु आस्ताम् । ते तव तनूजः पुत्रः दम्भश्च केवलशुष्ककर्मकुशलेषु केवलं शुष्काणि नीरसानि असाराणीत्यर्थः यानि कर्माणि तेषु कुशलाः निपुणाः तेषु आस्तामिति शेषः एतेन नियोगेनेति भावः मा खिद्यतां विषादः न क्रियतामित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

अथ । यथा रुचितं ते । इति निष्क्रान्तौ ।

विष्कम्भकः (ज) । ततः प्रविशति पर्य्यङ्कारूढो गृहीत-दिव्यवेशभूषः स्वानन्दसुप्तप्रबुद्ध इव भगवान् विश्वम्भरः परितो विभवश्चाद्वैतादयश्च दूरे कीर्त्तयन्तो मध्ये च भागवताः ।

भगवान् । अद्वैत ! ।

गोलोकादवतारितोऽस्मि भवतैवाहं सुदुर्वारया
स्वप्रेमामृतवन्ययैव परया दैन्यार्त्तिनाऽनन्यया । (झ)

अद्वैतः । अञ्जलिं बद्ध्वा ।

कोऽहं क्षुद्रतरस्त्वयैव भगवन् ! लीलावशेनात्मना
लोकानुग्रहसाग्रहेण धरण्यामात्माऽयमाविष्कृतः ॥ (ञ)

कथमन्यथा ।

(ज) विष्कम्भकः, तल्लक्षणमुक्तं दर्पणे "वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः । मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पित इति ।

(झ) गोलोकादिति । भवतैव अहं सुदुर्वारया वारयितुमशक्यया परया अतिमहत्या दैन्यं कातरता आर्त्तिस्ताः तयोक्तया अनन्यया असाधारणया स्वस्य प्रेमामृतमेव वन्यया जलप्रवाहेण गोलोकात् स्वधाम्नः अवतारितः चालितः अस्मि ।

(ञ) क इति । अहं कः क्षुद्रतरः अतितुच्छ इत्यर्थः, हे भगवन् ! त्वयैव लीलावशेन लीलाधीनेन तथा लोकानां जगताम् अनुग्रहे कृपादाने साग्रहेण आग्रहवता आत्मना अयम् आत्मा धरण्यां पृथिव्याम् आविष्कृतः प्रकाशितः । शार्दूलविक्रीडितं वृत्तम् ।

"तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः" ॥

इति कुन्त्युक्तदिशा तथाविधानां नीरसतया शुष्कहृदयानां मुनीनां हृदयसरसीकरणाय प्रकटित-जगन्मङ्गल मङ्गलावतारेण स्वयं भगवता व्रजराजकुमारेण विरचितासु पुरुषार्थ-सार्थापार्थीकरण-समर्थ-श्रवणकीर्त्तनादिषु ब्रह्मानन्दादपि चमत्कार-कारिणीषु गोकुल-मथुरा-द्वारवतीलीलासु ।

"भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ।
भक्तिः प्रवर्त्तिता दिष्ट्या मुनीनामपि दुर्लभा" ॥

इत्युद्धवोक्तदिशा सकल-रस-पारावार-पारवर्त्ति-गोकुलाद्य-

---

(ट) परमहंसानामिति परमहंसानां योगिनाम् अमलात्मनां निर्म्मलान्तःकरणानां मुनीनाञ्च भक्तियोगः भक्तिमार्गः तस्य विधानार्थं प्रदर्शनार्थं कथं स्त्रियः पश्येमहि मुनीनां योगिनाञ्च भक्तियोगप्रदर्शनव्यग्रतया स्त्रीणामस्माकं प्रति भवतो दर्शनावसर इति भावः । इति कुन्त्या पाण्डवजनन्या उक्ता या दिक् रीतिः तया । हृदयसरसीकरणाय हृदयस्य प्रेमभावदानेन आर्द्रीकरणायेत्यर्थः । प्रकटितेति प्रकटितं जगतां मङ्गलं येन तादृशः मङ्गलः शुभः अवतारः आविर्भावः यस्य तथोक्तेन व्रजराजकुमारेण नन्दसुतेन पुरुषार्थसार्थस्य धर्मार्थकाममोक्षरूपस्य यत् अपार्थीकरणम् अपगतार्थताकरणं तत्र समर्थं यत् श्रवणकीर्त्तनादि यासां तादृशीषु पुरुषार्थचतुष्टयादपि अधिकमनोज्ञास्वित्यर्थः ब्रह्मानन्दात् ब्रह्मज्ञानजनितात् प्रमोदादपि चमत्कारकारिणीषु चित्तविकासविधायिनीषु । दिष्ट्या भाग्येन भगवतीति भवतीभिः उत्तमः श्लोकः कीर्त्तनं यस्य तादृशे भगवति कृष्णे मुनीनामपि दुर्लभा अनुत्तमा अत्युत्कृष्टा भक्तिः प्रवर्त्तिता प्रदर्शिता इति उद्धवेन उक्तदिशा उक्तरीत्या इत्यर्थः ।

परमात्मनि श्रीवृन्दावनधामनि निकाम-निरतिशयानन्द-भूमनि मूर्त्तिमदानन्दशक्तिभिः सन्तत-सन्तन्यमान-मानस राग-परभागभागधेयाभिराभीरभीरुभिः प्रवर्त्तितं तादृशप्रेमतत्त्वं तदानीं तत्रैव स्थितम्। सम्प्रति सम्प्रति-पद्यमान सदास्वाद-स्वादरगृहीत-समुचित-विग्रहस्य तव सौभगवतो भगवतो निरवधि तदेव मधुरतर-रस-रहस्य-पीयूष-यूषमाहितगण्डूषमाचामतोऽङ्गुलि विवर-विगलिता इव तत्कणाः क्व नामास्माभिरप्याचम्यन्ते । (८)

सकल्यः समग्रः यः रसपारावारः भगवत्प्रेमसागरः तस्य पारे वर्त्तते इति तथोक्तं गोकुलादि अपरं नाम यस्य तादृशे । निकामेति निकामः सम्पूर्णः निरतिशयः अतिबहुलः आनन्दभूमा प्रमोदसमूहश्च यत्र तथा विधि । मूर्त्तिमदिति मूर्त्तिमत्यः देहधारिण्यः याः आनन्द-शक्तयः ताभिः । सन्ततेति सन्ततम् अजस्रं सन्तन्यमानः विस्तार्य-माणः मानसस्य चित्तस्य रागपरभागः अनुरागोत्कर्षः यत्र तादृशं भागधेयं भाग्यं यासां ताभिः । आभीरभीरुभिः गोपाङ्गनाभिः । प्रवर्त्तितं प्रदर्शितम्। तत्रैव वृन्दावनधामन्येव । सम्प्रतिपद्यमानेति सम्प्रतिपद्यमानः सम्यगनुभूयमानस्य तस्य प्रेमतत्त्वस्य आस्वादाय सम्भोगाय स्वादरेण निरतिशययत्नेन गृहीतः समुचितः तादृश-रसास्वादोपयुक्त इत्यर्थः विग्रहो येन तादृशस्य । सौभगवतः सौभाग्यशालिनः सर्वजनरञ्जनस्येत्यर्थः. भगवतः ईश्वरस्य । निरवधि अशेषम् । मधुरेति मधुरतरम् अतिमधुरं यत् रसरहस्यपीयूषं प्रेम-रूपं गूढामृतं तदेव यूषं परिपक्वतरलपेयवस्तु इत्यर्थः आहितं कृतं गण्डूषं यत्र तत् यथा तथा आचामतः पिबतः । अङ्गुलिविवरेभ्यः विगलिता इव विस्रुता इव तत्कणाः तस्य यूषस्य कणाः बिन्दवः । क्व कुत्र । आचाम्यन्ते पीयन्ते नाम ? नामात्र सम्भावनार्थकः । कुत्राप्यस्माकं पानसम्भावनापि नास्तीति भावः ।

भगवान्। श्रीवास! स्मरसि विनिर्यतस्तवासू-
नारौत्सं यदिह चपेटपाटवेन। (ठ)

श्रीवासः। स्तुतिमभिनीय।

मां वेत्सि प्रभुवर! मोचितोऽस्मि मृत्योः
केनापि प्रसभमिति स्मृतिर्ममास्ते ॥ (ड)

सर्वे, विस्मयं नाटयन्ति।

भगवान्। श्रीवास! सामूलं कथय सर्वे शृण्वन्तु।

श्रीवा। भगवत आविर्भावात् पूर्वमाग्रेश्वमाषोडशवर्ष-मयं जन्तुरतिदन्तुरतया द्विजगुर्व्वादिषु मन्तुमत्तया मत्तया मनोवृत्त्याऽगच्छद्ग्राम्य-दुग्धाऽस्मिम-काष्ठा-काष्ठायमान-हृदयोऽदयो वृथा-कलह-लहरी-कुकथादिभिर्मद-मेदुर-दुरवस्थितधीः स्वप्नेऽपि नश्रुत-कीर्त्तित-भगवद्गुणः कदाचिद्दाचित पूर्व्व-सुकृत-सुकृत-वशाविद्रा निद्रावितायां सन्ध्यायां केनापि करुणात्मना स्वप्ने समुपदिष्ट इव जातोऽस्मि।

(ठ) श्रीवासेति। हे श्रीवास! इह चपेटपाटवेन गात्रे चपेटाघातकौशलेन तव विनिर्य्यतः विनिर्गच्छतः असून् प्राणान् यत् आरौत्सं प्रतिरुद्धवानस्मि, तत् स्मरसि ?।

(ड) मामिति। मामिति स्मरणार्थमव्ययम्। हे प्रभुवर! वेत्सि जानासि, केनापि प्रसभं सहसा मृत्योः मरणात् मोचितोऽस्मि इति मम स्मृतिः आस्ते।

(ढ) अयमिति अयमित्यात्मनिर्देशः। अतिदन्तुरतया अत्यौद्धत्येन द्विजगुर्वादिषु ब्राह्मणगुरुप्रभृतिषु मन्तुमत्तया अपराधितया, आगोऽपराधो मन्तुश्चैत्यमरः। मत्तया अनवस्थितया मनोवृत्त्या चित्तवृत्त्या अगच्छत् अयात् ग्राम्य दाम्भवाप्यादिभिर्यः। अग्राम्यीति

यथा "अरे ब्राह्मणब्रुव ! ब्रुवन्तु के त्वामुपदेशवाचं वा चञ्चल-हृदयं तथापि ब्रूमहे । वर्षमेकं तेऽतः परमायुरतःपरं वृथा-युःक्षेपं माकार्षीरिति" विभावितायां विभावर्य्यां वर्य्यां तामुपदेशवाचमनुस्मरन्नल्पायुष्कतया विमनस्को विरता-खिल-चापलस्तद्दिनमुपोषितः पोषितस्तेनैवोपदेशापदे-शात्मतेन पुरुषनिःश्रेयसं किमिति निर्बोद्धुं विधिवन्नार-दीयपुराणपद्यमिदमुपलब्धवानस्मि । यथा—

"हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा" ॥

इति तदनु दनुज-दमनोपदेशमिव तन्मन्वानोऽन्वानोदित-सकल-कर्म्मा हरिनाम-मात्र-शरणः शरणमपि विस्मृतवा-नस्मि । सर्वैरेवोपहस्यमानोऽपि प्रशान्तमना मनागपि

अशान्तिदशाया उग्रदशाया अनिमकाश्या चरमप्रकर्षेण काशायमानं काष्ठवत् आचरत् अतिनिष्ठुरमित्यर्थः हृदयं यस्य तथाभूतः । अदयः दयारहितः निष्ठुर इत्यर्थः । वृथा कलहकलहरीभिः निरर्थकविवाद-परम्पराभिः कुकथादिभिः कुत्सितप्रसङ्गप्रभृतिभिः मदमेदुरा मत्ता इत्यर्थः अतएव दुरवस्थिता अव्यवस्थिता धीः मतिर्यस्य तथाविधः । न श्रुतेति न श्रुतः कीर्त्तितश्च भगवतः प्रभोः गुणः महिमा येन तादृशः । आचितेति आचितपूर्वाणां जन्मान्तरोपार्जितानां सुकृतानां सत्कार्य्याणां सुकृतवशात् पुण्यवशात् निद्रया निद्राविताया निरा-कृतायां संज्ञायां चेतनायाम् अचेतनकारिण्यां निद्रायां सत्यामिति भावः । ब्राह्मणब्रुव ! आत्मानं ब्राह्मणं ब्रवीतीति ब्राह्मणब्रुवः स्वयं ब्राह्मणोचितकार्य्यमकुर्वन्नपि ब्राह्मणत्वेन परिचायक इत्यर्थः तत्सम्बुद्धौ ब्राह्मणाधम इत्यर्थः चञ्चलहृदयं त्वां के उपदेशवाचं ब्रुवन्तु ? न केऽपीत्यर्थः तथापि ब्रूमहे उपदिशाम इत्यर्थः वर्षमिति शेषः ।

नाव्यवृत्तिस्तदैव मृत्युदिनमनुसन्दधानो दधानो हृदि विषादं मासान् गणयन्नुपरते वर्षे प्रत्यासन्ने च मृत्युदिवसेऽवशेषायुरहं श्रीभागवताध्यापनकर्त्तुर्देवानन्दपण्डितस्यालयं तच्छुश्रूषया गतः प्रह्लादचरित्रश्रवणकाले तमेव समयमासाद्य साद्यमान-प्राणो मृत्युवशङ्गतः पतितोऽस्मि। तद्भवनाऽऽलिन्दतोऽङ्गणतलं तदनु केनापि मृत्युमुखान्मोचितं चितं (ढ) पुनरायुषेत्यात्मानं मन्यमानो विवश इव पुनरुत्थितवानस्मि। तस्मिन्नेव समये सर्व एव मामुत्थाप्य खट्टमानिन्युः।

भगवान्। निशां समया स मया स्वप्नो दर्शितः प्रगतजीवितोऽवितोऽपि (ण) पुनर्जीवित-दानेन।

सर्वे विस्मयं नाटयन्ति।

---

अतःपरं ते तव वर्षमेकम् आयुरस्तीति शेषः, अतःपरं वृथा निरर्थकम् आयुःशेषं जीवनकालहरणं मा कार्षीः न कुरु इति। विभावितायां प्रभातायां विभावर्य्यां रजन्याम्। वर्य्यां स्थिताम्। पोषितः परितर्पितः। उपदेशापदेशाहृतेन उपदेशच्छलनाहूतवचनेनेत्यर्थः। पुरुषस्य निःश्रेयसं परं मङ्गलम्। तदनु तदनन्तरं नारदीयपुराणपद्यप्राप्त्यनन्तरमित्यर्थः। दनुजदमनोपदेशमिव नारायणोपदेशमिव तत्पद्यं मन्वानः मन्यमानः अन्वानोदितं परित्यक्तं सकलं कर्म येन तथोक्तः। मरणं स्वकं मनागपि अल्पमपि। प्रत्युपसन्ने निकटवर्त्तिनि। तमेव समयं मृत्युकालमित्यर्थः। साद्यमानप्राणः स्त्रियमाणप्राणः। तस्य अध्यापकस्य भवनालिन्दतः खट्टपीठात् अङ्गणतलम् अजिरभूमिं गतम्। चितं युक्तम्।

(ण) निशां समया निशायामित्यर्थः प्रगतजीवितः मृतः। अवितः रक्षितः।

भग। स्पर्शमणिः स्पर्शनात् कनकीभावं प्रयातमिव लोहम्।

तव तु तदेव शरीरं नारदशक्तिप्रवेशतोऽन्यदिव ॥ (न)

अद्वै। एवमेतत्। अन्यथा न मृतः पुनर्जीवति किन्तु भगवन्! सर्व एवैते तव स्वभाव-भाव सहचरास्तथापि मन्न-जनेन जनेन शरीरान्तरमिव लभ्यते इति शिक्षया मच्चया-ऽऽनन्देन भगवतेदमध्यवसितम्। वस्तुतः स्तुतमहिमाऽयं तव भक्तिश्रीवासः श्रीवासः (थ)।

भगवान्। अद्वैत! सत्यमेतत्।

अद्वै। भगवन्! मुरारिमुकुन्दादयोऽप्येते तव दास्य-भाव-भाव दातारो दातारो नयनानन्दस्य। (द)

भगवान्। अद्वैत! अन्तरनयोरनयो महानस्ति। उभौ सशङ्कं वेपाते पातेन कुलिशस्येव। (ध)

(न) कनकीभावं सौवर्णं प्रयातं प्राप्तम्। नारदशक्तिप्रवेशात् हरिनामकीर्त्तनादिति भावः अन्यदिव अपरमिव।

(थ) एते जननमरणादय इति भावः स्वभावस्य प्रकृतेः यः भावः धर्मः तस्य सहचराः सङ्गिनः। शरीरान्तरमिव अन्यत् शरीर-मिव ईश्वरसेवकं शरीरमन्यत् तदसेवकञ्चान्यदिति भावः। अच्चयानन्देन नित्यानन्देन। अध्यवसितम् अनुष्ठितम्। स्तुतेति स्तुतः स्तवनीय इत्यर्थः महिमा यस्य तादृशः। भक्तिरेव श्रीः लक्ष्मीः तस्या वासः आलयः। परमभक्तोऽयं तव इत्यर्थः।

(द) दास्येति दास्यभावस्य सेवकभावस्य यः भावः प्रकारः तस्य दातारः अन्तरनयोरनय इति अनयोः मुरारिमुकुन्दयो अन्तः मनसि महान् अनयः दुर्नीतिः।

(ध) उभौ मुरारिमुकुन्दौ वेपाते कम्पेते कुलिशस्य वज्रस्य पाते-नेव पतनेनेव।

अद्वै । देव ! कोऽसौ । (न)

भगवान् । मुरारेर्मनसि न सिध्यति भक्तिरसो रसोन-दौर्गन्ध्यमिव विसारि-काटवमध्यात्म-भावनावनाग्रह ग्रहिलत्वमेवास्ति । यदयमद्याप्यनुक्षण-क्षण एव वाशिष्ठ-विषये । (प)

अद्वै । किमपराद्धमध्यात्मयोगेन । (फ)

भगवान् । त्वया कथमिदमुच्यते ।

यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे ।
विक्रीड़तोऽमृताम्भोधौ किमन्यैः खातकोदकैः ॥ (ब)

अद्वै । मुकुन्देन किमपराद्धम् ।

(न) असौ अनयः कः ? ।

(प) रसोनदौर्गन्ध्यमिव विरसं दुर्गन्धत्वमिव । विसारि विस्तारि काटवं कटुत्वं यस्य तथाभूतम् । अध्यात्मेति अध्यात्मभावनायाः परमात्मविषयकचिन्ताया अवने यः आग्रहः व्यग्रता तद्ग्रहिलत्वं तत्प्रवणत्वम् । कोऽसावात्मा, कथं सः किंवा तस्य प्रयोजनमित्यादिभावनायैव आक्रान्तमनस्कतया नासौ भक्तिमार्गं सेवते इति भावः । यत् यस्मात् अयं मुरारिः अद्यापि इदानीमपि वाशिष्ठविषये वशिष्ठोक्ताध्यात्मयोगे इति यावत् अनुक्षणः सन्ततः क्षणः उत्सवः यस्य तादृशः योगशास्त्रालोचनायामेव सततमासक्त इति भावः ।

(फ) किमिति । अध्यात्मयोगस्य को दोष इति भावः ।

(ब) यस्येति । निःश्रेयसानां परममङ्गलानाम् ईश्वरे आश्रये इत्यर्थः भगवति हरौ यस्य यस्य भक्तिरस्तीति शेषः अमृताम्भोधौ अमृतरससागरे विक्रीड़तः अवगाहमानस्य तस्य अन्यैः खातकोदकैः कूपादिजलैः किम् ? न किमपि प्रयोजनमस्तीति भावः ।

भगवान्। अनेन निरुच्यते। रुच्यते हि भगवतश्चतु-र्भुजरूपमेव तदेवोपास्यम्। (भ)

अद्वै। किमिदं मतममतमद्धा। (म)

भगवान्। ऐच्छिकं भगवतश्चतुर्भुजत्वं स्वाभाविकं हि द्विभुजत्वमेव। तथाहि "नराकृति परं ब्रह्म, गूढ़ं परं ब्रह्म मनुष्यलिङ्गं, परमात्मा नराकृति" रिति नराकृतित्वं द्विभुजत्वमेव।

अद्वै। "स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम" (य)। तत् ज्ञापयन्तु निजरूपतत्त्वमिति।

भगवान्। मानुषरूपम्। तत्ते दर्शयितव्यम्।

अद्वै। अनुगृहीतोऽस्मि किन्तु भगवन्ननयोः प्रसीद सीदत एवैतौ कृतमनोऽरुषा परुषापराधेन। (र)

दुर्वासनाविषविषादहरे सुधौम-
च्छायाकरे पुरुकृपामकरन्दवर्षे।

(भ) निरुच्यते निश्चयेन कथ्यते। भगवतः ईश्वरस्य चतुर्भुज-रूपमेव नान्यत् रूपमिति अन्ययोगव्यवच्छेदकेन एव शब्देन द्योत्यते। रुच्यते रुचिम् अनुरागं करोतीत्यर्थः। तदेव चतुर्भुजरूपमेव उपा-स्यम् आराधनीयं नान्यदिति भावः।

(म) अमतम अनभिमतं भवन इति भावः।

(य) स्वयमेवेति। हे पुरुषोत्तम! त्वं स्वयमेव आत्मनः निज-स्वरूपेण आत्मानं स्वस्वरूपं वेत्थ जानासि।

(र) सीदतः क्लिश्यतः। एतौ मुरारिमुकुन्दौ। कृतं मनसः अरुः मर्मपीडकं येन तथाविधेन परुषापराधेन कठिनदोषेण।

(ल) दुर्वासनेति। हे भगवन् तथा तादृशं प्रसादम् अनु-कम्पां विधेहि कुरु यथा एतयोः मुरारिमुकुन्दयोः मूर्ध्नि शिरसि

अम्भोजगञ्जनकृती चरणातपत्रे
मूर्ध्नि गतयोः कुरु विधेहि तथा प्रसादम् ॥ (ल)

भगवान्। तथा कृत्वा।

नायं सुखापो भगवान् देहिनां गोपिकासुतः।
ज्ञानिनाञ्चात्मभूतानां यथा भक्तिमतामिह ॥ (व)

इति पठित्वा सानुकम्पम्। माऽतःपरं विजातीय-वासनानाशनार्थौ (श) भवतम्।

उभौ। दण्डवत् पतित्वा।

अहं हरे! तव पादैकमूल-
दासानुदासो भवितास्मि भूयः।

दुर्वासना दुरन्तविषयभोगतृष्णा एव विषं तेन यः विषादः अवसादः तस्य हरे हारिणी इत्यर्थः सुशीमच्छायाकरे सुशीतलच्छायाकारिणी इत्यर्थः पुरुमञ्जुती कृपा एव मकरन्दः कौसुमं मधु तस्य वर्षे वर्षिणी महाप्रसादस्रुचिके इत्यर्थः अम्भोजानां पद्मानां गञ्जनं तिरस्कारः तस्य कृती कारके चरणौ एव आतपत्रे छत्रे कुरु शिरसि पादपद्मार्पणेन एतौ विषादशून्यौ कुरुष्वेति फलितार्थः। वसन्ततिलकं वृत्तम्।

(व) नायमिति। अयं भगवान् गोपिकासुतः यशोदानन्दनः इह संसारे ज्ञानिनाम् आत्मभूतानाम् अध्यात्मदर्शिनामित्यर्थः यथा भक्तिमतां भगवति प्रेमवतामित्यर्थः सुखम् आपियतीति सुखापः सुखनाशक इत्यर्थः न भवतीति शेषः।

(श) विजातीयेति विजातीया विपरीता या वासना संस्कारः तन्नाशनार्थौ तदवलम्बिनौ इत्यर्थः।

(ष) अहमिति। हे हरे! अहं भूयः बाहुल्येन एकान्तमित्यर्थः तव पादैकमूलस्य दासानुदासः दासदास इत्यर्थः भवितास्मि

मनः स्मरेतासुपतेर्गुणानां
गृणीत वाक् कर्म्म करोतु कायः॥ (घ)

इति पठतः।

भगवान्। तथास्तु।

शुक्लाम्बरः। सदैन्यम्। देव!

तप्तानि भूरीणि तपांसि नाथ!
बहूनि तीर्थानि च सेवितानि।
तथापि चेतो नहि मे प्रसन्नं
कृपाकटाक्षं कुरु मे प्रसीद॥ (ङ)

इति निःसाध्वसं साध्वसङ्कोचेन (च) तत्पादयोः शिरो निदधाति।

श्रीवासः। आलोक्य जनान्तिकं (छ)। गदाधर! पश्य पश्य।

---

भविष्यामि। मनः चित्तम् असुपते प्राणवल्लभस्य तव गुणानां कर्म्मणि षष्ठी स्मरेत स्मरतु आलोचयतु इत्यर्थः। वाक् वचनं गृणीत कीर्त्तयतु इत्यर्थः अत्रापि गुणानामिति कर्मपदमन्वेतव्यम्। तथा कायः देहः कर्म भक्तोपयुक्तमिति भावः करोतु अनुतिष्ठतु। अतःपरं मनोवाक्कायकर्मभिर्भवन्तमेव सेविष्ये इति भावः।

(ङ) तप्तानीति। हे नाथ! मया भूरीणि बहूनि तपांसि तप्तानि चरितानि, बहूनि च तीर्थानि पुण्यक्षेत्राणि सेवितानि पर्य्यटितानि। तथापि मे मम चेतः न हि नैव प्रसन्नं प्रसादमुपगतं, तस्मात् मे मम कृपाकटाक्षं सदयावलोकनं कुरु, प्रसीद प्रसन्ना भव। उपजातिवृत्तम्।

(च) निःसाध्वसं निर्भयं साधुना सम्पूर्णेन असङ्कोचेन अकुण्ठितभावेन एकान्तमनसेति भावः।

(छ) जनान्तिकम्। तदुक्तमुक्तं दर्पणे, त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तत् जनान्तिकमिति।

कठिनतरतपस्योज्जृम्भदम्भप्रलम्भा-
दशनिशनिकठोरं चित्तमस्य द्विजस्य।
सपदि भगवदङ्घ्रिस्पर्शनादेव भूत्वा
द्रुतमिव नयनाभ्यां रोमभिश्चोज्जिहीते ॥ (क)

तदधुनाऽस्मिन् पुत्रधिया कीर्त्तनानन्देन सह विहरमाणा वयं मत्तनयोऽनयोपचित्याऽमीभिरेवोन्मादितो दितोऽप्यस्य व्यवहारमार्गे इति बहुशो निर्भर्त्सिताः स्मः शचीदेव्या। यद्यसावधुना धुनानमात्मज-धियमात्मजमात्मजाऽऽनन्दाऽऽवेशविवशमेतं पश्यति श्यति तदाऽस्मिन् पुत्रभावभावं हैयत्वेन (ख)। तत्कथमिदं सम्पत्स्यते।

(क) कठिनेति। कठिनतरतपस्यया उज्जृम्भते उद्भवतीति तथोक्तः यः दम्भप्रलम्भः अभिमानाधिगमः तस्मात् अशनिः वज्रं शनिः क्रूरग्रहविशेषः ताविव कठोरं निष्ठुरम् अस्य द्विजस्य शुक्लाम्बरस्य चित्तं सपदि सद्यः भगवतः अस्य देवस्य चैतन्यस्य अङ्घ्रि-स्पर्शनादेव पादस्पर्शनमात्रादेव नयनाभ्यां द्रुतमिव भूत्वा रोमभिः पुलकैः उज्जिहीते उद्गच्छतीत्यर्थः। मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात्।

(ख) अस्मिन्निति अस्मिन् चैतन्यदेवे पुत्रधिया तनयोऽयमिति बुद्ध्या। कीर्त्तनं गुणादीनां कथनमेव आनन्दम् आनन्दजनकं यस्य तादृशेन भगवता चैतन्येन। विहरमाणाः क्रीडन्तः मत्तनयः मम पुत्रः चैतन्यः अनया दुर्नयया अद्वैताचार्यस्येत्यर्थः उपचित्या वृद्ध्या अमीभिः अद्वैतादिभिः। उन्मादितः उन्मत्तीकृतः। अस्य चैतन्यस्य व्यवहारमार्गः सदाचारपद्धतिः दितः अपि छिन्नोऽपि दोय छेदे इत्यस्य क्तान्तं रूपम्। शचीदेव्या चैतन्यजनन्या। असौ शचीदेवी आत्मजधियं पुत्रबुद्धिं धुनानं कम्पयन्तं त्यजन्तमित्यर्थः आत्मजं पुत्रम्। आत्मनि जायते इति आत्मजः स्वेनैवानुभूयमान इत्यर्थः यः आनन्दः

गदाधरः । आचार्य्यास्ते कथयन्ति ।

अद्वै । किं तत् ।

श्रीवासः । कर्णे । एवमेव ।

अद्वै । साधु साधु नाऽऽनीयतां कः सम्भ्रमो भ्रमोऽस्या अपयातु । (ग)

श्रीवासः । यथाज्ञापयसि । इति निष्क्रम्य तामादाय पुनः प्रविश्य च । स्वामिन्नाचार्य्य विचार्य्य विज्ञापय जगन्मातर-मेतां दृमेतां भगवतोऽत्र कृपाप्रसादौ । (घ)

अद्वै । अञ्जलिं बद्ध्वा देव देवहूतिः कपिलेन किल ज्ञान-योग-भक्तियोग-योगतः कृतार्थीकृता । साम्प्रतमियं विश्व-म्भर-जननी विश्वम्भर-जननीति-कलया परिवृता केवल-बलमान-प्रेमाऽऽनन्देन कृतार्थीक्रियताम् । (ङ) इति करा-

---

परमात्मतत्त्वावबोधजनित इत्यर्थः तस्य आवेशेन उद्रेकेण विषयं वाह्यावबोधमूल्यं यथा तथा एतं चैतन्यदेवं पश्यति अवलोकयति । तदा अस्मिन् देवे पुत्रभावभावं पुत्रत्वाभिमानमित्यर्थः हेयत्वेन इषित-त्वेन स्मृति निरस्यति त्यजतीत्यर्थः ।

(ग) कः सम्भ्रमः ? किं भयमित्यर्थः । अस्या शच्याः भ्रमः भ्रान्तिः पुत्रोऽयमिति मृषावबोध इत्यर्थः अपयातु नश्यतु ।

(घ) हे स्वामिन् ! प्रभो ! आचार्य्य गुरो ! । जगतां मातरं जननीम् एतां शचीं भगवत्चैतन्यस्य जगन्मयत्वादिति भावः । अत शच्यां भगवतः चैतन्यचन्द्रस्य कृपाप्रसादौ दयानुग्रहौ दृमेतां पततामित्यर्थः ।

(ङ) देवहूतिः कपिलजननी । किलेति प्रसिद्धौ । ज्ञानयोगेन भक्तियोगेन च योगेन उपायेन योगः सम्बन्धोपायध्यानसङ्गतियुक्ति-ष्विमरः । कृतार्थीकृता परित्रातेत्यर्थः । विश्वम्भरस्य भवतः जननी

पे चावतुल्ब्र भगवद्व्यतोऽवैयग्रतोऽव्यग्रतोमेष (च) समुपसर्पयति ।

शची । सचमत्कारविस्मयं स्वानन्दाऽऽवेश-पेशलमद्भुत-मयं तनयं विलोक्य जात-तदनुकम्पा कम्पमान-शरीरा वाग्देवताऽवतार-प्रतिभा प्रतिभासमानेव (छ) किञ्चिदपाठीत् ।

विश्वं यदेतत् स्वतनौ निशान्ते
यथावकाशं पुरुषः परोभवान् ।
बिभर्त्ति सोऽयं मम गर्भजोऽभू-
दहो नृलोकस्य विडम्बनं महत् ॥ (ज)

प्रसवित्री विश्वम्भरजनानां जगत्स्वामिनां सामान्यजनानां नीतिकलया आचारांशेन परिदृता आच्छन्ना क्रमागतवैधाचारपरायणेत्यर्थः केवलेन निरवच्छिन्नेन वर्द्धमानेन प्रसरता प्रेमानन्देन कृतार्थीक्रियतां परित्रायताम् ।

(च) अवैयग्रतः अव्यग्रभावेन । अव्यग्रतोमेष अतिसन्तोषेण ।

(छ) सचमत्कारविस्मयमिति चमत्कारः आश्चर्यबुद्धिः, विस्मयः चित्तविकारः ताभ्यां सहितम् । स्वस्य आनन्दावेशेन आनन्दोद्रेकेण पेशलं सौम्यम् अद्भुतमयम् आश्चर्याचारम् । जाता तस्य तनयस्य अनुकम्पा कृपा यस्यां तादृशी अतएव कम्पमानं शरीरं यस्याः तथाभूता सन्तोद्रेकादिति भावः । वाग्देवतेति वाग्देवतायाः सरस्वत्याः अवतारेण उपस्थित्या आविर्भावेणेत्यर्थः या प्रतिभा मतिर्नैर्मल्यं तया प्रतिभासमानेव स्फुरन्तीव ।

(ज) विश्वमिति । यत् यस्मात् एतत् विश्वं निशान्ते स्वकुक्षौ निशान्तं स्वकुक्षान्तयोरित्यमरः । स्वतनौ निजशरीरे यथावकाशं स्वस्य अवकाशमनुसृत्य इत्यर्थः स्थितं दृश्यते इति शेषः तत् तस्मात् भवान् परः पुरुषः परमात्मा । सोऽयं परः पुरुषः मम गर्भजः अभूत् पुत्रत्वेन उत्पन्नः सन् नृलोकस्य मानवस्य महत् विडम्बनम् अनुकरणं बिभर्त्ति मानवलीलामनुवर्त्तते अहो आश्चर्यम् ।

इति स्तुवती यह-स्टहीतेव विह्वला अङ्गादेव तच्चरणौ जिघृ-क्षति। (भ)

अद्वै। निवार्य्य सविस्मयम्। कुतः

इयमस्याः स्फूर्त्तिर्भवति हि सहजः स मातृभावोऽयम्।
देहान्तरमपि भजते निरुपहितः प्राक्तनो भावः॥ (ञ)

भगवान्। देवि! यद्यपि जगज्जननी त्वमसि तथापि आवासादिषु यज्जातस्तेऽपराधस्तदुपरमे परमेश्वर-प्रसादस्ते भावी। भा-वीचिनिकरपरिपन्थी हि भागवतापराधः। (ट)

अद्वै। भगवन्! मैवम्। नाऽपराध्यति जगज्जननीयं क्वापि यज्जठरभूस्त्वमधीशः। हन्त! मातरि भवन्ति सुतानां

(भ) यहस्टहीतेव यहाविष्टेव। जिघृक्षति ग्रहीतुमिच्छति।

(ञ) कुत इति अस्याः यच्याः कुतः कथम् इयं स्फूर्त्तिः प्रतिभाविकाशः भवति? अयं हि सहजः स्वाभाविकः स मातृ-भावः देहान्तरमपि जन्मान्तरमपि भजते प्राप्नोति, तथाहि प्राक्तनः जन्मान्तरीयः भावः निरुपहितः अनाहतः न केनापि आवरीतुं शक्यते इति भावः। जन्मान्तरे इयं बहुभिस्तपोभिर्भगवन्तम् आरा-धितवती, अधुना स भावः स्फुरित इति फलितार्थः।

(ट) तदुपरमे इति तस्य अपराधस्य भर्त्सनजनितस्येत्यर्थः उप-रमे उपशान्तौ निवृत्तौ सत्यामित्यर्थः। भागवतापराधः भगवद्भक्तेषु क्वतः अपराधः भा दीप्तिः आत्मनि परमात्मज्ञानजनितो विकाश इत्यर्थः तस्याः वीचिनिकरस्य तरङ्गचयस्य परिपन्थी प्रतिरोधी। भगव-द्भक्तजनेषु कृतापराधस्य मद्ध्वबोधजनिता प्रतिभा न जायते इति भावः।

(ठ) यदिति यत् यस्मात् अधीशः अधीश्वरस्त्वं जठरभूः अस्या जठरात् आविर्भूत इत्यर्थः। हन्तेति अव्ययं प्रसिद्धार्थकमत्र

मन्तवः किल सुतेषु न मातुः । श्रीवासं सम्बोध्य हंहो श्रीवास ! यद्यपीश्वधिषणा तनयेऽभूद्‌ देवकस्य दुहितुर्न तथापि भक्तिरीदृगजनिष्ट यदेषा पुत्रपद्युगजिष्णुरिहासीत् । (ठ)

श्रीवा । अधुना निःसङ्कोचाः स्मः । (ड) ।

अद्वै । भो भोः श्रीवासादयः ! अस्य केवल-वत्समाने-श्वर्य्यावेशेन मातरं प्रति मातृभावोऽपि निरस्तो मातृ-मातृभावोऽपि निरस्तोऽयं चेत् तद्यथायमावेशो निवर्त्तते तथा सुखम् । (ढ)

सर्वे । सामिवेवमेव । इत्यद्वैतेन समं तथा कुर्वन्ति । भो देव ! भगवती भगवतो भगवन्ता नाथ ! बोधसुखचिन्मयता

बोध्यम् । सुतानां पुत्राणां मातरि मन्तवः अपराधाः भवन्ति न किल नैव मातुः सुतेषु पुत्रेषु । इयं श्री अस्मज्जननी, अतः अस्माक-मपि अगद्गुरुसूनां जननी, वयमेव अस्मासु अपराधिनो भवितुं योग्याः न तु इयम् अस्मासु अपराधिनीति भावः । हंहो इत्यादि । देवकस्य दुहितुः देवक्याः यद्यपि तनये पुत्रे कृष्णे ईशधिषणा ईश्वर-बुद्धिरभूत्, तथापि ईदृक् एतादृशी भक्तिः न अजनिष्ट, यद् यथा एषा शची पुत्रस्य पदयुगजिष्णुः मातृपत्रपुत्रकरणाभिधायिनी इह आसीत् ।

(ड) निःसङ्कोचाः निर्बाधाः ।

(ढ) अस्य चैतन्यदेवस्य इत्यर्थः । केवलेति केवलं वत्समानस्य एतः ऐश्वर्य्यस्य ईशभावस्य आवेशेन आविर्भावेणेत्यर्थः । मातरं शचीम् । निरस्तः अपगतः । चेत् यदि अयं मातरि मातृभावो निरस्तः, तत् तदा यथा अयम् आवेशः ईश्वरत्वाभिनिवेशः निवर्त्तते तथा सुखं सर्वं कुरुत । ईश्वरभावे सति अस्माभिर्न किमपि कार्य्य-मनेन साध्यते, अपगते तु तद्भावे अस्माभिर्बहूनि कर्माणि साधयितुं शक्यन्ते इति भावः ।

च। श्री तथाऽपि हि विभर्त्ति यदा यद्वर्ष्म तत् प्रकृतिमेव दधाति। तदिदानीं भगवन्तोऽवन्तोऽनुकम्पां तथा कर्त्तु-मर्हन्ति। यदाविष्कृतभक्तावतारतया शैशवमारभ्य मद्-विधभाग्यानुसारिरूपं यष्टृभिर्वयमामोदिता दिताऽखिल-तापा भवद्भिः (थ)। तदेवाधुना प्रकटयितुमर्हन्ति। यदाहार्जुनः। तदेव मे दर्शय रूपमित्यारभ्य।

"दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन!।

इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः॥" इति (द)।

वस्तुतस्तु।

अलौकिके वस्तुनि लौकिकात्वं

नालौकिकत्वस्य विरोधहेतुः।

(थ) शाश्वतीति। चिरन्तनी भगवतः ईश्वरस्य भगवत्ता ऐश्वर्य्यम्। हे नाथ! बोधसुखचिन्मयता ज्ञानानन्दमयत्व इत्यर्थः शाश्वतीति शेषः। श्री इति प्रसिद्धार्थमव्ययम्। तथापि ईश्वरत्वस्य शाश्वतत्वेऽपीत्यर्थः एषः ईश्वरः यदा यत् वर्ष्म विग्रहं विभर्त्ति गृह्णाति, तत् प्रकृतिं तस्य वर्ष्मणः प्रकृतिं स्वभावं दधाति हि धारयत्येव। अवन्तः रक्षन्तः। आविष्कृतेति आविष्कृतः प्रकटितः भक्तार्थम् अवतारः यैः तत्तया। दितेति दितः खण्डितः अखिलः समस्तः आध्यात्मिकाधिदैविकाधिभौतिकरूपस्त्रिविधः तापः येषां तादृशैः। वयम् आमोदिताः प्रमोदं प्रापिताः।

(द) दृष्ट्वेति हे जनार्दन! तव इदं सौम्यं सुभगं मानुषं रूपं दृष्ट्वा इदानीं साम्प्रतं सचेताः चित्तवान् तथा प्रकृतिं स्वभावं गतः प्राप्तश्च संवृत्तः अस्मि।

(ध) अलौकिके इति। अलौकिके लोकातीते, वस्तुनि लौकि-कत्वम् अलौकिकस्य लौकिकरूपधारणमित्यर्थः अलौकिकत्वस्य लोका-

मणयन्तराणां गुणसन्निवेश-
श्चिन्तामणेर्न ह्यपकर्षकारी ॥ (थ)

भगवान्। आरितभक्तावेशस्तत्रैव कृतप्रवेशः प्रकृतिमास्थाय (द)।
भो अद्वैतादयः! किमहम् एतावन्तं कालं सुषुप्त इवा-
सम् (ध)। कथं भवद्भिर्नाहं प्रबोधितः।

सर्वे। भगवन्! आनन्दनिद्राभङ्गभिया (न)।

भगवान्। हन्त! एतावान् समयो मयोपहतज्ञानेन (प)
वृथा गमितस्तदागच्छत श्रीकृष्णं कीर्त्तयामः।

सर्वे। सहर्षम्। यथाज्ञापयति देवः। इति निष्क्रान्ताः
सर्वे

इति स्वानन्दावेशो नाम प्रथमोऽङ्कः

नीततायाः न विरोधहेतुः न विसंवादकारणम्। चिन्तामणेः
चिन्तितस्य अलौकिकस्य रत्नविशेषस्य इत्यर्थः मण्यन्तराणां लौकिक-
रत्नानां गुणसन्निवेशः गुणधारणं न हि नैव अपकर्षकारी अपकृष्टतां
नैव आपादयतीत्यर्थः। विशेषेण सामान्यसमर्थनरूपोऽयमर्थान्तर-
न्यासः। उपजातिवृत्तम्।

(द) आरितेति आरितः स्तुत्या स्तुतिपथमवतारितः भक्ता-
नाम् आवेशः उद्धरणाभिनिवेश इत्यर्थः यस्य तथाभूतः तत्रैव तेषां
स्तुतिवचसि कृतप्रवेशः विदिताभिप्राय इति भावः। प्रकृतिं मानव-
स्वभावम् आस्थाय अवलम्ब्य।

(ध) सुषुप्त इव गाढ़निद्रावेशेन स्थित इव।

(न) आनन्देति आनन्देन आत्मनि ईश्वरत्वाभिनिवेशजनितेन
प्रमोदेन इत्यर्थः या निद्रा वाह्यव्यापारनिवृत्तिरूपा तस्याः भङ्गभिया
विच्छेदभयेनेत्यर्थः।

(प) उपहतज्ञानेन विलुप्तचैतन्येन।

# द्वितीयोऽङ्कः ।

ततः प्रविशति विरागः ।

विरागः । सर्वतोऽवलोक्य । अहो ! वहिर्मुखबहुलं जगत् (क) ।

न शौचं नो सत्यं न च शमदमौ नापि नियमो
न शान्तिर्न क्षान्तिः शिव शिव न मैत्री न च दया ।
अहो ! मे निर्व्याजप्रणयिसुहृदोऽमी कलिजनैः
किमुन्मूलीभूता विदधति किमज्ञातवसतिम् ॥ (ख)

हन्त कथमज्ञातवासस्तेषां सम्भावनीयः तथाविधस्थल-विरहात् (ग) । तथाहि,

---

(क) वहिर्मुखेति वहिः मुखं येषां ते वहिर्मुखाः वाह्यदृष्टयः न परमार्थविद इति भावः ते बहुलाः बहवः यत्र तथाभूतम् ।

(ख) नेति । शिवशिवेति खेदसूचकमव्ययम् अथवा हे शिव ! हे शिव ! इति शङ्करमुद्दिश्य खेदवचनमिदम् । न शौचं पवित्रता, नो सत्यं सत्यवचनं, न च शमदमौ स्त इति शेषः । वाह्येन्द्रियाणां शान्तता दमनञ्चेत्यर्थः । नापि नियमः अन्तरिन्द्रियदमनं, न शान्तिः अन्त-रिन्द्रियशान्तता, न क्षान्तिः क्षमा, न मैत्री सौहृद्यं, न च दया अनुकम्पा वर्त्तते अस्तीति क्रियापदमध्याहार्य्यम् । अहो आश्चर्य्यं मे मम निर्व्याजप्रणयिसुहृदः अकपटप्रणयिनो बान्धवाः अमी शौचादय इत्यर्थः कलिजनैः कलिसहचरैरित्यर्थः उन्मूलीभूताः विध्वस्ताः किम् ? अज्ञातवसतिं किं विदधति कुर्वते । शिखरिणी-वृत्तम् ।

(ग) तथाविधस्थलविरहादिति सर्वत्रैव कलेरधिकारादिति भावः ।

षष्ठे कर्मणि केवलं कृतधियः सूत्रैकचिह्ना द्विजाः
संज्ञामात्रविशेषिता भुजभुवो वैश्यास्तु बौद्धा इव ।
शूद्राः पण्डितमानिनो गुरुतया धर्मोपदेशोत्सुका
वर्णानां गतिरीदृशीव कलिना हा हन्त ! सम्पादिता ॥ (च)

अपिच,

विवाहायोग्यत्वादिह कतिचिदाद्याश्रमयुजो
गृहस्थाः स्त्रीपुत्रोदरभरणमात्रव्यसनिनः ।
अहो ! वानप्रस्थाः श्रवणपथमात्रप्रणयिनः
परिव्राजावेशैः परमुपहरन्ते परिचयम् ॥ (छ)

---

(च) षष्ठे इति । केवलं सूत्रं यज्ञोपवीतम् एकं मुख्यं चिह्नं येषां तथोक्ताः द्विजाः ब्राह्मणाः केवलं षष्ठे कर्मणि षष्ठयामार्द्धव्यापारे भोजने इति भावः तस्य षष्ठयामार्द्धकर्त्तव्यत्वनियमादिति भावः । कृतधियः कृतबुद्धयः सुनिपुणा इति भावः न तु ब्रह्मण्यपरा इति भावः । भुजभुवः बाहुजाः क्षत्रिया इत्यर्थः ब्रह्मणो बाहुप्रभवत्वात्तेषामिति भावः । संज्ञामात्रेण नाम्नैव विशेषिताः व्यवच्छिन्नाः न तु तज्जात्युक्तकर्मकारिण इति भावः । वैश्यास्तु बौद्धा इव बुद्धमतावलम्बिन इव प्रायेण स्वजातीयाचारं न कुर्वन्तीति भावः । शूद्राः पण्डितमानिनः आत्मानं पण्डितं मन्यन्ते इति तथोक्ताः तथा गुरुतया धर्मोद्देशे उत्सुकाः तत्पराः । ते हि त्रैवर्णिकसेवाधर्मं त्यक्त्वा इदानीं धर्ममुपदिशामीति भावः । हा हन्त इति खेदजनकमव्ययद्वयं कलिना वर्णानां ब्राह्मणादीनाम् ईदृशी एव गतिः सम्पादिता ? शार्दूलविक्रीडितं वृत्तम् ।

(छ) विवाहेति । इह कलौ कतिचित् जनाः विवाहायोग्यत्वात् उद्वाहे असमर्थत्वादित्यर्थः आद्यम् आश्रमं ब्रह्मचर्यमित्यर्थः युञ्जते इति तथोक्ताः नैष्ठिकब्रह्मचारिण इति भावः नैष्ठिकाभिमानिन इत्यर्थः ।

कतिचित् पदानि परिक्रम्य। अहो! अयं समीचीनो जनपदः। अत्र हि भूरयो रयोज्ज्वलप्रतिभाः प्रतिभान्ति विद्वांसः। तदमी अवगाह्या बाह्या अवाह्या वा (च)।

इति चिरं निरूप्य। अहो!

अभ्यासाद्य उपाधिजात्यनुमितिव्याप्त्यादिशब्दावले-
र्जन्मारभ्य सुदूरदूरभगवद्वार्त्ताप्रसक्ता अमी।
ये यत्राधिककल्पनाकुशलिनस्ते तत्र विद्वत्तमाः
स्वीयं कल्पनमेव शास्त्रमिति ये जानन्त्यहो तार्किकाः॥ (छ)

---

न्दहस्थाः द्वितीयाश्रमस्थाः जनाः स्त्रियाः पुत्रस्य उदरस्य च भरणमात्रे व्यसनिनः आसक्ताः न तु पितृमातृभ्रातृतिथिप्रभृतीनां भरणपरा इति भावः। अहो आश्चर्यं वानप्रस्थाः तापसाः अवचपचमात्रप्रयासिनः तापस इति शब्दतः श्रूयन्ते एव न तु कोऽपि वर्त्तते इति भावः। कतिचित् जनाः परिव्राजा वेशैः परिव्राजकचिह्नैः परं केवलं परिचयम् उपहरन्ते ददति वयं परिव्राजका इति स्वार्थसिद्धये लोकान् वञ्चयन्तीति भावः। शिखरिणीवृत्तम्।

(च) समीचीनः चतुरतः सम्यङ् इति यावत्। भूरयः बहवः। रयेति रयेण वेगेन उज्ज्वलाः प्रतिभाः दीप्तयः येषां तथाभूताः। अवगाह्याः दृष्टव्याः परीक्षितव्या इति यावत् बाह्याः बहिरुज्ज्वलाः वा अवाह्याः अन्तरुज्ज्वला इति भावः।

(छ) अभ्यासादिति। ये जनाः जन्मारभ्य आजन्म उपाधिः जातिः अनुमितिः व्याप्तिश्च आदिर्येषां तेषां शब्दानाम् आवलिः पङ्क्तिः तस्याः अभ्यासात् पुनः पुनरालोचनात् सुदूरदूरे अत्यन्तदूरे इत्यर्थः भगवतः ईश्वरस्य वार्त्ताप्रसङ्गः प्रवृत्तिकथा येषां तथाविधाः भगवत्तत्त्वावबोधरहिता इत्यर्थः ते अमी। तत्र तेषु अमीष्विमर्थः मध्ये ये यत्र विषये अधिककल्पनाकुशलाः अधिककाल्पनिपुणा इत्यर्थः ते तत्र विषये विद्वत्तमाः प्रकृष्टतराः। ये च स्वीयं कल्पन-

तद्दलमेभिः सह वार्त्तया इतोऽन्यतो गच्छामि। इति किञ्चिद्दूरं गत्वा। अहो! अमी अमीव-रहिता हिताभियोगा इव दृश्यन्ते तदमूनिरूपयामि। इति तथा कृत्वा। अहो! अमी मायावादिनः (ञ)।

तथाहि,

सन्मात्रानिर्विशेषाश्चिदुपधिरहिता निर्विकल्पा निरीहा
ब्रह्मैवास्मीति वाचा शिव शिव भगवद्विग्रहे लब्धवैराः।
येऽमी श्रौतप्रसिद्धानहह भगवतोऽचिन्त्यशक्त्याद्यशेषान्
प्रत्याख्यान्तो विशेषानिह जहति रतिं हन्त तेभ्यो नमो वः॥

(झ)

---

मेव शास्त्रम् इति जानन्ति, अहो आश्चर्यं ते तार्किकाः तर्कशास्त्रपारगाः अतिप्रधानाः विद्वांस इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ञ) अमीवेति अमीवरहिताः पापरहिताः हिताभियोगा इव शुभप्रवृत्ता इव मायावादिनः कापटिकाः।

(झ) सन्मात्रेति। सन्मात्रे शाश्वते परमात्मनि अनिर्विशेषाः विशेषावबोधरहिताः अहं परमात्मा च निर्विशेषः नावयोः कोऽपि विशेष इति वादिन इत्यर्थः चिदुपधिरहिताः ज्ञानोपाधिवर्जिताः अविशेषज्ञा इत्यर्थः निर्विकल्पाः विकल्परहिताः अहमेवात्मेति संशयरहिता इत्यर्थः निरीहाः निश्चेष्टाः अहं परमात्मा च भिन्न इति ज्ञानचेष्टया वेदितुमनर्हा इति भावः ब्रह्म एव अस्मीति वाचा भगवतः ईश्वरस्य विग्रहे लब्धवैराः ईश्वरशरीरममन्यमाना इत्यर्थः। ये अमी दृश्यमाना जना इति भावः शिव शिव अहह इतिहर्षं खेदसूचकमव्ययम्। श्रौतप्रसिद्धान् श्रुतिषु प्रसिद्धिं गतान् भगवतः अचिन्त्यशक्त्याद्यशेषान् अचिन्तनीयशक्तिप्रभृतीन् अशेषान् अनन्तान् विशेषान् प्रत्याख्यान्तः निराकुर्वन्तः इह भगवति रतिम् अनुरागं भक्तिमिति यावत् जहति त्यजन्ति, तेभ्यः वः युष्मभ्यं नमः। स्रग्धरावृत्तम्।

इति तावदपास्य पुनरन्यतो गत्वा परितः परिलोक्य। अहो! अमी यदन्योऽन्यं विवदन्ते तदस्य तत्त्वमवगन्तव्यम्। इति निभाल्य। अहो! कपिल-कणाद-पातञ्जल-जैमिनि-मतकोविदा एते अन्योऽन्यं विवदन्ते भगवत्तत्त्वं न केऽपि जानन्ति तदितो गन्तव्यम्। इति पुनः कतिचित् पदानि गत्वा। अहो! दक्षिणस्यां दिशि पतितोऽस्मि। यदमी आर्हत-सौगत-कापालिकाः प्रचण्डा हि पाषण्डाः। एते पाशुपता अपि हतायुषो मां हनिष्यन्ति तदितः पलायनमेव शरणम् (ञ)। इत्यपसृत्य कियद्दूरं गत्वा किञ्चिदवलोक्य। अहो! अयं साधुर्भविष्यति यतः खलु नदीतट निकट-प्रकट-शिलापट्ट-घटित-सुखोपवेशः क्लेशातीतो गुणातीतं किमपि ध्यायन्निव (ट) समयं गमयति। तदमुं निरूपयामि। इति तथा कृत्वा। अहो।

(ञ) विवदन्ते विवादं कुर्वन्ति। कपिलेत्यादि कपिलमतं साङ्ख्यशास्त्रं कणादमतं वैशेषिकदर्शनं पातञ्जलमतं पतञ्जलिमुनिप्रणीतं दर्शनं जैमिनिमतं मीमांसादर्शनम् एतेषु कोविदाः अभिज्ञाः अन्योऽन्यं परस्परम्। भगवतः ईश्वरस्य तत्त्वं याथार्थ्यम्। इतः अस्मात् प्रदेशात्। आर्हतेत्यादि आर्हताः सौगताः कापालिकाश्च श्रौतस्मार्त-मतबाह्याः प्रचण्डाः दारुणाः पाषण्डाः विधर्मिणः। पाशुपताः पाशुपतशास्त्रानुयायिनः हतायुषः हथा क्षपितजीवना इत्यर्थः। शरणं रक्षिता।

(ट) नदीति। नद्यास्तटस्य तीरस्य निकटे प्रकटः विशालः यः शिलापट्टः तत्र घटितः कृतः सुखेन उपवेशः उपवेशनं येन तथोक्तः। क्लेशातीतः क्लेशमननुभवन्नित्यर्थः। किमपि अनिर्वचनीयं गुणातीतं निर्गुणं परमात्मानमित्यर्थः ध्यायन्निव चिन्तयन्निव।

जिह्वाग्रेण ललाटचन्द्रजसुधास्यन्दावरोधे मह-
द्दाक्ष्यं व्यञ्जयतो निमील्य नयने बद्ध्वाऽऽसनं ध्यायतः।
अस्योपात्तनदीतटस्य किमयं भङ्गः समाधेरभूत्

इति सविस्मयं विचिन्त्य। अहो! ज्ञातम्।

पानीयाहरणप्रवृत्ततरुणीमञ्जुस्वनाकर्णनैः॥ (ठ)

तदिदमुदरभरणाय केवलं नाट्यमेतस्य। पुनरन्यतो गत्वा परितोऽवलोक्य। अहो! अयं निष्परिग्रह इव लक्ष्यते। तैर्थिक एव भविष्यति। तदस्य दैवादागतेन पथिकेन सह सङ्कथयतः कथयैव हृदयमाकलनीयम् (ड)। इति आकर्ण्य स्वयमनुवदति।

(ठ) जिह्वेति। जिह्वाग्रेण रसनाग्रेण स्फुरतेति भावः। ललाटे पतिता या चन्द्रजसुधा चन्द्रकिरणः तस्याः स्यन्दस्य निःसरणस्य अधोगमनस्य अवरोधे वर्त्मप्रतिरोधे महत् दाक्ष्यं नैपुण्यं व्यञ्जयतः प्रकटयतः तथा नयने निमील्य आसनं बद्ध्वा योगासनमास्थायेत्यर्थः ध्यायतः चिन्तयतः उपात्तनदीतटस्य प्राप्तनदीतीरस्य नदीतीरस्थितस्येत्यर्थः अस्य जनस्य अयं समाधेः भङ्गः किं कथं अभूत्?। पानीयस्य जलस्य आहरणे प्रवृत्तायाः तरुण्याः युवत्याः मञ्जुस्वनस्य मञ्जीरभरणस्य नूपुरस्य आकर्णनैः श्रवणैः समाधिभङ्गः अभूदिति ज्ञातमित्यनेनान्वयः। शार्दूलविक्रीडितं वृत्तम्।

(ड) नाट्यम् अभिनयः चेष्टितमिति यावत् एवं स्थितं मां दृष्ट्वा सर्वे महापुरुषधिया अर्चयिष्यन्ति ततो मे अनायासेन उदराद्याहिकं सम्पत्स्यते इति भावः। निष्परिग्रह इव प्रतिग्रहवर्जित इव वा निष्प्रलीक इव। तैर्थिकः तीर्थपर्यटनपरः तीर्थसेवी वा। पथिकेन केनचिदिति भावः। सङ्कथयतः आलपतः। आकलनीयं प्रवेष्टव्यम्।

गङ्गाद्वारगयाप्रयागमथुरावाराणसीपुष्कर-
श्रीरङ्गोत्तरकोशलाबदरिकासेतुप्रभासादिकाम् ।
अब्देनैव परिक्रमैस्त्रिचतुरैस्तीर्थावलीं पर्यट-
न्नब्दानां कति वा शतानि गमितान्यस्माद्दृशानेतुकः ॥ (ढ)

इत्यनूद्य । भद्र भो भद्र कलिनोपद्रुतं सत्त्वं निभृतं (ण) त्वयि वर्त्तते । तदितोऽपसरामः । इति मया कृत्वा दूरतोऽवलोक्य । अहो । अयं तपस्वी समीचीनो भविष्यतीव निभालयामि । इति कृत्वा हन्त हन्त ततोऽप्ययं दुष्कृती । तथाहि,

हूं हूं हूमिति तीव्रनिष्ठुरगिरा दृष्ट्याप्यतिक्रूरया
दूरोत्सारितलोक एष चरणावुत्क्षिप्य दूरं क्षिपन् ।
मृत्स्नालिप्तललाटदोस्तटगलग्रीवोदरोराः कुशै-
र्दीव्यत्पाणितलः समेति तनुमान् दम्भः किमाहो स्मयः (त)

---

(ढ) गङ्गेति । को जनः गङ्गाद्वारादिकां तीर्थावलीं तीर्थश्रेणीम् अब्दानां वत्सराणां गमितानि क्षपितानि कति वा शतानि व्याप्येति शेषः अब्देनैव प्रत्येकेन वत्सरेणैव त्रिचतुरैः परिक्रमैः परिभ्रमणैः पर्यटन् परिभ्रमन् सन् अस्मादृशान् एतु प्राप्नोतु ? न कोऽपीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ण) उपद्रुतं निपीडितम् । निभृतं गूढम् । सत्त्वं बलमोजि-रियम् । निभालयामि पश्यामि ।

(त) हूमिति । एषः हूं हूं हूम् इति तीव्रनिष्ठुरगिरा तीक्ष्णनीरसवचसा अतिक्रूरया असौम्यया दृष्ट्यापि दूरम् उत्सारिताः वारिताः लोका येन तथोक्तः चरणौ पादौ उत्क्षिप्य ऊर्ध्वं कृत्वा दूरम् अतिवेगं क्षिपन् मृत्स्नाभिः मृत्तिकाभिः लिप्तानि ललाट-दोस्तटगलग्रीवोदरोरांसि भाल बाहुतटकण्ठग्रीवाकुक्षिवक्षांसि येन

अहो चित्रमिदानीम् ।

विष्णोर्भक्तिं निरुपधिमृते धारणाध्याननिष्ठा
शास्त्राभ्यासश्रमजपतपःकर्मणां कौशलानि ।
शैलूषाणामिव निपुणताऽऽधिक्यशिक्षाविशेषा
नानाकारा जठरपिठरावर्त्तपूर्त्तिप्रकाराः ॥

तदहो कले साधु एकातपत्रीकृतं भुवनतलं भवता ।

तथाहि,

उत्सारितं शमदमादि निगृह्य गाढं
भृत्यीकृतं क्व च न दम्भ धनार्जनाय ।

नश्वरभूतः कुक्षिः दीव्यत् विराजत् पाणितलं यस्य तथाविधः कुशमुष्टिरित्यर्थः सन् तनुमान् शरीरी दम्भः किम् ? आहो अथवा स्वयं गर्वः किं समेति समागच्छति ? । शार्दूलविक्रीडितं वृत्तम् ।

(घ) विष्णोरिति । शैलूषाणां नटानां शैलूषो नटभिक्षयोरित्यमरः । निपुणताधिक्येन नैपुण्यातिरेकेण शिक्षाविशेषा इव एतेषामिति अध्याहार्य्यं नानाकारा विविधप्रकाराः जठराण्येव पिठराणि भाण्डानि तेषाम् आवर्त्तानाम् आवर्त्तगर्त्तान्तराणां पूर्त्तिप्रकाराः भरणोपायविशेषाः, तथाहि निरुपधिं निष्कपटां विष्णोः भक्तिम् ऋते विना धारणाध्याननिष्ठा एकाग्रतः समाध्युत्कर्षः, तथा शास्त्राणामभ्यासे श्रमः जपः तपः कर्म च तेषां कौशलानि नैपुण्यानि दृश्यन्ते इति शेषः । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् ।

(ङ) उत्सारितमिति । शमदमादि गाढं निगृह्य ताडयित्वा उत्सारितम् अपसारितं, धनार्जनाय क्व च न भृत्यीकृतम् ? भृत्यवत् आचरितम् अधुना धनार्जनार्थमेव शमदमादीति भावः । धर्मशास्त्री

कामं समूलमुदमूलयत धर्मशास्त्री
मैत्र्यादयश्च किमतःपरमीहितव्यम् ॥ (ङ)

कथं विश्रम्य । तादृश-बन्धु-जन-विप्रयोग-जनित-क्लेशेन चिरतर-तदनुसन्धान-कृतपरिश्रमेण च निःसारीभूत-भूतलाऽवलोकन-शोकेन (ध) च भृशमाकुलोऽस्मि । तेन क्वचन च क्षणं विश्रमणीयम् । इति तथा कृत्वा सवाष्पम् ।

दृष्टं सर्वमिदं मनोवचनयोरुद्देश्यतच्चेष्टयो-
र्वैजात्यैकविसंष्ठुलं कलिमलश्रेणीकृतग्लानितः ।
कृष्णं कीर्त्तयतस्तथानुभजतः साश्रून् सरोमोद्गमान्
बाह्याभ्यन्तरयोः समान् बत कदा वीक्षामहे वैष्णवान् ॥ (न)

---

धर्मतत्त्वः मैत्र्यादयः सौहृद्यभावादयश्च कामं सम्यक् समूलं यथा तथा उदमूल्यत उन्मूलिताः । अतःपरं किम् ? ईहितव्यं चेष्टितव्यं कर्त्तव्यमित्यर्थः । वसन्ततिलकं वृत्तम् ।

(ध) तादृशेति । तादृशानां बन्धुजनादीनां शमदमादीनामिति भावः विप्रयोगेन विरहेण जनितः उत्पादितः यः क्लेशः तेन । चिरतरं बहुकालं व्याप्य तेषां शमदमादीनामनुसन्धाने अन्वेषणे कृतः परिश्रमो येन तादृशेन । निःसारीभूतेति निःसारीभूतम् असारतां प्राप्तं यत् भूतलं तस्य अवलोकनेन यः शोकः तेन ।

(न) दृष्टमिति । कलिमलश्रेणीभिः कलिजनितपापराशिभिः कृता उत्पादिता या ग्लानिः मनोविकृतिः तया हेतुना मनोवचनयोः मनसः वचनस्य च उद्देश्यतच्चेष्टयोः मनस उद्देश्यमन्यत् वचनचेष्टा अन्या इति भावः वैजात्येन विजातीयतया अतिशयेनेत्यर्थः विसं-ष्ठुलं विपर्यस्तं सर्वम् इदं पूर्वोक्तं दृष्टं मयेति शेषः । बत खेदे कदा कृष्णं कीर्त्तयतः तथा अनुभजतः सेवमानान् साश्रून् सानन्दवाष्पान् सरोमोद्गमान् पुलकिताङ्गान् बाह्याभ्यन्तरयोः वचनमनसोः समान्

आकाशे कर्णं दत्त्वा। "किं ब्रवीषि। यत्र भक्तिस्तत्रैव ते द्रष्टव्या" । इति कर्णं विन्यस्य। अहो! भक्तिदेवी काप्यस्तीति। कथ्यते। पुनराकाशे कर्णं दत्त्वा। किं ब्रवीषि भोः!

"गौडक्षौणी जयति कतमा पुण्यतीर्थावतंस-
प्राया याऽसौ वहति नगरीं श्रीनवद्वीपनाम्नीम्।
यस्यां चामीकरचयरुचेरीश्वरस्यावतारो
यस्मिन् मूर्त्ता पुरिपुरि परिस्पन्दते भक्तिदेवी" ॥ (प)

इति वर्णनम्। हन्त हन्त जीवद्भिः किं न दृश्यते (फ) तदितस्तत्रैव गच्छामि। इति कतिचित्पदानि परिक्रामति।

ततः प्रविशति भक्तिदेवी।

भक्तिदेवी। पुरोऽवलोक्य। अम्मो! को एषो निरन्तर-गलन्तोव्व अ-वेअणा-जज्जरिज्जन्त-माणसो माणसाहिण-

---

तत्त्वान् अभिज्ञान् अकपटानिति भावः वैष्णवानां दीक्षामन्त्रे पञ्चानः यमिति शेषः। शार्दूलविक्रीडितं वृत्तम्।

(प) गौडक्षौणीति कतमा कापि पुण्यतीर्थावतंसप्राया सकल-तीर्थशिरोभूतवर्त्तेत्यर्थः गौडक्षौणी गौडभूमिः जयति सर्वोत्कर्षेण वर्त्तते। या असौ गौडक्षौणी श्रीनवद्वीपनाम्नीं नगरीं वहति। यस्यां नगर्यां चामीकरचयरुचेः गौराङ्गस्य ईश्वरस्य अवतारः अस्तीति शेषः। यस्मिन् अवतारे सति पुरि पुरि प्रतिपदं मूर्त्ता मूर्त्तिमती भक्तिदेवी परिस्पन्दते परिस्फुरति। मन्दाक्रान्ता वृत्तम्।

(फ) जीवद्भिरिति जीवद्भिः प्राणिभिः किं न दृश्यते? अपितु दृश्यते एवेत्यर्थः सा भक्तिदेवीति शेषः।

(ब) निरन्तरेति निरन्तरेण अविरतेन गलता वहता शोकेन

विराग: । अवलोक्य । इयमेव भक्तिदेवी । तथाहि,

अन्त: प्रसादयति शोधयतीन्द्रियाणि
मोक्षञ्च तुच्छयति किं पुनरर्थकामौ ।
सद्य: कृतार्थयति सन्निहितैव जीवा-
नानन्दसिन्धुविवरेषु निमज्जयन्ती ॥ (अ)

तदुपसर्पामि । इत्युपसृत्य । देवि ! विरागोऽहं प्रणमामि ।

भक्ति: । सवात्सल्यम् । भात ! भो जीवसि वसिणं परा-णोसि तुमम् (अं) । एहि एहि । इति करेण स्पृशति (१) ।

विरा । चरणावभिवाद्य । देवि ! कथय कथं सत्वादय इव कलिना भवत्यो (य) न पराभूता: ? ।

भक्ति: । विराअ ! ण आणेसि सुणाह । अम्हाणंजेव काए

(१) हे भ्रात ! जीवसि वशिनाम् प्राणोऽसि त्वम् ।

---

(अ) अन्तरिति सन्निहितैव निकटवर्त्तिन्येव अन्त: अन्त:करणं प्रसादयति प्रसन्नं करोति इन्द्रियाणि शोधयति विमलयति, मोक्षञ्च कैवल्यमपि अर्थकामौ किं पुन: । तुच्छयति हसितं करोति; तथा जीवान् प्राणिन: आनन्दसिन्धुविवरेषु आनन्दसागरोदरेषु निमज्ज-यन्ती सती सद्य: सपदि कृतार्थयति कृतार्थान् करोति । अत्र बह्वीनां क्रियाणाम् एककारकत्वात् दीपकालङ्कार: । तदुक्तं दर्पणे, अप्रस्तुत-प्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति । वसन्ततिलकं वृत्तम् ।

(अं) वशिनां जितेन्द्रियाणां प्राण: बलम् ।

(य) सत्वादय इति आदिपदेन असाद्यादीनां ग्रहणम् । भवत्य: यूयम् ।

कोवि मच्छाकारचिमो भअवं भव-बन्ध-च्छेअअ-चरिदो (ट) गोरचन्दो ओदीणो (१)।

विरा। भगवति! कथय किमत्र रहस्यम् (ठ)।

भक्तिः। विराअ! एदस्सिं कलिआले कलिआ-लेस-मेत्त' वि धम्मन्तरं ण त्थि। ण त्थिरदरं किंपि होइ। केवलं अलङ्करेदि एदं कलिं भअवद्धम्मो बन्धं मोअंवि पराकरोदित्ति साहण-सज्झ-सद्धम्म'। सुद भत्ति-जोएण एणसामवहारएण कलि-मल-मलण-कारिणा आचण्डालं चण्डाऽलङ्घणिज्जदुव्वासणा-वास-णासेण सङ्गोपङ्गा णो' मादिसीओ भत्तिदहूणी सङ्के कदुअ भअवदा अवदारो किदो भत्तवेसेण (२) (ड)।

(१) विराग! न जानासि शृणु? मत्स्याकारेण कृते कोऽपि मत्स्याकारधिको भगवान् भव-बन्धच्छेदक-चरितो गौरचन्द्रः अवतीर्णः।

(२) विराग! एतस्मिन् कलिकाले कलिका-लेशमात्रमपि धर्मान्तरं नास्ति। न स्थिरतरं किमपि भवति। केवलम् अलङ्करोति एनं कलिं भगवद्धर्मो बन्धं मोक्षमपि पराकरोति इति साधन-साध्यःसद्धर्मः। भक्तियोगेन एनसामवहारकेण कलि-मल-मथन-कारिणा आचण्डालं चण्डाऽलङ्घनीय-दुर्वासना-वास-नाशेन साङ्गोपाङ्गाः मादृशीः भक्तिदेवीः सङ्गे कृत्वा भगवता अवतारः कृतो भक्तवेशेन।

(ट) भवेति। भवः संसार एव बन्धः तस्य छेदकं अंशकं चरितं यस्य तथाभूतः।

(ठ) रहस्यं तत्त्वम्।

(ड) कलिकेति। कलिका कोरकः तस्याः लेशमात्रं बिन्दुमात्रम् धर्मान्तरं धर्मविशेषः। स्थिरतरं दीर्घकालस्थायीकार्यः। अलङ्करोति भूषयति। भगवद्धर्मः भगवतः ईश्वरस्य गौरचन्द्रस्य धर्मः गुणविशेषः।

विरा । तस्य कृपादेवीं विना स्वातन्त्र्येण भवतीनां तथा सामर्थ्यं (ङ) न विद्यते ।

भक्तिः । तस्स वा तज्जणाणं वा णवाऽणुग्गहमन्तरेण अम्हे ण जीवम्ह किं उण तधा कुणम्ह (१) । (च)

विरा । द्वितीयप्रश्नस्योत्तरं किम् ? (छ)

भक्तिः । विराअ ! सुणेहि (२) इति । संस्कृतेन

नवद्वीपे नासीदिह स जनो यस्य न पुरे
हरेर्गेहं नो तद्यदपि भगवन्मूर्त्तिरहितम् ।
न सा यस्याः सेवा न भवति न सा या न सरसा
रसो नासौ सङ्कीर्त्तननटनमुख्यो न खलु यः ॥

(१) तस्य वा तज्जनानां वा नवानुग्रहमन्तरेण वयं न भवामः किं पुनस्तथा कुर्म्मः ।

(२) विराग ! शृणु !

कुमतीरित्यर्थः सुधीमः शिष्यः । तथा तेषां चण्डालादीनामपि अन्तः अनधिकमपि अनिर्वचनीयं रसभावं प्रेमापरनामानं अनुरागं तनुमः विस्तारयामः । पिच्छरिणीहत्तम् ।

(ङ) स्वातन्त्र्येण स्वाधीनतया । सामर्थ्यं शक्तिः ।

(च) तस्येति तस्य देवस्य गौराङ्गस्य । तज्जनानां तत्सहचराणाम् अद्वैतादीनामित्यर्थः नवानुग्रहम् अभिनवम् अनुग्रहम् अन्तरेण विना । भवामः तिष्ठामः किं पुनस्तथा कुर्म्मः । तथा कर्त्तुं न शक्यते इति भावः ।

(छ) द्वितीयेति स वा देवः किमीहते इत्यस्य ।

(ज) नवेति । इहेति वर्णद्वयात्मकमव्ययम् । नवद्वीपे स जनः नासीत्, यस्य जनस्य पुरे हरेः नारायणस्य गेहं मन्दिरं न आसीत् इति शेषः, तत् हरिगेहमपि नो आसीत् इति शेषः यत् भगवतः हरेः मूर्त्ति-

इअंज्जेव तस्स ईहा (१)।

विरा। किमयं स्वयमेव तथाऽऽज्ञापयति। किं वा ते त एव तदाशयमभिमत्य मत्यनुसारेण सारेण (ग) व्यवहरन्ति।

भक्तिः। तस्स तहज्जेव महिमा महिमाणदो जं दट्ठुअज्जेव तं तहज्जेव अहम्महमा विअ (घ) होन्ति जणा जो अह तस्स आसअं सअंज्जेव सव्वे जाणन्ति कुणन्ति च तदणुरूअं। तस्स गोदावरी कमलावि गोदीसेव्व। अदो ण कस्सवि देसं तत्थ आसि। आणिद्धमालं सव्वंच जं करोदि तं सुणाह (२)।

(१) इयमेव तस्य इच्छा।

(२) तस्य तथैव महिमा-महिमानतो यत् तं दृष्ट्वैव तथैव अहम्मस्ता इव भवन्ति जना यथा तस्य आशयं स्वयमेव सर्वे जानन्ति

---

रहितम्। भगवन्मूर्त्तिरहितं हरिमन्दिरं नास्तीत्यर्थः। या मूर्त्तिः भगवद्विग्रह इति यावत् न शक्नोति शेषः, यस्याः मूर्त्तेः सेवा परिचर्य्या न भवति। सा सेवापि न शक्नोति शेषः या सरसा सभक्तिका न भक्तिवर्जिता भगवत्सेवा सर्वत्र चलतीति भावः। असौ रसः भक्तिः न, यः खलु सङ्कीर्त्तनं नटनम् नृत्यञ्च सुखं यत्र ताहशेन। सर्वत्रैव भक्त्या सङ्कीर्त्तनं नटनं भवतीति भावः। शिखरिणीवृत्तम्। अत्र पूर्वपूर्वं प्रति परपरस्य विशेषणत्वेनोपादानात् एकावल्यलङ्कारः। तदुक्तं दर्पणे, पूर्वं पूर्वं प्रति विशेषणत्वेन परं परं स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदैकावली द्विधेति।

(ग) सारेण तत्त्वतः।

(घ) तस्येति। तस्य देवस्य महिमानतः महिमा माहात्म्येन आनतः माहात्म्यपूर्णं इति यावत् महिमा ऐश्वर्य्यं यत् यतः तं देवं दृष्ट्वैव। अहम्मस्ता इव मत्ता इव।

संस्कृतमाश्रित्य ।

श्रीवासस्य गृहे कदाचन कदाप्याचार्य्यरत्नालये
श्रीविद्यानिधिमन्दिरेऽपि च कदा गेहे मुरारेरपि ।
गायन् सुप्रियपार्षदेषु पुलकस्तम्भाश्रुघर्मादिभिः
सान्द्रानन्दमयीभवन्ननुदिनं देवो नरीनृत्यते ॥ (ङ)

विरा। भगवति! स किं सर्वदा भक्ताचरितमेव प्रकटयति। किंवा कदाचिदैश्वर्य्यमपि। (च)

भक्तिः। संस्कृतेन। विराग! यद्यपि

अलौकिकीतोऽपि च लौकिकीयं
लीला हरेः काचन लोभनीया।
महेशशीर्षादपि भूमिमध्यं
गतैव गङ्गा मुदमातनोति ॥ (छ)

कुर्वन्ति च तदनुरूपम्। तस्य अवतारे कस्यापि अवतीर्णेव। यतो न कस्यापि दैन्यं तत्र आसीत्। आचिरस्थकालं स्वयञ्च यत् करोति तत् दृश्यम्।

(ङ) श्रीवासस्येति। स देवः कदाचन श्रीवासस्य गृहे कदापि आचार्य्यरत्नस्य अद्वैतस्य आलये कदाचित् श्रीविद्यानिधिमन्दिरे, कदापि मुरारेः गेहेऽपि सुप्रियपार्षदेषु अतिप्रियसहचरेषु एषु मध्ये इति शेषः अनुदिनं गायन् सङ्गीतं कुर्वन् पुलकस्तम्भाश्रुघर्मादिभिः सात्त्विकभावविशेषैरिति भावः उपलक्षितः सान्द्रानन्दमयीभवन् सान्द्रमानन्दमनुभवन्नित्यर्थः नरीनृत्यते पुनः पुनरतिशयेन वा नृत्यति। शार्दूलविक्रीडितं वृत्तम्।

(च) भक्ताचरितमिति भक्तानाम् आचरितम् आचारम्। ऐश्वर्य्यम् ईश्वरत्वम्।

(छ) अलौकिकीत इति। एवं हरेः लौकिकी लोकाचाररूपा

(१) तहवि कहिम्मि कहिम्मि अलोइअंपि पअडेदि। तधाहि कहिम्मि दिअहे सिरिवास-वासकिअमाण-देव-गेहप्पदक्खिणो दक्खिणी-अकूण-गएण केणवि भाअधेअ-सुईवुत्तिणा महामण्णवेण अमलक्खेण मलेच्छेण वसणं सीव्वन्तेण दीव्वन्तेण दीहदरमएण भअवं विस्सम्भरो दिट्ठो। दट्ठूण तक्खणादो मइरा-मअदोवि मादअतमेण तस्स दंसणमएण विब्भलो भविअ विसम्मिदलोओ हीहीमुओ दिट्ठं दिट्ठं कम्पित्ति-सव्वङ्ग-पुलइदो णिरन्तर-णिस्सरन्त-प्पवाह-

---

(१) तथापि कदापि कथमपि अलौकिकमपि प्रकटयति। तथाहि कस्मिन्नपि दिवसे श्रीवास-वासे क्रियमाण-देवगेहप्रदक्षिणो दक्षिणाकूणगतेन केनापि भागधेयसूचीवृत्तिना महामन्यमेन अमलाक्षेण म्लेच्छेन वसनं सीव्यता दीव्यता दीर्घतरमदेन भगवान् विश्वम्भरो दृष्टः। दृष्ट्वा तत्क्षणतः मदिरा-मदतोऽपि मादकतमेन तस्य दर्शनमदेन

भक्तजनाचरितेत्यर्थः कापि अनिर्वचनीया लीलापि अलौकिकीतोऽपि ऐश्वर्या अपि लीलाया अपीत्यर्थः लोभनीया मनोहारिणी। तथाहि गङ्गा महेशस्य मौलेः शिरसः भूमिमध्यं भूतलं गतैव सुदम् आनन्दम् आतनोति लोकानामिति शेषः जगत्पावनत्वादिति भावः। अत्र हरेर्लौकिकी लीला गङ्गा च अन्योन्यं बिम्बप्रतिबिम्बभावं गमयतीति दृष्टान्तालङ्कारः तदुक्तं दर्पणे। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति। उपजातिवृत्तम्।

(अ) अलौकिकम् ऐश्वर्यम्। श्रीवासवासे श्रीवासस्य गृहे। क्रियमाणेति क्रियमाणं देवगृहस्य देवमन्दिरस्य प्रदक्षिणं येन तथोक्तः। दक्षिणाकूणगतेन दक्षिणाकूणोपस्थितेन। भागधेयेति भागधेयेन भाग्येन सूची इति: जीविका यस्य तादृशेन सूचीजीवनमात्राविना इत्यर्थः अमल इति आख्या यस्य तथोक्तेन। म्लेच्छेन नीच-

वाह सलिल-त्थिमिद-वच्छत्थलो वसणादिअं विच्छिविअ उद्धबाहू णच्चिदं पउत्तो सो। तदो तं तहाविधं पेक्खिअ भअवं अवंच-अन्तो सिरिवासं भणिदवन्तो। श्रीवास! किमिदं कथमकस्मादयमीदृग्जातो दृग्जातोत्सव इव(ज)। तदो तेणवि भणिदं णिदंसणंव्व कुणन्तेण परिहासरसस्स(१) भगवन् अपूर्व एवायं तव मदस्य महिमा यतोऽयमद्य मध-घटघटमानासक्तिरपि न धियं जहाति। हा, तिलमात्र-

---

विह्वलो भूत्वा विकम्पितनेत्रो हीहीमुखो हुं हुं कम्पित-सर्वाङ्ग-पुलकितो निरन्तर-निःसरत्प्रवाह बाष्प-सलिल-स्तिमित-वक्षस्थलो वसनादिकं विक्षिप्य ऊर्द्ध्वबाहुर्नर्त्तितुं प्रवृत्तः सः। ततस्तं तथाविधं प्रेक्ष्य भगवान् अवञ्चयन् श्रीवासं भणितवान्।

(१) ततस्तेनापि भणितं निदर्शनमिव कुर्वता परिहासरसस्य।

---

जातिविशेषेण, गोमांसभक्षको यश्च विरुद्धं बहु भाषते। सर्वाचार-विहीनश्च म्लेच्छ इत्यभिधीयते इत्युक्तलक्षणेन वा। वसनं वस्त्रं सीव्यता सूचीविद्धं कुर्वता। दीव्यता क्रीडता। दीर्घतरेति दीर्घतरः अत्युत्कटः मदः मद्यपानजनितः उल्लासः यस्य तथोक्तेन। भगवान् विश्वम्भरः चैतन्यदेव इत्यर्थः। मादकतमेन अतिमदयतीत्यर्थः विह्वलः विवशः। हीहीमुखः हीहीति हर्षजनितरवः मुखे यस्य तथाभूतः। हुं हुं किमपि वस्तु इति शेषः इति [illegible]। कम्पितानि सर्वाणि अङ्गानि यस्य तथाभूतः। पुलकितः रोमाञ्चितः। निरन्तरेति निरन्तरम् अनवरतं निःसरन् निर्गच्छन् प्रवाहो यस्य तादृशेन बाष्पसलिलेन स्तिमितम् आप्लुतं वक्षस्थलं यस्य तथाभूतः। अवञ्चयन् अप्रतारयन्। ईदृक् एतादृशः। दृग्जातेति दृशोश्चक्षुषोः जातः संघटितः उत्सवः आनन्दजनकव्यापारविशेषः यस्य तथाभूत इव।

अवद्दर्शनेनाऽनेनाऽनेमा आतोऽमा-तोद्द-रक्खिदो छित्तो अञ्चतिममाद्द। (भ्र)

विरा। ततस्ततः।

भक्तिः। तदो तद्दोपहुदि भग्रवदो णाम-मेत्तसरणो सव्वपरिग्गरं उज्झिय ओधूदवेसो भुविग्र अश्चन्तो गाग्रन्तो जवणाचारिएहिं ताडिज्जन्तोवि भग्रवदो णामसङ्कीत्तणं कुणन्तो ज्जेव वट्टदि। केणावि पुच्छिद्दो। उण विस्सम्भरो-ज्जेव ईसरो णावरो कोविति भणेदि। सग्गलेहिं भाग्रवदेहिं विहिद-देहजात्तो (अ) सिद्धो विग्र भविग्र विचरेदि (१)।

---

(१) ततः ततःप्रभृति भगवतो नाममात्रशरणः सर्वपरिकरं त्यक्त्वा अवधूतवेशो भूत्वा श्रमन् गायन् यवनाचार्य्यैश्च ताड्यमानोपि भगवतो नामसङ्कीर्त्तनं कुर्व्वन्नेव वर्त्तते। केनापि पृष्टः पुनर्विश्वम्भर एव ईश्वरो नापरः कोऽपीति वदति। सकलैर्भागवतैर्विहितदेहयात्रः सिद्ध इव भूत्वा विचरति।

(भ्र) तत इति ततः देववाक्यानन्तरं तेन श्रीवासेन। निदर्शनं प्रमाणम्। तत्र मदस्य मादकवस्तुनः। मद्येति मद्यघटे सुराभाजने घटमानः तिष्ठन्तो आसक्तिः अनुरागः यस्य तादृशोऽपि। जहाति त्यजति। तिष्ठेति वयमाल तत्र दर्शनेमेत्यर्थः। अनेनाः अपापः। अंसेति अज्ञातोद्देन अविद्याजनितया पीडया रक्षितः। छित्तः साधुः। अतिममाद्द अतिमात्रं माद्यति च।

(अ) ततः प्रभृति तत आरभ्य। नाममात्रं शरणम् आश्रयः यस्य तथोक्तः गौराङ्ग गौराङ्ग इति नाम कुर्व्वन्नित्यर्थः। सर्वपरिकरं सर्व्वमायासम्। अवधूतवेशः सन्न्यासिवेशधारी। यवनाचार्य्यैश्च तच्छातिगुरुभ्या। भागवतैः भक्तवृन्दैः। विहितेति विहिता कृता देहयात्रा जीवनोपायः यस्य तथाभूतः।

विरा । देवि ! कीदृशरूपमनेन दृष्टम् ।

भक्तिः । विराग ! आणन्दो ज्जेव भअवदो रूवं । जेण रूएण महन्तो ज्जेव आणन्दो होइ । तं ज्जेव तस्स रूवंत्ति इद-रेदरसव्वपेक्खत्तणं आणन्दरूवाणंत्ति आणन्दतारतम्मेण रूव-दंसणस्स तारतम्मम् (१) । (ट)

विरा । कथमयं नीचयोनिरेतादृशसौभाग्य-भाजन-मासीत् ।

भक्तिः । संस्कृतेन ।

न जातिशीलाश्रमधर्म्मविद्या-
कुलाद्यपेक्षो हि हरेः प्रसादः ।
यादृच्छिकोऽसौ बत नास्य पात्रा-
पात्रव्यवस्थाप्रतिपत्तिरास्ते ॥ (ठ)

(१) विराग ! आनन्द एव भगवतो रूपम् । येन रूपेण महानेव आनन्दो भवति । तदेव तस्य रूपमिति इतरेतर-सव्यपेक्षित्वं आनन्दरूपाणामिति आनन्दतारतम्येन रूपदर्शनस्य तारतम्यम् ।

---

(ट) इतरेतरेति आनन्दरूपाणाम् आनन्दजनकरूपाणाम् इतरे-तरसव्यपेक्षित्वम् अन्योन्यसापेक्षित्वमित्यर्थः बहवः आनन्दरूपाः सन्ति, नहि सर्वे समानाः, सर्वेषामेव परस्परं भेदोऽस्तीति भावः । आनन्दतारतम्येन आनन्दस्य तारतम्येन अपकर्षोत्कर्षभेदेन रूपदर्शनस्य भगवत इति शेषः तारतम्यम् अपकर्षोत्कर्षभावः स्यादिति भावः यद्दर्शनेन निरतिशयानन्दोदयात् अन्तरात्मा प्रेमभरा आर्द्रतां याति तदेव तस्य रूपमिति फलितार्थः ।

(ठ) नेति । हरेः प्रसादः जात्यादिकं न अपेक्षते इत्यर्थः । असौ हरिः यादृच्छिकः स्वेच्छाचारी । बत हर्षे । अस्य हरेः पात्रा-पात्रव्यवस्थाप्रतिपत्तिः अयं पात्रम् अयमपात्रम् इत्येवं व्यवस्था

विरा। एवमेव ततस्ततः।

भक्तिः। तदो अवरस्सिं दिअहे मुरारि-भअणाङ्गणे पुण्णिमा-चन्द-चन्दिमा-पक्खालिआए णिसाए उवविट्ठेहिं सअलेहिं भाअवदेहिं सोज्जेव देओ सङ्करिसणरूओ (ङ) दिट्ठो (१)।

विरा। देवि! विस्त्रिष्य कथय।

भक्तिः। अग्गदो वंभमिज्जन्त-मत्त-महुअर-णिअर-परिपिज्जन्त-चन्दिआ-चअ-तक्काल-श्यामलिद-गगणतलान्धआरम्मि दीसन्तम्मि कोवि काअम्बरी-परिमलो सअल-जणेहिं आलद्धो (२)। (ढ)

---

(१) ततः अपरस्मिन् दिवसे मुरारिभवनाङ्गणे पूर्णिमा-चन्द्र-चन्द्रिका-प्रक्षालितायां निशायाम् उपविष्टैः सकलैर्भागवतैः स एव देवो सङ्कर्षणरूपो दृष्टः।

(२) अग्रतो वंभ्रम्यमाण-मत्त-मधुकर-निकर-परिपीयमान-चन्द्रिका-चय-तत्काल-श्यामलित-गगन-तलान्धकारे दृश्यमाने कोऽपि कादम्बरी-परिमलः सकलजनैराजब्धः।

नियमेन प्रतिपत्तिः अनुषङ्गः न आस्ते न असीलार्थः। उपजातिवृत्तम्।

(ङ) सङ्कर्षणरूपः बलभद्ररूपधरः।

(ढ) वंभ्रम्यमाणेति वंभ्रम्यमाणेन समन्तात् सञ्चरता मत्तानां मधुकराणां भ्रमराणां निकरेण निचयेन परिपीयमानः सर्वतः आस्वाद्यमान इत्यर्थः चन्द्रिकाचयः यस्य तादृशम् अतएव तत्काले तस्मिन् काले श्यामलितं यत् गगनतलं तस्मिन् अन्धकारे दृश्यमाने सति भ्रमरनिकराणां समन्तात् सञ्चरणेन ज्योत्स्नावरणात् अन्धकारा-

स्थिरा। ततस्ततः।

भक्तिः। तदो आलद्धे परिमले सअलेहिं भअवं पुच्छि-दो। जधा (१) भगवन् कथमाकस्मिकोऽयं पुष्पन्धय-गणा-न्धीकरणचणः परिमलो विमलो विस्मयं नः समुल्लासयति कादम्बर्याः। परतश्च जनितकौतूहलं हलं विपक्ष-पक्ष-मुषलं मुषलञ्चालोक्यते। (ण)

स्थिरा। ततस्ततः।

भक्तिः। तदो सिरिविस्सम्भरदेएण उत्तम्। (२) हन्त भो निखिल-हृदय-सङ्कर्षणेन सङ्कर्षणेन भवताऽवताऽद्य प्रादुर्भवितव्यम्। तदग्रे कादम्बरी वरीयसी तत्प्रियाणां तदायुधं युधं (त) विनापि विराजमानं हलं मुषलञ्च प्रादुरभूत्।

(१) तत आलब्धे परिमले सकलैर्भगवान् पृष्टः। यथा

(२) ततः श्रीविश्वम्भरदेवेन उक्तम्।

गत इव गमने जाते इति भावः। कादम्बरीपरिमलः सुरासौरभम्। आलब्धः प्राप्तः।

(ण) आकस्मिकः सहसोपस्थितः। पुष्पन्धयेति पुष्पन्धयानां भ्रमराणां गणस्य अन्धीकरणेन उन्मत्तीकरणेन ख्यातः वित्ते चुञ्चुचणा-विति चणप्रत्ययः। समुल्लासयति जनयति। कादम्बर्याः सुरायाः। जनितेति जनितम् उत्पादितं कौतूहलम् औत्सुक्यं येन तथाभूतम्। विपक्षपक्षाणां शत्रुवर्गाणां मुषलं घातनं मुषलं बलभद्रीयास्त्रविशेषः।

(त) निखिलेति। निखिलानां प्राणिनां हृदयसङ्कर्षणेन मनो-हारिणा सङ्कर्षणेन बलदेवेन अवता रक्षता भवता सता जगत् रक्षितुमिति भावः प्रादुर्भवितव्यम् आविर्भवनीयम्। वरीयसी श्रेष्ठ-

चिरा। ततस्ततः।

भक्तिः। तदो तह णिगदन्तोज्जेव सो देओ तेहिं मइ-रामोअ-मुदिअ-लोल-लोहिद-लोअणो एक-कस्स-तड-तण्ड-विद-कुण्डलो ससि-मण्डल-पाण्डरो सोज्जेव गोरचन्दो अइसअं सअंज्जेव तालङ्कोऽलं कोदूहलेण सम्भूतो। तदो तच्चरिदाऽऽछिद-णव-णव-गोद-पदाइं गाअन्तेहिं तेहिं णच्चारिदो बहुदरं ईच्छिदोवि (थ) कखणं विम्हअ-कारि संवुत्तो (१)।

चिरा। ततस्ततः।

---

(१) ततस्तथा निगदन्नेव स देवस्तैर्मदिरा-मोद-मुदित-लोल-लोहित-लोचन एक कर्ण-तट-ताण्डवित-कुण्डलः शशि-मण्डल-पाण्डुरः स एव गौरचन्द्रोऽतिशयं स्वयमेव तालाङ्कोऽलं कौतूहलेन सम्भूतः। तदा तच्चरिताछित-नव-नव-गीतपदानि गायद्भिस्तैर्नर्त्तितो बहुतरमीछितोऽपि क्षणं विस्मयकारी संवृत्तः।

तथा। तत्प्रियायां तस्य बलभद्रस्य प्रियायां प्रियवस्तूनां मध्ये। तदायुधं तस्य अस्त्रम्। युधं युवम्।

(थ) निगदन् वदन्। तैः पार्षदैः सहार्थे तृतीया। मदिरेति मदिरया मद्यपानेन यः आमोदः उल्लासः तेन मुद्रिते निमीलिते लोले चपले लोहिते च लोचने नेत्रे यस्य तथोक्तः एकेति एकस्मिन् कर्णतटे कर्णदेशे ताण्डवितं नर्त्तितं कुण्डलं यस्य तथा-भूतः। शशिमण्डलपाण्डुरः चन्द्रमण्डलोज्ज्वलः। अतिशयम् अति-मात्रं गौरचन्द्रः चैतन्यचन्द्ररूपः स देवः अलम् अतिमात्रेण कौतूहलेन उल्लासेन तालाङ्कः बलरामः सम्भूतः संवृत्तः। तच्चरितेति तस्य सङ्क-र्षणस्य चरिते विषये आछितानि रचितानि नवानि नवानि गीत-पदानि गायद्भिः तैः पार्षदैः। ईछितः स्तुतः।

भक्तिः। एवं बुद्ध-वराह-नरसिंह-मुख्यतरावतारानु-
कारं क्रमेण कृत्वा गते दिवसे ग्रहैतुक-करुणेन नित्या-
नन्दस्य षड्भुजं रूपं (द) तेन दर्शितम् (१)।

विरा। कीदृशं तत्।

भक्तिः। संस्कृतेन।

भुजाभ्यामुभाभ्यां दधच्चारुवंशीं
चतुर्भिर्गदाशङ्खचक्राम्बुजानि।
किरीटञ्च हारांश्च केयूरकञ्च
स्रजं वैजयन्तीं मणिं कौस्तुभञ्च॥ (ध)

---

(१) एवं बुद्ध-वराह-नरसिंह-मुख्यतरावतारानुकारं क्रमेण कृत्वा गते दिवसे अहैतुककरुणेन नित्यानन्दस्य षड्भुजं रूपं तेन दर्शितम्।

---

(द) बुद्धेति बुद्धः असुराणां मोहनार्थम् अहिंसा परमोधर्म इति मतमाविष्कुर्वन् श्रुतिस्मृतिविहितकर्माणि निन्दन् नवमावतार-विशेषः। वराहः पृथिव्युद्धरणार्थं कोलरूपी हिरण्याक्षासुरेन्द्र-संहर्त्ता तृतीयावतारविशेषः। नरसिंहः असुरराजहिरण्यकशिपु-दमनार्थं पञ्चमावतारविशेषः। एते मुख्यतरा ये अवताराः तेषामनु-कारम् अनुकृतिम। अहैतुकेति अहैतुका अकारणा करुणा कृपा यस्य तादृशेन तेन देवेन नित्यानन्दस्य तदाख्यानुचरविशेषस्य षड्भुजं षट्भुजा यत्र तादृशं रूपम्।

(ध) भुजाभ्यामिति उभाभ्यां द्वाभ्यां भुजाभ्यां चारुवंशीं मनो-हरवेणुं चतुर्भिरपरैः भुजैः गदाशङ्खचक्राम्बुजानि तथा किरीटं मुकुटं शिरसेति शेषः, हारान् वैजयन्तीं मालाञ्च कण्ठेनेति शेषः केयूरकं कृताल्ङ्कारविशेषं जात्यभिप्रायेण एकवचनम्। कौस्तुभं तदाख्यं मणिञ्च उरसेति शेषः दधत् दधानं रूपमित्यस्य विशेषणमिदं बोध्यम्। भुजाद्य-प्रधानं हस्तं भुजक्रमप्रधानं चतुर्भिर्यथाकारैरिति तल्लक्षणात्।

अपि च ।

अनाहार्य्यसौन्दर्य्यमाधुर्य्यधुर्य्यं
महौदार्य्यचातुर्य्यगाम्भीर्य्यशौर्य्यम् ।
अवैधुर्य्यधैर्य्यं सदा सौकुमार्य्यं
महस्तुर्य्यमार्य्यं तदाश्चर्य्यमासीत् ॥ (न)

विरा । ततस्ततः ।

भक्तिः । तदो तं रूअं पेक्खिअ परमाणन्द-णिप्फन्दो उअञ्चिद-रोमञ्च-कञ्चुओ (प) बहुदरं त्थुवन्तो आसि णिच्चाणन्दो । जहा (१)

हरिस्त्वं हरस्त्वं विरिञ्चिस्त्वमेव
त्वमापस्त्वमग्निस्त्वमिन्दुस्त्वमर्कः ।

(१) ततस्तद्रूपं प्रेक्ष्य परमानन्द-निस्यन्द उदञ्चित-रोमाञ्च-कञ्चुको बहुतरं स्तुवन् आसीत् नित्यानन्दः । यथा

(न) अनाहार्य्येति अनाहार्य्यैः सहजैः सौन्दर्य्यैः माधुर्य्यैः संक्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितमित्युक्तलक्षणैः धुर्य्यं श्रेष्ठम् । महेति महत् अतिमात्रम् औदार्य्यं दाने सप्रियभाषणमौदार्य्यं शत्रु-मित्रयोः सममेत्युक्तलक्षणं चातुर्य्यं वैदग्ध्यं गाम्भीर्य्यं भीशोकक्रोध-हर्षाद्यैर्गाम्भीर्य्यं निर्विकारतेत्युक्तलक्षणं शौर्य्यं बलशालित्वं यस्मिन् तथोक्तम् । अवैधुर्य्यम् अक्षतमिति भावः धैर्य्यं व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपीत्युक्तलक्षणं यस्मिन् तादृशं सदा सर्व्वदा सौकुमार्य्यं सौम्यता यस्मिन् तथाविधम् आर्य्यं पूज्यम् आश्चर्य्यम् अद्भुतं तुर्य्यं तुरीयं महः तेजः तदा आसीत् । भुजङ्गप्रयातं वृत्तम् ।

( प ) परमेति परम आनन्दनिस्यन्दः आनन्दप्रवाहः यस्य तथोक्तः । उदञ्चितेति उदञ्चितः उद्गतः रोमाञ्च एव कञ्चुकः वर्म्म यस्य तथाभूतः पुलकिताङ्ग इत्यर्थः ।

नभस्त्वं चितिस्त्वं मरुत्त्वं मुरारे !
नमस्ते नमस्ते समस्तेश्वराय ॥ (फ)

अपि च।

भुजैः षड्भिरेभिः समाख्याति कश्चि-
न्निसर्गोग्रषड्वर्गहन्तेति भोस्त्वाम्।
वयं ब्रूमहे हे महेच्छ! त्वमेभि-
श्चतुर्वर्गदो भक्तिदः प्रेमदश्च ॥ (ब)

विरा। अहो! अत्यद्भुतमिदम् ततस्ततः।

भक्तिः। तदा ईसरभावो दाव ईदिसो तस्स कधिदो। पेम्मावेसो सुणीअदु। एत्थ पुरे तिस्सविहाज्जेव पुरिसाओ। केवि अणुरत्ताओ केवि मज्झमाणुरत्ताओ केवि णाणुरत्ताओ णावि विरत्ताओ। विज्झत्थिणो हि णअरविहीए अप्पाणअं ओवारिअ सुरणई-सिणाणं कदुअ त्थिमिद-णिअ-

(फ) हरिरिति। हे मुरारे! त्वं हरिः नारायणः, त्वं हरः शम्भुः, त्वमेव विरिञ्चिः ब्रह्मा। त्वम् आपः जलं, त्वम् अग्निः, त्वम् इन्दुः चन्द्रः, त्वम् अर्कः सूर्यः, त्वं नभः आकाशं, त्वं चितिः पृथिवी, त्वं मरुत् वायुः। समस्तानां सर्वेषां जगतामित्यर्थः ईश्वराय ते तुभ्यं नमः ते तुभ्यं नमः। भुजङ्गप्रयातं वृत्तम्।

(ब) भुजैरिति। भोः नाथेति अध्याहार्यं कश्चित् जनः त्वाम् एभिः षड्भिः भुजैः निसर्गेण स्वभावेन उग्रः दारुणः यः षड्वर्गः कामक्रोधलोभमदमात्सर्य्यं रिपुषट्कमित्यर्थः तस्य हन्ता इति समाख्याति कथयति। हे महेच्छ! महानुभाव! महेच्छस्तु महाशय इत्यमरः। वयं त्वम् एभिः षड्भिः भुजैः चतुर्वर्गदः भक्तिदः प्रेमदश्च धर्मार्थकाममोक्षभक्तिप्रेमषट्कदाता इत्यर्थः इति ब्रूमहे कथयामः। भुजङ्गप्रयातं वृत्तम्।

वसणं ह्येग्र ग्राग्रच्छन्तं पेक्खिग्र कोवि महुरतरं भग्रवदो णामपदं कोवि सरसतरं भाग्रवद-पज्जं कोपि पेम्म-पडि-पक्कं ललिदतर-गीदं सुणावेदि। तदो तं सुणन्तोज्जेव मग्ग-मज्झम्मि भूदले णिवडिग्र त्थिमिद-वसण-णिवडन्त-जल कद्दमिद पुहवीदल-णिवडण-कद्दमिद-सव्वङ्गो वास्प-सलिलेहिं सीमन्तिद-वच्छत्थल-कद्दमो ग्राणन्द-मेखलदाए लदाए बद्धो विग्र विज्जुद्दाम-दाम-पुञ्जो विग्र लुठन्तो वट्टे-दि। तधाविहं पेक्खिग्र ते सड-ग्रराग्रो चावल-दोस-दुसिदाग्रो हसन्तो कोदूहलं कुणन्ति। मुहुत्तन्तरे णिग्र-परिग्रणाग्रो उत्थाविग्र पुणो सुरणईं लम्भिग्र पक्खालिद-सव्वङ्गं सिणावेन्ति। एदं सुणिग्र णिग्र तणग्रस्स णग्रस्स वइवसिग्रं ग्रणुभवइ तस्स जणणी जण-णीदि-विसा-रदावि (१)। (भ)

(१) तत ईश्वरभावस्तावदीदृशस्तस्य कथितः। प्रेमावेशं शृणुत। अस्मिन् पुरे त्रिविधा एव पुरुषाः। केऽपि अनुरक्ताः केऽपि मध्यमानु-रक्ताः केऽपि नानुरक्ता नापि विरक्ताः। विद्यार्थिनो हि भगवद्रोष्ठ्याम् आत्मानम् उत्तार्य सुरनदीस्नानं कृत्वा स्तिमित-निज-वसनं चेमम् आगच्छन्तं प्रेक्ष्य कोऽपि मधुरतरं भगवतो नामपदं कोऽपि सरसतरं भागवत-पद्यं कोऽपि प्रेमपरिपक्व ललिततर-गीतं श्रावयति। ततस्तं

(भ) विद्यार्थिन इति विद्या अर्थिता प्रार्थिता येन तादृशः विद्यार्थीत्यर्थः। स्तिमितनिजवसनम् आर्द्रवस्त्रम् इमं देवम्। प्रेम-परिपक्वं प्रेमसङ्कुलम्। स्तिमितेति स्तिमितात् आर्द्रात् वसनात् निपतता जलेन कर्दमितायां मज्जा कर्दमायां पृथ्वीव्यां नगरवर्त्मनि निपतनेन लुठनेन कर्दमितानि कर्दमयुक्तानि सर्वाणि अङ्गानि यस्य

चित्रा । अहो प्रेमानन्दवैवश्यमवश्यमस्य । (म)

भक्तिः । अवरम्मि वासरे वासरेस-सहस्स-सरिस-महा-महानन्द-परवसो आचारिअ-रअण-पुर-रअण पुरदो चलिअ णिअ घरं आअच्छन्तो मग्ग मज्झम्मि केणावि बम्हण-बन्धुणा बन्धु वाहो णिअ-अणस्स देवो दिट्ठो । दिट्ठिअ तं सो सव्वङ्ग-गलन्त सित्ता-सकाउ वाअं उवाअं अस्सं ण

---

इत्युक्त्वैव मार्गमध्ये भूतले निपत्य किमित-नयन-निपतज्जल-कर्द्दमित-पुरवीथी-निपतन-कर्द्दमित-सर्वाङ्गो बाष्प-सलिलैः सीमन्तित-वक्षः-स्थलकर्द्दम आनन्द-विह्वलतया लतया बद्ध इव विद्युद्दाम-दाम-पुञ्ज इव लुठन् वर्त्तते ।

तथाविधं प्रेक्ष्य ते सहचराश्चापल-दोष-दूषिता हसन्तः कौतु-हलं कुर्वन्ति । मुहूर्त्तान्तरे निज-परिजना उत्थाप्य पुनः सुरनदीं लम्भयित्वा प्रक्षालित-सर्वाङ्गं स्नापयन्ति । इदं श्रुत्वा निज-तनयस्य नयस्य परिवर्त्तितमनुभवति तस्य जननी जन-नीति-विशारदापि ।

तथाभूतः । बाष्पसलिलैः आनन्दाश्रुभिः सीमन्तितः सीमन्तवत् आच-रितः वक्षस्थलकर्दमः यस्य तथाभूतः । विद्युदिति विद्युद्दाम्नां तड़ि-ल्लतानां दामपुञ्ज इव मालानिचय इव । चापलेति चपलस्य भावः चापलं तदेव दोषः तेन दूषिताः चञ्चलप्रकृतयः इत्यर्थः । निजपरि-जनाः स्वपार्षदाः । लम्भयित्वा नीत्वा । जननी शचीदेवी । निजतन-यस्य चैतन्यस्य । नयस्य रीतेः नियमस्य भावस्य इत्यर्थः । परिवर्त्तितं मुञ्जितत्वं प्रभावमिति भावः जनानां नीतिविशारदा लोकाचाराभिज्ञा ।

(म) प्रेमेति प्रेमानन्दस्य वैवश्यं पराधीनत्वम् । अस्य देवस्य अवश्यं विचित्रम् ।

(य) वासरेशेति वासरेशसहस्रस्य सूर्यसहस्रस्य सदृशं महः

पेक्खिअ किम्पि गद्दन्तो आसि। भो भो शचीपुत्तअ विस्स-म्भर! भवन्तं पभवन्तं परमं पुरिसं सव्वे णिअदन्ति। दन्ति-वर-णिक्कम-विक्कम-वैभवं तुह बहुतरंज्जेव णिरूपेन्ति। जइ मज्झ पामरस्स एसो गदोगदो (य) करिज्जइ तदो सच्चंज्जेव तुमं भू-मङ्गल-रूओ ईसरो सरोअ-णअणो सअंज्जेव (२)।

धिरा। ततस्ततः।

भक्तिः। तदो भअवदा जादानुकम्पेण कम्पेण रोम-

(२) अपरस्मिन् वासरे वासरेश-सङ्काश-सदृश-महा-महानन्द-परवश आचार्य्य-रत्न-पुर-रत्न पुरतो नर्त्तित्वा निज-स्टहमागच्छन् मार्ग-मध्ये केनापि ब्राह्मण-बन्धुना बन्धु-नाथो निज-जनस्य देवो दृष्टः। दृष्ट्वा तं स सर्वाङ्ग-गलन-सिक्तः सकाकु वाचम् उपायम् अन्यं न प्रेक्ष्य किमपि गदन् आसीत्। भो भोः शचीपुत्र विश्वम्भर! भवन्तं प्रभवन्तं परमं पुरुषं सर्वे निगदन्ति। दन्तिवर-निक्रम-विक्रम-वैभवं तव बहुतरमेव निरूपयन्ति। यदि मम पामरस्य एष गदोगतः क्रियते तदा सत्यमेव त्वं भू-मङ्गलरूप ईश्वरः सरोज-नयनः स्वयमेव।

तेजः यस्य तथोक्तः आचार्य्येति आचार्य्यरत्नस्य अद्वैताचार्य्यस्य पुर-रत्नस्य नगररत्नभूतस्य इत्यर्थः पुरतः अग्रतः। बन्धुनाथः बन्धुः सखा नाथश्च। निजजनस्य भक्तजनस्य। सर्वाङ्गेति सर्वेभ्यः अङ्गेभ्यः यत् गलनं स्वेदवारिस्रवणं तेन सिक्तः सिक्तकाय इत्यर्थः। अन्यम् उपायं न प्रेक्ष्य अदृष्ट्वा किमपि सकाकु विभिन्नकण्ठध्वनि यथा तथा गदन् कथ-यन्। दन्तिवरेति दन्तिवरः गजराज ऐरावत इत्यर्थः तस्येव विक्रमः पराक्रमः यस्य स दन्तिवरविक्रमः गरुड़ एव विः पक्षी तेन क्रमः पदविक्षेपः गतिरित्यर्थः यस्य स तथोक्तः नारायण इत्यर्थः तस्येव वैभवं प्रभावम्। पामरस्य अबोधस्य गदः रोगः गतः विनष्टः।

घे वा म विअसन्त-देहं तं बम्हणपाअं पाअं मित्तुणो उव-गदं (र) लच्छीकदुअ णिअदिदम् (१)। अये यस्तावद्दी-श्वरः स खलु दुष्प्राप्य एव सर्वेषां किमिति मामुपालभसे। किन्तु तवास्य रोगस्योपशमोपाय एको वर्त्तते। तच्चेदा-चरसि तदाऽयं गमिष्यति नाव सन्देहो देहोऽयं तव पूर्वतोऽपि समीचीन एव (ल) भवितुमर्हति।

चिरा। ततस्ततः।

भक्तिः। तदो बम्हणबन्धुणा पफुल्ल-णोअणेण गदि-दम् (२)। देव! कोऽसो उवाओ तदो पहुणा भणिदं णिदं-सण-रूअं किम्पि (३)। अये द्विजबन्धो! बन्धोरखिलजगतां गतांहःसत्त्वानां भगवतः प्रेम-परायणानां प्रधानतमोऽय-

(१) ततो भगवता जातानुकम्पेन कम्पेन रोमाञ्चेन च विकस-द्देहं तं ब्राह्मणपापं पापं स्वल्पोकपगतं लक्षीकृत्य निगदितम्।

(२) ततो ब्राह्मणबन्धुना प्रफुल्ललोचनेन गदितम्।

(३) हे देव! कोऽसौ उपायस्तदा प्रभुणा भणितं निदर्शनरूपं किमपि।

(र) जातानुकम्पेन सञ्जातदयेन। कम्पेन रोमाञ्चेन च विकसत् देहः यस्य तथाविधं कम्पितलोमाञ्चितकलेवरमित्यर्थः ब्राह्मणपाप कुत्सितं ब्राह्मणं पापः कुत्साञानिति पापप्रत्ययः। स्वल्पोः यमस्य पाशं बन्धनरज्जुम् उपगतं प्राप्तं स्वल्पमुखप्रविष्टप्रायमित्यर्थः।

(ल) दुष्प्राप्यः दुर्लभः। उपालभसे तिरस्करोषि? अयं रोगः गमिष्यति नङ्क्ष्यति। समीचीनः उत्कृष्टः।

(व) निदर्शनरूपं दृष्टान्तरूपम्। गतेति गताः विनष्टाः अंहांसि पापानां सत्त्वा समूहा येषां तेषाम्। प्रेमपरायणानां भक्तानां

महैताचार्य्यः । भस्य चेत्पादोदकं पिवसि तदा पापकृतोऽयं गद्दो हेत्वभावे हेतुकाभाव इति दूरीभविष्यति । (थ)

तदो वम्हणेण गदिदम् । तुह दंसणादोज्जेव गमिस्सदि किं उण कथिदेण उवाअ-विसेसेणेत्ति । तस्स प्पहावदो तधाकिदे सदि पूव्वदोवि समीचीण-देहो सो संवुत्तो (१) ।

धिरा । किं चित्रमिदं तस्य भगवतः । तत्कथय क्व गच्छन्तीच्छन्ती च किं तत्रभवती भवती यत इयं च्छायामात्रसहचरी चरीकर्त्ति त्वराम् । (ग्र)

भक्तिः । अज्ज अज्जउत्तो सिरिवास-वास-मज्झम्मि आअदेण अद्दैअदेण सद्धं किम्पि णिव्विरह-रहस्स वुत्तन्तं कुणन्तो ( घ ) वट्टदि । तं अणुसरिदुं तुवरेमि ( २ ) ।

(१) ततो ब्राह्मणेन गदितम् । तव दर्शनादेव गमिष्यति किं पुनः कथितेन उपाय-विशेषेणेति । तस्य प्रभावतस्तथा कृते सति पूर्वतोऽपि समीचीन-देहःस संवृत्तः ।

(२) आर्य्ये आर्य्यपुत्र श्रीवास-वास-मध्ये आगतेन अद्वैतदेवेन

मित्यर्थः । पापकृतः पापेन जनितः गदः रोगः । हेत्वभावे हेतोः कारणस्य अभावे हेतुकाभावः कार्य्याभावः निमित्ताभावे नैमित्तिकस्याप्यपाय इत्यर्थः । दूरीभविष्यति नाशं गमिष्यति ।

(ग्र) तत्र भवती पूज्या । छायेत छायामात्रं सम्प्रतिविक्षमानं तेन सहचरतीति तथोक्ता छायाहितोदेत्यर्थः त्वराम् औत्सुक्यं चरीकर्त्ति अतिशयेन करोति इयं भवती ।

(घ) निर्विरहेति नि...ति विरहः विच्छेदः वक्तिम् ताहृशं

विरा । भगवति ! तृतीयप्रश्नस्योत्तरमवशिष्यते शिष्यतेयं भगवत्या मम । तदनुशाधि मां स किं मदाश्रयो भविता ऽविता ( ख ) वा किं माम् ।

भक्तिः । संस्कृते । अथ किम् ।

आनन्दोऽपि च मूर्त्तो व्यापी च तथा परिच्छिन्नः ।
तद्वन्नित्यविलासोऽपि च वैराग्याश्रयो भगवान् ॥ (ङ)

तदेहि सहैव गच्छावः । इत्युभौ निष्क्रान्तौ ।

ततः प्रविशत्यासनस्थो भगवान् विश्वम्भरोऽद्वैताचार्यश्च परितः श्रीवासादयश्च ।

भगवान् । सपरिहासं अद्वैतं प्रति । सीतापतिर्जयति लोकमलघ्नकीर्त्तिः । ( च )

---

साद्धं किमपि निरिरहः-रहस्य-वृत्तान्तं कुर्वन् वर्त्तते । तमनुवर्त्तं त्वरयामि ।

यत् रहस्यं निगूढतत्त्वं तस्य वृत्तान्तं विवरणं येन स देवः कदापि अगोचरो न स्यात् तं वृत्तान्तमिति भावः कुर्वन् कथयन्निति भावः ।

(ख) तृतीयप्रश्नस्येति निराश्रयस्य मम वा किमसौ भविताश्रय इत्यस्य । शिष्यता अन्तेवासित्वम् अविता रक्षिता ।

(ङ) आनन्द इति । भगवान् आनन्दः आनन्दस्वरूपोऽपि व्यापी व्यापकः तथा परिच्छिन्नः परिच्छेदं गतः मूर्त्तः मूर्त्तिमान् भवतीति शेषः, तद्वत् तथा नित्यविलासोऽपि विलसनशीलोऽपि विहारात्मकोऽपीत्यर्थः वैराग्याश्रयः विरागवानित्यर्थः ।

(च) लोकेति लोकानां मलानि पापानि हन्तीति तथोक्ता कीर्त्तिः चरितं कीर्त्तनं वा यस्य तथाभूतः ।

अद्वै। कुतोऽत्र रघुनाथो नाथो हि यदूनामयमुज्जृम्भते। (क) तत्रभवान् भगवान्।

भगवान्। अद्वैत! तव विच्छेद-च्छेदकर उपायो निरपायो निरवधि मया चिन्त्यते। येन निरन्तराया निरन्तरा सहवसतिः (ख) स्यात्।

श्रीवा। देव! यद्यपि शान्ति-पुरवास एवाद्वैतोपयोगी तथापि नवानां भक्तानां द्वीप इवेति नवद्वीपे चराविर्भावावधि अत्रैवाद्वैत-पक्षपातः। तेन व्यापको नित्यानन्दश्चात्र। (ग)

अद्वै। अतोऽत्र श्रीवासः। (घ)

श्रीवा। सा तु तिरोभूतेव। (ङ)

---

(क) रघुनाथः रामः। यदूनां नाथः कृष्णः। उज्जृम्भते विलसति तत्रभवान् पूजनीयः।

(ख) विच्छेदेति विच्छेदस्य विरहस्य छेदकरः नाशकः। निरपायः अक्षयः। निरवधि सततम्। निरन्तराया निर्विघ्ना सहवसतिः एकत्र वासः मया सहैकत्रस्थितिरित्यर्थः।

(ग) शान्तीति शान्तः शान्तरसः न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ नच काचिदिच्छा रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधान इत्युक्तलक्षण एव पुरं नगरम् अन्यत्र शान्तिपुरं नाम नगरमिति ध्वनिः तत्रैवाद्वैतगोस्वामिवासस्य प्रसिद्धत्वादिति बोध्यम्। तस्मिन् वासः स्थितिः। अद्वैतस्य उपयोगी योग्यः। चराविर्भावावधि चरार्पणादारभ्य। अत्रैव नवद्वीपे एव। अद्वैतेति अद्वैतः अद्वितीयः पक्षपातः अनुरागः दर्शितो देवेनेति शेषः तेन हेतुना अत्र नवद्वीपे नित्यानन्दः व्यापकः प्रधानः।

(घ) श्रीवासः श्रीर्लक्ष्मीः तस्या वासः अधिष्ठानम्।

(ङ) तिरोभूता अन्तर्हिता।

भगवान् । श्रीर्विष्णुभक्तिः सा भवतस्तु सत्सु (च) वर्त्तत एव ।

अद्वै । इदानीं सैव विष्णुप्रिया ।

भगवान् । अथ किं सत्सु ज्ञानादिमार्गेषु भक्तिरेव विष्णोः प्रिया ॥

अद्वै । अत एव भगवानपि तामङ्गीचकार (छ)

नेपथ्ये भो भो विश्वजनन्या शचीदेव्या निगद्यते ।

अद्वैतस्मान्यत्र विश्रामस्थली न कार्य्या । ममैवालयो विश्रमणीयो मणियोग इव स्वयं वृत्तः । आकर्ण्य । यथाऽऽज्ञापयति विश्वजननी । तदुच्यतां सहैवाद्य भोक्तव्यं भगवता विश्वम्भरेण भरेण हर्षस्य मन्थरोऽयं (ज) मे देहः ।

श्रीवा । तन्ममापि मापितव्यं (झ) तत्र भोजनम् ।

भगवान् । तर्हि परिश्रमोऽस्य महान् भविता वितानेन (ञ) पाकस्य ।

अद्वै । अस्येति किमुच्यते अस्या इत्युच्यताम् ।

(च) श्रीः विष्णुभक्तिः विष्णौ भक्तिरेव श्रीः, सत्सु साधुषु ।

(छ) तां भक्तिम्

(ज) विश्रामस्थली विश्रामस्थानम् । विश्रमणीयः विश्रामयोग्यः । मणियोग इव मणीनां रत्नानां योग इव परस्परमेलनमिव । रत्नतुल्य-भगवद्भक्तानां समवायादिति भावः भरेण अतिशयेन मन्थरः जडः ।

(झ) मापितव्यं निर्धार्य्यम् ।

(ञ) अस्येति अस्या इत्यत्र अस्येति प्रयोग ईश्वरस्य समीपे लिङ्गभेदो नास्तीति सूचनार्थः । अस्य शचीदेव्या इत्यर्थः वितानेन विस्तारेण ।

इति कञ्चिदात्मनीनं (ट) तत्र प्रेषयति। स च इङ्गितं दृष्ट्वा निष्क्रान्तः।

अद्वै। श्रीवासस्य कर्णे लगति।

भगवान्। किमाहाचार्य्य आर्य्यः। (ठ)

श्रीवा। नित्यानन्देन देवस्य षड्भुजं रूपमवलोकितं तद्भवते दर्शनीयमिति स्वरूपदर्शनाय यदङ्गीकृतं मह्यं मह्यं तत्कथं न दर्श्यते भगवताऽवताऽदृष्टं (ड) मे कीदृशमिति।

नेपथ्ये। भो भोः षड्भुजं रूपमवलोकितम्।

भगवान्। सावहित्थम् (ढ)। मम स्वरूपमिदमेव। यदिदमद्वैतप्रेमपात्रम्। (ण)

अद्वै। स्वगतम्। किमत्र ब्रूमहे महेच्छं प्रति यदि तवैतदेव स्वरूपं तदा दर्शनीयम्। श्यामसुन्दर-विग्रहाभिलाषो विश्रान्तः। यदि स एव स्वरूपमित्युच्यते तदास्मिन् प्रेमहानिः (त)। इति चणं परामृशति।

(ट) आत्मनीनम् आत्महितकरम्।

(ठ) आर्य्यः मान्यः आचार्य्यः अद्वैतः।

(ड) अवता रक्षता परित्रायकेणेत्यर्थः, मे मम अदृष्टं भाग्यं कीदृशं येन तद्रूपं मह्यं न दर्श्यते इति फलितार्थः।

(ढ) सावहित्थम् अवहित्था आकारगोपनम् उक्तञ्च दर्पणे। भयगौरवलज्जादेर्हर्षाद्याकारगोपनमवहित्था। व्यापारान्तरासक्त्यन्यथावभाषणविलोकनादिकरीति। तया सहितम्।

(ण) अद्वैतप्रेमपात्रम् अद्वितीयं यत् प्रेम तस्य पात्रं भाजनम्। अथ च अद्वैतस्य अद्वैताचार्य्यस्य प्रेमपात्रं प्रेमनिकेतनमित्यर्थः।

(त) श्यामेति श्यामश्चासौ सुन्दरः मनोहरश्चेति तादृशे विग्रहे

श्रीवा। अस्माकमिदमेव भवद्वपुः प्रेमपात्रमत्र कः सन्देहः। किन्तु स्वयमेवोक्तं "तद्भवते (ग) दर्शयिष्यामि" इति कृत्वाऽसौ निवेदयति।

भगवान्। उन्माद-दशायां (द) केन किं न भण्यते।

श्रीवा। भगवन्! अन्योन्मादस्तु व्याधिरेव। भवत्तु तवोन्मादो द्रष्टृ-श्रोतृणामपि व्याधिनिर्मूलकः। किञ्च जीवस्तु वस्तुतः क्षुद्रानन्देनापि विलुप्तधीरधीर एव भवति। ईश्वरस्य त्वानन्दस्वरूपत्वात् ज्ञानस्वरूपत्वाच्च किं केन बाध्यताम्। तेन स्वाधीनाऽऽनन्दः स्वाधीन-ज्ञानश्चाऽयम्। (ध)

भगवान्। सस्मितम्। तत् खलु मदधीनं न भवति यन्मया दर्शयिष्यते। स्वयमेव भावचक्षुषा (न) दृश्यताम्। इति तदन्तःकरणे स्वरूपमाविर्भावयति।

रूपे अभिलाषः दर्शनकामना विश्रान्तः अपगतः। यदेतत् षड्भुजं रूपं दृष्टम् अस्मिन् दृष्टे अन्यरूपदर्शनाकाङ्क्षा न स्यादिति भावः। स एव श्यामसुन्दर एव। अस्मिन् षड्भुजे प्रेमहानिः प्रेमव्यतिक्रमः स्यादिति शेषः।

(ग) इदमेव दृश्यमानं गौराङ्गरूपमित्यर्थः। तत् षड्भुजम्।

(द) उन्माददशायां विभ्रमावस्थायाम्।

(ध) अन्योन्मादः अन्येषाम् उन्मादः। व्याधिनिर्मूलकः रोगनाशकः जीवः प्राकृतः प्राणी क्षुद्रेण स्वल्पेन आनन्देन प्रमोदेनापि विलुप्तधीः विकृतज्ञानः अधीरः उद्विग्नः। किं केन बाध्यताम् ईश्वरं न कोऽपि विकारः बाधितुं शक्नोतीति भावः। अयम् ईश्वरः।

(न) भावचक्षुषा भक्तिनेत्रेण।

सार्वे। चक्षुषी निमील्य प्रविभावं नाटयति।

श्रीवा। चिरं निर्वर्ण्य। अहो! चित्रम्। अद्वैतोऽद्वैतोपरि परिवर्त्तते (प)। तथाहि,

यद्बाह्येन्द्रियवृत्तयोऽस्य गलिताः स्वानन्दसान्द्रो लयः
कोऽप्यन्तःकरणस्य हन्त नितरां स्पन्देन मन्दं वपुः।
आत्माप्येष लयं ययावनुभवाऽऽस्वाद्ये परे वस्तुनि
प्राणोऽयं श्वसितीति बोधविषयं प्राप्नोति रोमोद्गमैः॥ (फ)

भगवान्। एवमेव तद्वास्वाद-संवादः। (ब)

श्रीवा। भगवन्! तवैव माध्यमिदम्। वाञ्छनं दर्शितमस्माभिरपि न दृश्यते। इति भवतु अस्माकं तवैतदेव

(प) अद्वैतोपरि अद्वैतस्य अद्वितीयस्य प्रेमानन्दस्य इति भावः उपरि। परिवर्त्तते तिष्ठति।

(फ) यदिति। यत् यतः अस्य अद्वैतस्य बाह्येन्द्रियवृत्तयः बाह्याः बहिःस्थिताः इन्द्रियवृत्तयः चक्षुरादीनां व्यापाराः गलिताः स्थगिताः बाह्यज्ञानं तिरोहितमिति भावः। तस्मात् अन्तःकरणस्य अन्तरात्मनः कोऽपि अनिर्वचनीयः लीयते अस्मिन्निति लयः आत्मतिरोधायक इत्यर्थः स्वस्य आनन्दसान्द्रः घनानन्द इत्यर्थः जात इति शेषः हन्त तथाहि अस्य वपुः शरीरं नितराम् अतिमात्रं यथा तथा स्पन्देन मन्दम् अस्पन्दमित्यर्थः जातमिति शेषः। एषः आत्मापि अस्य इति शेषः अनुभवेन ज्ञानेन आस्वाद्ये आस्वादनीये परे वस्तुनि परमात्मनि इत्यर्थः लयं ययौ लीनतां प्राप। प्राणः मध्ये वायुः अद्वैतः रोमाञ्चैः पुलकोद्गमैः श्वसिति जीवतीति बोधस्य विषयं प्राप्नोति रोमाञ्चेन जीवतीत्यनुमीयते इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ब) तद्वास्वादेति तस्य रूपस्य आस्वादसंवादः आस्वादप्रकारः।

स्वरूपं महाधनम्। किन्त्वधुना धुनातु भवान्। माऽतःपरं परन्तप चेतोऽस्य तिरोधापयान्तःकरणतोऽस्य तद्रूपम्। अन्यथा समाधिसमा धिषणाऽस्य (अ) न परं व्यभिचारिणी भविष्यति। पृच्छाम्येतं किं दृष्टमिति।

भगवान्। स्वयमेवासौ प्रबोध्यताम्। इति तदन्तःकरणात् तद्रूपं तिरोधापयति।

अद्वैत। हृदि स्फुरद्रूपं ननु किमप्यनालोकयन् उन्मीलित इव चक्षुषी उन्मील्य क्षणं तदेव पश्यन्निव दशां कामप्यभायति।

भगवान्। अद्वैत। किमीक्ष्यते।

अद्वैत। स्वप्नायमान इव ग्रहग्रस्त इव किमपि पठति।

अकस्मादुन्मीलन्नवकुवलयस्तोमसुरभि-
र्घनश्रेणीस्निग्धः स्तवकिततमालावलिघनः।
प्ररोहन्नीलाश्मच्छविनिकरविशेषोज्ज्वलतरो
महःपूरः कोऽयं नयनपदवीं चोरयति नः॥ (ब)

(अ) एतदेव वङ्गभुजङ्गमेन स्वरूपं स्वं रूपं महाधनं महार्घम्। धुनातु अपसारयतु रूपमस्य अन्तःकरणात् इति शेषः। तस्य अद्वैतस्य चेतः चित्तं अतःपरं मा परम् अन्यथं तप, तापमत्यन्तं कुर्विति भावः। तिरोधापय अपसारय। समाधिसमा योगवद्वी धिषणा प्रज्ञा।

(ब) अकस्मादिति। उन्मीलन् विकसन् नवकुवलयस्तोमः नवीननीलोत्पलराशिः तद्वत् सुरभिः सौरभवान्, घनश्रेणी मेघनिचयः तद्वत् स्निग्धः, स्तवकिता सञ्जातस्तबका या तमालावलिः तमालतरुनिवहः तद्वत् घनः सान्द्रः तथा प्ररोहन् उद्गच्छन् यः नीलाश्मनां नीलकान्तमणीनां छविनिकरविशेषः समष्टिभेदः तद्वत् उज्ज्वलतरः अतिशयेन उज्ज्वलः कोऽयं महसां तेजसां पूरः प्रवाहः राशिरित्यर्थः

अपि च, प्रश्यामचित्किरणमण्डलमध्यवर्त्ति-
प्रत्यङ्गकं मधुरिमामृतपूरपूर्णम् ।
वंशीकलक्वणितकेलिकलाविदग्ध-
माद्यं महो घनसहोदरमाविरास्ते ॥ (य)

गोपा । अहो ! वर्त्तमानप्रयोगादतीतमपि (र) प्रत्यक्षमन्यमानोऽयं निगदति ।

भगवान् । आनन्दस्य वर्त्तमानत्वात् । तदाकर्णय भूयोऽपि विवक्षुरयं सर्वे तुष्णीं तिष्ठन्तु ।

अहे । सुश्यामदीर्घघनकुञ्चितकेशपाशं
सुभ्रूलतं स्वलकमुन्नतचारुनासम् ।
आलोलशोणविपुलायतनेत्रपद्मं
बन्धूकबान्धवसुरेखशुभाधरोष्ठम् ॥ (ल)

नः अस्माकं नयनपदवीं नेत्रपथम् अकस्मात् सहसा चोरयति आच्छादयतीत्यर्थः । शिखरिणीवृत्तम् ।

(य) प्रश्यामेति । अहो ! आश्चर्यं प्रश्यामं प्रकृष्टं श्यामवर्णं चित्किरणमण्डलं ज्ञानरूप मयूखचक्रं तस्य मध्ये वर्त्तते इति तथोक्तं, प्रत्यङ्गकं सर्वेषु अङ्गेष्वित्यर्थः मधुरिमा माधुर्य्यमेव अमृतपूरः पीयूषप्रवाहः तेन पूर्णं व्याप्तं, तथा वंशीकलक्वणिते वीणामधुरास्फुटध्वनौ या केलिकला क्रीड़ावेशः तत्र विदग्धं चतुरं घनसोदरं नीरदनिभम् आद्यम् आदिपदवीयं महः तेजः आविरास्ते आविर्भवति । वसन्ततिलकं वृत्तम् ।

(र) वर्त्तमानेति वर्त्तमानस्य कालस्य प्रयोगात् चोरयति आविरास्ते इत्येवं रूपात् अतीतं पूर्वदृष्टमपि भगवद्रूपं प्रत्यक्षमित्यर्थः ।

(ल) सुश्यामेति । सुश्यामः अतिनीलः दीर्घः आयतः घनः

श्रीवत्सकौस्तुभरमासुषमासमेत-
वक्षःस्थलस्खलदुदारसुतारहारम् ।
आपादलम्बिवनमाल्यसुपाल्यमानं
सद्वृत्तदीर्घतरपीवरबाहुदण्डम् ॥ (ख)

श्रीदा। कथमकस्मादस्यैवमभिनिवेशो (ग) जातः ।

भगवान् । श्रूयताम् ।

ध्यानाभ्यासकृता स्फूर्त्तिः स्फूर्त्तिः सा तु चिराद्भवेत् ।
याऽऽकस्मिकी हृदि हरेः साऽवतार इवाऽपरः ॥ (घ)

---

सान्द्रः कुञ्चितः भङ्गियुतः केशपाशो यत्र तथाभूतं मञ्जु इति पूर्वेण सर्वत्रान्वयः। सुष्ठु भ्रुवा लते इव यत्र तादृशम् । सुष्ठु शोभना अलकाः चूर्णकुन्तला यत्र तथाविधम् । उन्नतेति उन्नता चारुः मनोज्ञा नासा यत्र तथोक्तम् । आलोलेति आलोले तरले शोणे रक्ते विपुलायते अतिदीर्घे नेत्रे पद्मे इव यत्र तथोक्तम् । बन्धूकेति बन्धूकस्य पुष्पविशेषस्य बान्धवः सदृश इत्यर्थः सुरेखः शोभनरेखायुतः शुभः सुन्दरः अधरोष्ठः यत्र तथाविधम् ।

(ख) श्रीवत्सेति । श्रीवत्सस्य कौस्तुभस्य रमायाश्च सुषमाभिः परमशोभाभिः सुषमा परमा शोभेत्यमरः। समेतं यत् वक्षःस्थलं तस्मिन् उल्लसन् विराजन् उदारः महान् सुतारः सुष्ठु तारखचितः हारः यत्र तादृशम् । आपादेति आपादं पादपर्य्यन्तं लम्बिना लम्बमानेन वनमाल्येन सुपाल्यमानं सुदीप्यमानम् । सद्वृत्तेति सद्वृत्तौ सुवर्त्तुलौ दीर्घतरौ पीवरौ स्थूलौ बाहुदण्डौ यत्र तथाविधम् । वसन्ततिलकं वृत्तम् ।

(ग) अभिनिवेशः मनःसंयोगः ।

(घ) ध्यानेति । या तु ध्यानाभ्यासाभ्यां कृता जनिता स्फूर्त्तिः भगवत्साक्षात्काररूपा इति भावः, सा स्फूर्त्तिः चिरात् बहुविलम्बात् भवेत् बहुकालं ध्यानालोचनया अभ्यासयोगेन च कालेन जायते इति

श्रीवा। एवमेव।

"सकृद्यद्दर्शितं रूपमेतत् कामयतेऽनघ।"

इति नारदस्य प्रागजन्मनि (ग) दर्शितमित्यवतारसूचकम्। ध्रुवस्य त्वभ्यासक्तता स्फूर्त्तिः। किन्तु भगवन्! विना चिराभ्यासयोगेन कथं भगवत्-प्रकाशयोग्यताऽन्तःकरणस्य।

भगवान्। अवधेहि। (ङ)

पुरोऽनुग्रह एवास्य स्वोदयाधारधावनः।
उदयात् पूर्वमर्कस्य विनिघ्नन्ति तमोऽरुणः॥ (च)

श्रीवा। किमयमद्यापि साक्षादेव वीक्षते किंवेक्षित-मनुवदति।

भगवान्। पृच्छ्यताम्।

श्रीवा। अद्वैतं प्रति। भो भो महानुभाव! किं पश्यसि किंवा दृष्टमनुवदसि।

---

भावः।· या तु हृदि हृदये आकस्मिकी सहसोत्पन्ना स्फूर्त्तिरिति शेषः सा हरेः भगवतः अपरः अवतार इव भवतीति शेषः।

(ग) सकृदिति यत् रूपं सकृत् दर्शितं भगवतेति शेषः अनघः अपापः जनः एतत् कामयते अभिलषति पुनः पुनर्द्रष्टुमिति शेषः। प्रागजन्मनि पूर्वस्मिन् जनने।

(ङ) अवधेहि बुध्यस्व।

(च) पुर इति। पुरः अग्रतः पूर्वमित्यर्थः स्वस्य उदयाधारम् आविर्भावाश्रयं धावतीति तथोक्तः अस्य भगवतः अनुग्रह एव भगवता पूर्वम् एतादृगनुग्रहः अस्य कृतः येनास्य मनसि सहसा भगवत्प्रकाशो भवतीति भावः तथाहि अर्कस्य सूर्य्यस्य उदयात् पूर्वम् अरुणः तत्-सारथिः तमः तिमिरं विनिघ्नन्ति नाशयति। सूर्य्यस्य पूर्वकृतेनानु-ग्रहेणैव अरुणस्य तिमिरनाशकत्वमिति भावः।

अद्वै। आनन्दाब्धुत्थित इव किञ्चिद्बाह्यमवगाह्य। (क)

अस्माद्विभोर्वहिरुपेत्य महोऽतिनील-
मन्तर्ममाविशदहो क्षणतस्तिरोऽभूत्।
तेनातिदुःखितमना बहिरात्तदृष्टिः
पश्यामि तत् पुनरिहैव निमग्नमासीत्॥ (ख)

श्रीवा। सोल्लासम्। भगवन्! फलितमस्मद्वचः। (ग)

भगवान्। तन्द्रा-दोषोऽयमस्य। (घ)

श्रीवा। आनन्द-तन्द्रा (ङ) खल्वियं कुतोऽस्य दोषः।

भग। अद्वैतं प्रति। अद्वैत! जाग्रत्स्वप्नोऽयं (च) भवतः।

अद्वै। साभ्यसूयमिव।

---

(क) आनन्देति आनन्दाब्धेः आनन्दसागरात् उत्थित इव। बाह्यं बहिर्भवं वस्तु इति शेषः अवगाह्य अवबुध्य अन्तर्दृष्टितिरोधानात् बाह्यदृष्टिर्भूत्वेति भावः।

(ख) अस्मादिति अस्मात् विभोः देवात् चैतन्यादित्यर्थः बहिः उपेत्य निःसृत्य अतिनीलं महः तेजः मम अन्तः अन्तःकरणम् अविशत्, अहो! आश्चर्यं क्षणतः क्षणमात्रेणैव तिरोऽभूत् अन्तर्दधे। तेन तस्य महसः तिरोधानेन अतिदुःखितं मनो यस्य तादृशः बहिरात्तदृष्टिः बाह्यदृष्टिः सन् पश्यामि, तत् महः पुनः इहैव देवे निमग्नं लीनमासीत्। वसन्ततिलकं वृत्तम्।

(ग) फलितं सफलं जातम्।

(घ) तन्द्रेति अस्य अद्वैतस्य अयं तन्द्रादोषः निद्रावेगजनितः स्वप्न इत्यर्थः।

(ङ) आनन्दतन्द्रा आनन्देन चक्षुषोर्निमीलनम्।

(च) जाग्रत्स्वप्नः जाग्रदवस्थायां स्वप्नः निवृत्तस्येव विषयानुभवः। उक्तञ्च दर्पणे, स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु य इति।

नवकुवलयदामश्यामलो वामजङ्घा-
हिततदितरजङ्घः कोऽपि दिव्यः किशोरः।
त्वमिव स स इव त्वं गोचरो नैव भेदः
कथय कथमहो मे जाग्रतः स्वप्न एषः॥ (छ)

भगवान्। अद्वैत! तवैवायं वासनाऽवगाहो (ज) दोषः; यतस्त्वमेवैवं पश्यसि नापरः कोऽपि।

श्रीवा। क एवंविधभाग्यवानास्ते यस्त्वां तथा पश्यतु।

भगवान्। सोपहासम्। श्रीवास! भवानपि अद्वैतपथपतितोऽभूत्।

श्रीवा। कृष्णेन सह तवाद्वैतं यत् तत् पथ-पातिन (झ) एव वयम्। कोऽत्र सन्देहः।

भगवान्। एवञ्चेत् भवतोऽपि तेन सहाद्वैतम्। (ञ)

(छ) नवेति। नवं यत् कुवलयदाम नीलोत्पलमाला तद्वत् श्यामलः श्यामकान्तिः, तथा वामजङ्घायाम् आहिता अर्पिता तदितरा दक्षिणेत्यर्थः जङ्घा येन तथोक्तः कोऽपि दिव्यः किशोरः कुमारः दृष्ट इति शेषः। सः किशोरः त्वमिव, त्वञ्च स इव गोचरः दृष्टिपथं गतः, नैव भेदः तस्य तव च कोऽपि विशेषो नास्तीति भावः। अहो! आश्चर्यम् एषः जाग्रतः मे मम कथं स्वप्नः, कथय एतदिति शेषः। मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात्।

(ज) वासनावगाहो संस्कारास्रयः।

(झ) अद्वैतम् अभिन्नत्वं, तत्पथपातिनः तन्मतानुसारिण इत्यर्थः।

(ञ) तेन सह कृष्णेन सह अद्वैतम् अभेदः कृष्णो भवांश्चाभिन्न इति भावः।

श्रीवा। भगवन्! मैवं वादीः। त्वच्चरणारविन्द-मकरन्द-कणाऽऽस्वाद-भाजां नैष पन्थाः। (ट)

भगवान्। तर्हि मयि कथं तदारोपयसि। (ठ)

श्रीवा। न हीदमारोपणं स्वभावोऽपि भावो नापह्नोतुं (ड) शक्यते। किन्तु नायमद्वैताचार्यस्य दोषः। अपि तु तवैव यतस्त्वयोक्तं "तद्भवते दर्शयिष्ये" इति। नेपथ्ये। सत्यं सत्यम्।

श्रीवा। जितमस्माभिः। यदिदं दैववच इव नरेङ्गितमभूत्। (ढ) पुनस्तत्रैव। अये सत्यमेव शचीदेव्या कृतपाकक्रियया तनयेन सममद्वैतागमनं प्रतीक्ष्यते गगनमध्यमध्यारूढ़श्चायं भगवान् मार्त्तण्डः। (ण)

श्रीवा। स्तुतिमभिनीय। माऽतःपरमत्र विलम्बनीयम्।

(ट) त्वदिति तव चरणारविन्दस्य पादपद्मस्य यः मकरन्दः मधु तस्य कणास्वादभाजां बिन्दुमात्रास्वादभागिनाम् अस्माकमिति शेषः। एषः पन्थाः गतिः कृष्णेन सहाभिन्नत्वमित्यर्थः न सम्भवतीति भावः।

(ठ) तत् कृष्णेन सहाभिन्नत्वमित्यर्थः।

(ड) स्वभावोऽपि स्वतःसिद्ध एव अपिरत्रावधारणार्थः। भावः धर्मः अपह्नोतुं चोरयितुम्।

(ढ) दैववच इव देवतावाक्यमिव नरेङ्गितं कस्यचित् प्रस्तावस्य कथासमकालं तदनुकूलं सहसोपस्थितम् अन्यार्थे प्रयुक्तं यत् वाक्यं तत् नरेङ्गितमामनन्ति। अत्र तत् ते दर्शयिष्ये इति भवदुक्तेन अस्य अद्वैतस्य वचनसङ्गतिप्रस्तावे नेपथ्योक्तस्य सत्यं सत्यमित्यस्य अन्यार्थे प्रयुक्तस्य अनुकूलतया सहसोपस्थितेर्नरेङ्गितत्वं बोध्यम्।

(ण) मार्त्तण्डः सूर्यः।

भो: कथय विश्वजनन्यै (त)। एते वयं श्रीविश्वम्भरेण सम-महैताद्यचलिता इति सर्वे यथायथं निष्क्रामन्ति। इति निष्क्रान्ताः सर्वे।

सर्वावतारदर्शनो नाम द्वितीयोऽङ्कः॥

---

# तृतीयोऽङ्कः।

---

ततः प्रविशति मैत्री।

मैत्री। हद्धी हद्धी पराणमेत्त-उव्वरिओ जो एक्को अम्ह-वंसस्स कडम्बो (क) विराओ जीवदित्ति सुदं। तं ण आणे कहिं वट्टदि। अहंपि जंनाममेत्तेण जीवामि। मंपि सो ण आणेदि। ताउद्देसं करेमि। इति परितो विलोक्य (१)। अम्मो का इयं परदो आअच्छदि (२)। संस्कृतमाश्रित्य।

---

(१) हा धिक् हा धिक् प्राणमात्रमुद्धृत्तो य एकोऽस्मद्वंशस्य कडम्बो विरागो जीवतीति श्रुतम्। तं न जाने कुत्र वर्त्तते। अह-मपि यन्नाममात्रेण जीवामि। मामपि स न जानाति। तदुद्देशं करोमि।

(२) अहो! का इयं पुरत आगच्छति।

---

(त) त्वलम्बनीयं विलम्बः कार्य्य इत्यर्थः। विश्वजनन्यै शचीदेव्यै।

---

(क) प्राणमात्रमिति प्राणमात्रं जीवनमात्रम् उद्धृतः स्थितः जीवनावधिरिह इत्यर्थः अस्मद्वंशस्य अस्माकं कुलस्य कडम्बः कोरकः।

आनन्दमूर्त्तिरमृतद्रववत् समन्ता-
दङ्गप्रभां तत इतः सरसां किरन्ती ।
आसादयत्यतितरां करुणाकटाक्षै-
रन्तर्विशुद्धिमखिलस्य पुरोऽभ्युपैति ॥ (ख)

इति सविस्मयमालोकयति । ततः प्रविशति ।

प्रेमभक्तिः । पुरोऽवलोक्य । अहो ! केयम् ?

नामैकमात्रं वपुरादधाना
विम्लानकान्तिः परितोषहीना ।
सोत्कण्ठमस्मन्मुखमीक्षमाणा ।
शनैः शनैर्मत्पुरतोऽभ्युपैति ॥ (ग)

मैत्री । निपुणं निभाल्य । अम्ब हे ! इयंज्ञेय प्रेमभक्ती जननी कथितेन लक्षणेन लक्ष्यते । तदुपसृत्य प्रणमामि(१)

(१) अम्ब हे ! इयमेव प्रेमभक्ति-जननी कथितेन लक्षणेन लक्ष्यते । तस्मादुपसृत्य प्रणमामि ।

(ख) आनन्देति । आनन्दमूर्त्तिः आनन्दमयशरीरा समन्तात् सर्वतः अमृतद्रववत् पीयूषरसवत् तत इतः इतस्ततः सरसाम् अङ्गप्रभां शरीरकान्तिं किरन्ती वर्षन्ती तथा करुणाकटाक्षैः कृपादृष्टिभिः अखिलस्य सर्वस्य जनस्य अन्तर्विशुद्धिम् आन्तरनैर्मल्यम् अतितराम् अतिशयेन आसादयन्ती जनयन्तीत्यर्थः पुरः अग्रतः अभ्युपैति आयाति । वसन्ततिलकं वृत्तम् ।

(ग) नामेति । नाम एकमात्रम् एकशेषः यस्य तादृशं वपुः शरीरम् आदधाना धारयन्ती विम्लाना विशेषेण म्लानिं गता कान्तिर्यस्याः तथोक्ताः परितोषेण सन्तोषेण हीना सोत्कण्ठं सतृष्णं यथा तथा अस्मन्मुखं मम मुखम् ईक्षमाणा पश्यन्ती सती शनैः शनैः मन्दं मन्दं मम पुरतः अग्रतः अभ्युपैति आगच्छति । उपजातिर्वृत्तम् ।

इत्युपसृत्य। देवि ! वन्दिज्जसि मेत्ती-णामधेआए मए (१)।

प्रेम। सचमत्कारम्। कथं मैत्री त्वमसि। एहि वत्से ! एहि इत्यालिङ्ग्य। मैत्रि ! कथय कथमेकाकिनी दुरवस्थिता भ्रमसि।

मै। कलि-परिप्रणेहिं णिज्जिदेसु अम्ह-सपक्खेसु भअ-भेम्हलिदा जीविदं गेह्णिअ पलाइदा। अदो मे दुरवत्थं किं पुच्छसि (२)।

प्रेम। वत्से ! निर्भयमतःपरं स्थीयतां मत्सङ्गेनैव। तव मातामहभगिन्यस्मि।

मै। कहं विअ (३)।

प्रेम। आमूलमाकलय।

भगवदनुग्रहनामा जनको भगवज्जनासक्तिः।
जननी तयोस्तु समयेऽजनिषत भूरीण्यपत्यानि॥ (घ)

अपि च।

एको विवेकनामा तनयो बह्व्यस्तु भक्तिसंज्ञिकाः कन्याः।

(१) देवि ! वन्द्यसे मैत्री-नामधेयया मया।

(२) कलिपरिजनैर्निर्जितेषु अस्मत्पक्षेषु भयविह्वलिता जीवितं गृहीत्वा पलायिता। अतो मे दुरवस्थां किं पृच्छसि।

(३) कथमिव।

---

(घ) भगवदिति। भगवतः ईश्वरस्य अनुग्रहनामा अनुग्रहाख्यः जनकः पिता, भगवतः जनानां भगवद्भक्तानाम् आसक्तिः भगवति प्रीतिरित्यर्थः जननी माता, समये काले तयोः अनुग्रहासक्त्योः भूरीणि बहूनि अपत्यानि सन्तानाः अजनिषत उदपद्यन्त।

(ङ) एक इति। एकः एकमात्रः विवेकनामा तनयः पुत्रः।

तस्य विवेकस्य सुमतेरनसूया नाम दुहिताऽऽसीत् ॥(ङ)

अपि च।

अनसूया समभावं पतिमासाद्य स्वभावजं शुद्धम्।
मैत्रीमसूत पुत्रीं भवतीं मत्तोषसन्धात्रीम् ॥ (च)

अपिच,

कन्यकाः सरसनीरसभावाद्दाययुर्द्विविधतां प्रथमं ताः।
नीरसास्तु बहुधागुणयोगाद्भेजिरेऽथ दशतां रसभाजः ॥(छ)
उज्ज्वलाद्भुतशमाश्च हसश्च प्रेम वत्सल इतीह रसाः षट्।
उत्तमा इति तदाश्रयभाजो भक्तयश्च षडमूरतियोग्याः ॥(ज)

भक्तिसंज्ञिकाः भक्तिनाम्न्यः बह्व्यः कन्यकाः उत्पन्ना इति शेषः तस्य विवेकस्य सुमतेः सुमतिनाम्न्याः पत्न्याः अनसूया नाम दुहिता कन्या आसीत्।

(च) अनसूयेति। अनसूया स्वभावजं स्वभावात् उत्पन्नं शुद्धं पवित्रं समभावं तदाख्यमित्यर्थः पतिमासाद्य प्राप्य मम तोषसन्धात्रीं सन्तोषजननीं भवतीं पुत्रीं कन्यां मैत्रीम् असूत प्रसूतवती।

(छ) कन्यका इति। ताः कन्यकाः अनुग्रहासक्त्योः पूर्वोक्ताः दुहितरः सरसनीरसभावात् प्रथमं द्विविधताम् आययुः प्रापुः काश्चित् सरसाः काश्चिच्च नीरसा इत्यर्थः। तास्तु नीरसाः रसवर्जिताः बहुधा जाताः, अथ रसभाजः सरसाः गुणयोगात् बहुगुणसङ्गात् दशतां भेजिरे प्रापुः।

(ज) उज्ज्वलेति। इह संसारे उज्ज्वलः अद्भुतः शमः हसः प्रेम वत्सलश्च इति षट् रसाः सन्तीति शेषः। तदाश्रयभाजः उज्ज्वलादिरसाश्रिताः अतियोग्याः अमूः षट् कन्याः उत्तमाः उत्कृष्टा इति भक्तयः भक्तिनाम्ना व्यपदिश्यन्ते इति भावः।

मै। चरमा हि पेम्म-रसभत्ती (१)।

प्रेम। अथ किम्। तथा हि

सर्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ।
उन्मज्जन्ति निमज्जन्ति यत्र स प्रेमसञ्ज्ञकः॥ (ञ)
खण्डानन्दा रसाः सर्वे सोऽखण्डानन्द उच्यते।
अखण्डे खण्डधर्मा हि पृथक् पृथगिवाऽऽसते॥ (ञ)
एष ते व्याख्यातो निजान्वयः। (ट)

मै। देवि! दाणिं तुमं एआइणी कहिं वच्चसि (२)।

प्रेम। मैत्रि! अस्माकमाश्रयभूतस्य भगवतः कस्यापि श्रीविश्वम्भरस्य विहितसर्वावतारलीलस्य सम्प्रति वृन्दावनेश्वरी-भावमनुचिकीर्षोरनुज्ञया सकल-लोकस्य हृदय-शोधनाय साधयामि। (ठ)

(१) चरमा हि प्रेम-रसभक्तिः।

(२) देवि! इदानीं त्वं एकाकिनी कथं व्रजसि।

---

(ञ) सर्वे इति। वारिधौ समुद्रे तरङ्गा इव सर्वे रसाश्च उज्ज्वलादय इत्यर्थः भावाश्च धर्मविशेषाश्च यत्र उन्मज्जन्ति उन्मग्ना भवन्ति निमज्जन्ति निमग्ना भवन्ति च सः प्रेमसंज्ञकः प्रेमनामा।

(ञ) खण्डेति। अन्ये सर्वे रसाः उज्ज्वलादयः खण्डानन्दाः असम्पूर्णानन्दशालिनः। सः प्रेमरसः अखण्डानन्दः सम्पूर्णानन्द उच्यते। अखण्डे तस्मिन् खण्डधर्माः खण्डरसधर्माः पृथक् पृथक् इव आसते तिष्ठन्ति।

(ट) निजान्वयः स्ववंशः।

(ठ) विहितेति विहिता कृता दर्शिता इत्यर्थः सर्वेषाम् अवताराणां लीला येन तादृशस्य। वृन्दावनेश्वरीभावं राधाभावम् अनु-

मै । कहिं (१) ।

प्रेम । यत्र खलु तद्भाव-भावुक-सुभगम्भावुकतया सर्व्व-भुवन-प्रियम्भावुकस्य तस्य तन्नृत्यानुकरणं (ड) भविष्यति ।

मै । सोज्जेव को पदेसो (२) ।

प्रेम । आचार्य्यरत्नस्य (ढ) पुराङ्गणम् ।

मै । कधं दाव ईसरो हुविअ इत्थीभावेण णच्चिस्सदि (३) ।

प्रेम । बाले ! न जानासि । ईश्वरः खलु सर्व्वरसः । सर्व्वेषां भक्तानामाशयानुरोधाद्विचित्रामेव लीलां करोति । स्व-स्व-वासनानुसारेण भक्तास्तांस्तामनुकुर्व्वन्ति । अतः केषाञ्चिन्निभृतानां भागवतानां चेतसि तद्भावमावेशयितुं सर्व्वोत्तमां तदनुकारलीलां करिष्यति । यतः परमन्यत् सरसन्नास्ति । (ण)

---

(१) कथम् ।

(२) स एव कः प्रदेशः ।

(३) कथं तावत् ईश्वरो भूत्वा स्त्रीभावेन नर्त्तिष्यति ।

चिकीर्षोः अनुकर्त्तुमिच्छोः हृदयशोधनाय मनःसंशुद्धये साधयामि गच्छामि ।

(ड) तद्भावेति तद्भावस्य वृन्दावनेश्वरीभावस्य भावुकः भवनशीलः यः सुभगम्भावुकः तत्तया सर्व्वेषां भुवनानां प्रियम्भावुकस्य प्रीतिभाजनस्य तस्य देवस्य तन्नृत्यानुकरणं वृन्दावनेश्वरीभावेन नर्त्तनम् ।

(ढ) आचार्य्यरत्नस्य अद्वैतस्य पुराङ्गणं भवनाजिरम् ।

(ण) आशयानुरोधात् अभिप्रायवशात् भक्तमनोरथपूरकत्वादिति भावः । विचित्रां विविधाम् । स्वस्वेति स्वा स्वा वासना कामना

मै। कधेहि तं पत्तं किं अङ्करूवं किम्बा पडूणअम् (१)।

प्रेम। अङ्करूपमेव। (त)

मै। कधेहि को कस्स भूमिअं (थ) गहिस्सदि (२)।

प्रेम। वत्से! अवधारय। अद्वैतस्य रुद्रत्वेनात्मत्वं स्वस्य च श्रीराधास्वरूपग्रहणमन्यजनाशक्यं परम-रहस्यत्वेनायोग्यञ्च (द) मत्वा।

(१) कथय तत्पात्रं किमङ्करूपं किंवा परिणयम्।

(२) कथय कः कस्य भूमिकां ग्रहीष्यति।

तस्या अनुसारेण तां तां लीलामित्यर्थः। निभृतानां भागवतानां निगूढवैष्णवानामित्यर्थः आवर्णयितुं प्रवर्णयितुं निधातुमित्यर्थः सर्वोत्तमां सर्वश्रेष्ठां तदनुकारलीलां वृन्दावनेश्वरीभावलीलाम्। यतः परं यस्याः उत्कृष्टम् अन्यत् अपरं सरसं रसवत् वस्तु इति शेषः।

(त) अङ्करूपमिति अङ्कलक्षणमुक्तं दर्पणे। प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ; भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः। विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः। युक्तो न बहुभिः कार्य्यैर्बीजसंहृतिमान्न च। नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्। आवश्यकानां कार्य्याणामविरोधाद्विनिर्मितः। नानेकदिननिर्वर्त्यकथया सम्प्रयोजितः। आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः। विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा। दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरञ्च यत्। शयनाधरपानादि नगराद्युपरोधनम्। स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः। देवीपरिजनादीनाममात्यवणिजामपि प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः। अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तित इति परिणायं विवाहरूपमित्यर्थः।

(थ) भूमिकां वेशम्।

(द) अद्वैतस्येति रुद्रत्वेन रुद्रावतारत्वेन आत्मत्वं स्वाभिन्नत्वं को

अद्वैतमापादयदीशवेशं
स्वयञ्च राधाकृतिमग्रहीत्सः।
इति प्रतीतिः किल वस्तुतस्तु
स एव देवो द्विविधो बभूव॥ (ध)

अद्वैतो वेशमात्रेण केवलं चरितार्थताम्।
अगमत् किन्तु तत्रासीदाविर्भूतः स्वयं हरिः॥ (न)

अपि च।

हरिदासः सूत्रधारो मुकुन्दः पारिपार्श्विकः।
वासुदेवाचार्य्यनामा नेपथ्यरचनाकरः॥ (प)

हि रुद्रः स एव कृष्णः यश्च कृष्णः स एव रुद्रः अभेदः शिवरामयोरिति शास्त्रादिति भावः। अत्यन्तनेन स्वभिन्नेन अशक्यम् असाध्यम्। परमरहस्यत्वेन परमप्रेमत्वेन योग्यम् उचितम्।

(ध) अद्वैतमिति। सः देवः गौराङ्गः अद्वैतम् ईशवेशम् ईश्वरभूमिकाम् आपादयत् अपाठयत्, स्वयञ्च राधाकृतिं राधाभूमिकाम् अग्रहीत्। इति प्रतीतिः प्रसिद्धिः किलेत्यलीके मिथ्यैवैषाख्यातिरिति भावः। वस्तुतस्तु तत्त्वतस्तु स एव देवः द्विविधः युगलरूपो बभूव।

(न) अद्वैत इति। अद्वैतः केवलं वेशमात्रेण भगवद्भूमिकाग्रहणमात्रेण चरितार्थतां कृतार्थताम् अगमत् प्राप, किन्तु तत्र स्वयं हरिः आविर्भूतः आसीत्।

(प) हरिदास इति। हरिदासः तदाख्यः कश्चित् भगवद्भक्तः सूत्रधारः प्रधाननटविशेषः, मुकुन्दः तदाख्यः कश्चित् वैद्यः पारिपार्श्विकः सूत्रधारात् न्यूनः अपरेभ्यः विशिष्टः नटविशेषः तथा वासुदेवाचार्य्यनामा कश्चित् नेपथ्यरचनाकरः भूमिकारचयिता आसीदिति सर्व्वत्र योज्यम्।

श्रीराधाकृष्णसंयोगकारिणी जरतीव सा ।
योगमाया भगवती नित्यानन्दतनुं श्रिता ॥ (फ)

मै । समाइआओ (ब) केऽमी (१) ।

प्रेम । अधिकारिणो ये अस्मिन्नर्थे स्वयमेव भगवानवादीत् प्रागेव (भ) । यथा,

हे श्रीवास ! स्वयमवहितेनाद्य भाव्यं त्वयास्मिन्
योग्यो यः स्यात् स विशति यथा नापरस्तद्विधेयम् । (म)

इत्यर्द्धोक्ते श्रीवासेनाभाषि । देव ! कस्मिन् कर्म्मणि योग्यायोग्यव्यवस्था करणीया । कुत्र वा प्रवेशः कारयितव्यः । इति पुनर्देवेनाप्यवादि ।

(१) समाजिकाः के अमी ।

(फ) श्रीराधेति । श्रीराधाकृष्णयोः संयोगकारिणी सम्मेलनविधायिनी जरतीव वृद्धा नारीव या प्रसिद्धा भगवती योगमाया आद्या शक्तिः नित्यानन्दतनुं नित्यानन्दस्य तनुं शरीरं श्रिता आश्रिता नित्यानन्दः सङ्घटनकारिणी वृद्धानारी अभवदिति भावः ।

(ब) सामाजिकाः सभ्याः अभिनयद्रष्टार इत्यर्थः ।

(भ) अधिकारिणः अधिकारवन्तः येषामेतद्दर्शने अधिकारोऽस्तीति भावः । प्रागेव पूर्व्वमेव ।

(म) हे श्रीवासेति । हे श्रीवास ! त्वया अस्मिन् अर्थे अभिनयविषये इत्यर्थः स्वयम् अवहितेन सावधानेन भाव्यम् । यः जनः योग्यः एतद्दर्शनाधिकारीत्यर्थः स्यात् स एव यथा अत्र स्थाने विशति प्रविशति, न अपरः अयोग्यः, तत् विधेयं करणीयम् । अभाषि उक्तम् ।

श्रीराधाऽत्र स्वयमियमहो नूनमाचार्य्यरत्न-

स्यावासस्याङ्गणभुवि रसादव्यक्तमाविर्भविनी ॥ (ग)

मै। तदो तदो (१)।

प्रेम। ततः श्रीवासेन मनसि सन्दिहानेन भगवद्वच इति विहितनिश्चयेनापि गङ्गादासनामा भगवतः परमाप्तो भूसुरवरो द्वारपालत्वेन न्ययोजि। (र)

मै। तदो तदो (२।

प्रेम। भगवता पुनरपि श्रीवासो निजगदे। श्रीवास! भवता नारदेन भवितव्यम्; शुक्लाम्बरेण तत्र स्नातकेन भाव्यम्। गायकाः श्रीरामादयस्तव सहोदरास्त्रयः। आचार्य्यरत्नविद्यानिधी नेति देवेनैव नियोजिताः। अतः परं न केषामपि तत्र प्रवेशः। किन्तु श्रीवासादि-सहोदर-वधूभिः सहाचार्य्यरत्न-मुरारि-वधू-प्रभृतयः प्रागेव तत्र प्रविश्य स्थिता अधिकारभाजश्च (ल) ताः। नेपथ्ये। मृदङ्ग-तालादिध्वनिः।

(१) ततस्ततः।	(२) ततस्ततः।

(ग) श्रीराधेति। इयं श्रीराधा स्वयं नूनं निश्चितम् अत्र आचार्य्यरत्नस्य अद्वैतस्य आवासस्य गृहस्य अङ्गणभुवि चत्वरप्रदेशे रसात् अनुरागात् भगवतीति भावः अव्यक्तं प्रकाशं यथा तथा आविर्भविनी आविर्भविष्यति।

(र) सन्दिहानेन सन्देहवता राधाया आविर्भावविषये इति शेषः। विहितनिश्चयेन कृतनिश्चयेन। परमाप्तः परमविश्वासी। भूसुरवरः द्विजश्रेष्ठः। न्ययोजि नियुक्तः।

(ल) स्नातकेन गृहस्थविशेषेण। गायकाः गानकर्त्तारः। देवेन चैतन्येन। अधिकारभाजः दर्शनाधिकारिण्यः।

प्रेम। वत्से ! श्रुतम्। अयमारब्धः पूर्वरङ्गाङ्गभूतः प्रत्याहारः। (ज)

पुनर्नेपथ्ये।

जयति जननिवासो देवकी जन्मवादो
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्म्मम्।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्द्धयन् कामदेवम्॥ (झ)

अपिच

सम्पूर्णेन्दुमुखी सरोजनयना कोकस्तनी कैरव—
च्छाया कम्बुशिरोधिरम्बुधिभुवो गर्वस्य सर्वङ्कषा।
मङ्गल्यैरिह वस्तुभिर्विरचिता नान्दीव वृन्दावन-
क्रीड़ाकौतुकनाटकस्य दिशतु श्रीराधिका वः शुभम्॥ (ञ)

---

(ज) पूर्वरङ्गेति पूर्वरङ्गस्य अभिनयात् पूर्वं रङ्गविघ्नोपशान्त्यर्थं क्रियमाणं माङ्गलिकमनुष्ठानं तदुक्तं दर्पणे। यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये। कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते। प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपीति। तस्य अङ्गभूतः प्रकारविशेष इत्यर्थः प्रत्याहारः स्तुतिविशेषः।

(झ) जयतीति। जननिवासः लोकाश्रय इत्यर्थः जगन्निवास इति यावत्, देवक्यां जन्मवादः उत्पत्तिप्रवादो यस्य तादृशः, यदुवराः यादवश्रेष्ठाः परिषदः पार्श्वचराः यस्य तथोक्तः, स्वैः निजैः दोर्भिः भुजैः अधर्मं पापं भूभाररूपमित्यर्थः, अस्यन् निराकुर्वन् दुर्दान्तासुरांशक्षत्रियाणां निधनेनेति भावः, स्थिराणां स्थावराणां चराणां जङ्गमानां चराचराणां जगतामित्यर्थः वृजिनं पापं हन्तीति तथाविधः तथा शोभनं स्मितं यस्मिन् तादृशेन श्रीमुखेन व्रजपुरवनितानां गोपीनां कामदेवं मदनं वर्द्धयन् हरिं गमयन् कोऽपि देव इति शेषः जयति सर्वोत्कर्षेण वर्त्तते। मालिनीछन्दः।

(ञ) सम्पूर्णेति। सम्पूर्णेन्दुमुखी पूर्णचन्द्रवदना सरोजनयना

मेव। सत्यमेवैतत्। यन्निरटङ्कि मया। यदसौ सूत्रधार-भूमिको हरिदासः श्रीभागवतपद्यं मङ्गलं कुर्वन्नान्दीं पपाठ। तन्मध्ये एकाङ्को (ख) भाणो व्यायोगो वा रूप-कमत्र निरूपयितव्यमनेन। यतो नेपथ्ये गीयते नान्दी-न्यादि तयोर्लक्षणम् (ङ)। तदलं तवास्य दिष्ट्या वर्त्तते।

पद्मनेत्रा कोकस्तनी चक्रवाकस्तनी कैरवच्छाया कैरवं श्वेतोत्पलं तद्वत् छायः स्मितं यस्याः शुचिस्मितेत्यर्थः कम्बुशिरोधिः शङ्खग्रीवा, अम्बु-धिभुवः क्षीरोदजाया लक्ष्म्या इत्यर्थः गर्वस्य अहङ्कारस्य सर्वङ्कषा अपनेत्रीत्यर्थः लक्ष्म्या अपि अधिकरूपिणीति भावः इह जगति मङ्गल्यैः माङ्गलिकैः वस्तुभिः विरचिता प्रणीता वृन्दावनक्रीडा एव कौतुकम् उत्सवः तदेव नाटकम् अभिनेयकाव्यं तस्य नान्दीव श्रीराधिका वः युष्माकं शुभं दिशतु ददातु। अत्रोपमोत्प्रेक्षयोः संसृष्टिः। शार्दूलविक्रीडितं वृत्तम्।

(ख) निरटङ्कि निर्णीतम्। एकाङ्कः एकेन अङ्केन परिच्छेद-विशेषेण समाधेय इत्यर्थः भाणः रूपकभेदः तदुक्तं दर्पणे। भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः। एकाङ्क एक एवात्र निपुणः पण्डितो विटः। रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण च। सम्बो-धनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः। सूचयेद्वीरशृङ्गारौ शौर्य्य-सौभाग्यवर्णनैः। तत्रेतिवृत्तमुत्पाद्यं वृत्तिःप्रायेण भारती। मुखनिर्व-हणे सन्धी लास्याङ्गानि दशापि चेति।

(ङ) व्यायोगं रूपकविशेषः तदुक्तं दर्पणे। ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः। हीनो गर्भविमर्शाभ्यां नरैर्बहुभिरा-श्रितः। एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः। कौशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः। राजर्षिरथदिव्यो वा भवेद्धीरोद्धतश्च सः। हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसा इति। रूपकम् अभि-नेयकाव्यम्। तदुक्तं दर्पणे। दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा

मै। कहिं मे तारिसं भाअधेयम् (१)।

प्रेम। का ते चिन्ता मया सह वर्त्तितव्यम्। मत्प्रभावात् केनापि भवती न लक्षणीया। त्वदनुरोधान्मयाऽपि त्वन्निकट एव तथा भूत्वा (ख) स्थातव्यम्।

मैत्री। अणुगहीदम्हि (२)।

प्रेम। तदेहि। इति निष्क्रान्ते। प्रवेशकः। (क)

ततः प्रविशति गृहीतसूत्रधारभूमिको हरिदासः। किंयद्दूरे उपविष्टे अलक्षिताऽऽकारे प्रेमभक्तिमैत्र्यौ च।

सूत्र। पुष्पाञ्जलिमञ्जलौ कृत्वा।

"भासा भासयन् दिशो विशदया कान्तिं द्विजश्रेणिजां
विभ्राणः परितोलसत्परिमलः प्रोद्दामसन्तोषभूः।
शुद्धः पादसरोरुहे भगवतः पुष्टिं नखेन्दुश्रियां
तन्वन् हास इवैष नाट्यरहसः पुष्पाञ्जलिः कोर्थ्यते॥ (ख)

इति तथा करोति।

(१) कदा मे तादृशं भागधेयम्।

(२) अनुगृहीतास्मि।

मतम्। इदं तत्राभिनेयं तत् रूपारोपात्तु रूपकमिति। तयोः भावव्यायोगयोरित्यर्थः।

(ख) तथाभूत्वेति येन त्वां न कोऽपि लक्षयति तादृश्या भूत्वा इत्यर्थः।

(क) प्रवेशकः नीचोक्तत्वात् प्राकृतवक्तृकः विष्कम्भक इत्यर्थः तदुक्तं दर्पणे। प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथेति।

(ख) भासेति। विशदया निर्मलया भासा दीप्त्या दिशः भास-

प्रेम। निर्वर्ण्य । सुविहितमेव विहितं भवता । यद्यपि नेपथ्य एव नान्दी पठिता तथापि रङ्गपूजाप्रसङ्गेन भगवत्पद एव पुष्पाञ्जलिः कीर्णः । पश्य वत्से ! पश्य ।

हारी कण्ठे श्रवणयुगले कुण्डली चावतंसी
स्रग्वी भूयस्युरसि भुजयोरङ्गदी कङ्कणी च ।
अप्युष्णीषी शिरसि पदयोर्नूपुरी नाट्यलक्ष्मा
मूर्त्तस्तेजोभर इव पुरो हारिदासप्रतीकः ॥ (ग)

मै। देवि ! ण क्खु अअं सत्थीओ (घ) मग्गो (१)।

(१) देवि न खलु अयं शास्त्रीयो मार्गः ।

रयन् दीपयन्नित्यर्थः द्विजश्रेणिजां पक्तिश्रेणिजनितां वा दन्तावलिजनितां दन्तविप्राण्डजा द्विजा इत्यमरः । कान्तिं विभ्राणः धारयन् परितः समन्तात् लसन्तः प्रसरन्तः परिमला यस्य तादृशः मोहामस्य उत्कटस्य सन्तोपस्य भूः स्थानं सन्तोषप्रद इत्यर्थः नवेन्दुश्रियां नवोदितचन्द्रप्रभाणां पुष्टिं तन्वन् विस्तारयन् एषः पुष्पाञ्जलिः नाटरङ्गसः नाट्यरङ्गस्य शुभ्रः सुनिर्मलः हास इव भगवतः गौराङ्गस्य पादसरोरुहे चरणकमले कीर्य्यते वितीर्य्यते मयेति शेषः । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ।

(ग) हारीति । कण्ठे हारी हारवान्, श्रवणयुगले कर्णयुगे कुण्डली कुण्डलवान् अवतंसी अवतंसः कर्णभूषणं शिरोभूषणं वा तद्वान् । भूयसि विशाले उरसि वक्षसि स्रग्वी माल्यवान् भुजयोः अङ्गदी केयूरवान् कङ्कणी च वलयवांश्च, शिरसि उष्णीषी उष्णीषवान् पदयोः नूपुरी नूपुरवान् हारिदासप्रतीकः हरिदासदेहः नाट्यलक्ष्मा नाट्याभिनयश्रिया मूर्त्तः देहवान् तेजोभर इव तेजोराशिरिव पुरः अग्रतः वर्त्तते इति शेषः । उत्प्रेक्षालङ्कारः । मन्दाक्रान्तावृत्तम् ।

(घ) शास्त्रीयः शास्त्रविहितः वेदस्मृतिनिबद्ध इत्यर्थः ।

प्रेम। श्रूयताम्।

शास्त्रीयः खलु मार्गः पृथगनुरागस्य मार्गोऽन्यः।
प्रथमोऽर्हति सनियमतामनियमतामन्तिमो भजते॥ (ङ)

मै। अणिअद-मग्गेण चलन्तस्स विलम्बेणज्जेव गम्म-लाहो (च) होइ (१)।

प्रेम। इदमनैकान्तिकम् (छ)। तथाहि,

वन्यासु तरणिसरणिर्जवेन गम्यं नयत्यनियताऽपि।
न सहजकुटिलेषु पुनर्नदीप्रवाहेष्वतिनियताऽपि॥ (ज)

तदलमनया वार्त्तया शृणुमस्तावत् किमयं प्रस्तौति। (झ)

---

(१) अनियतमार्गेण चलतो विलम्बेनैव गम्य-लाभो भवति।

(ङ) शास्त्रीय इति। अनुरागस्य प्रेम्णः मार्गः पन्थाः रीति-रित्यर्थः। प्रथमः शास्त्रीयमार्ग इत्यर्थः सनियमतां नियमवर्त्तित्व-मित्यर्थः। अन्तिमः अनुरागमार्ग इत्यर्थः अनियमतां नियमाबाध्य-तामित्यर्थः भजते आश्रयति।

(च) गम्यलाभः अभीष्टसिद्धिरित्यर्थः।

(छ) अनैकान्तिकम् अनिश्चितं शास्त्रीयमार्गेण चलतः अचिरात् सिद्धिलाभः, अनुरागमार्गेण चलतो न तथेति का विनिगमनेति भावः।

(ज) वन्यास्विति। अनियता अनियमचलितापि तरणिः नौरेव सरणिः मार्गः स्त्रियां नौस्तरणिस्तरिरित्यमरः। उपाय इत्यर्थः वन्यासु वर्द्धितजलप्रवाहेषु जवेन वेगेन गम्यं गन्तव्यदेशं नयति प्रापयति। पुनः किन्तु अतिनियता सुनियमेन चालितापि सहजकुटिलेषु स्वभाववक्रेषु नदीप्रवाहेषु न अतिशीघ्रं गम्यं न नयतीत्यर्थः।

(झ) प्रस्तौति प्रारभते प्रसङ्गं करोतीत्यर्थः।

सूत्र। अलमतिविस्तरेण भो भो! अद्याहं भगवतः कमलयोनेश्चरणोपकण्ठात् दैनन्दिन-वन्दनादिकं निर्वाह्य निवर्त्तमानो मानोन्नतेन दैवात्तत्रैवोपसीदता नारदेनाऽऽदरेण समादिष्टोऽस्मि। यथा हंहो गन्धर्वराज! राजमानोऽतिचिराय मम मनोरथो वरीवर्त्ति। भवद्भिर्नरीनृत्यमाना भगवतः श्रीवृन्दावनविहारिणः काऽपि केलिकौमुदी नयनविषयीकर्त्तव्येति (ञ)। तद्यथा सम्पद्यतेऽद्य ते तथा कौशलेन भवितव्यम्। तदहं तत्र यतिष्ये।

इति पुरतोऽवलोक्य। भो भो! इत इतः।

प्रविश्य। पारिपार्श्विकः। किमाज्ञापयसि भाव!

सूत्र। मारिष! अद्याहमुपरोधितोऽस्मि (ट) तत्रभवता भगवता नारदेन।

पारि। कथमिव।

सूत्र। भगवतः कमलयोनेः—। इत्यादि पठति।

पारि। भाव! कथमयमात्मयोनेर्भगवत आत्मजः सनकसनन्दनादीनामवरज आत्मारामो ब्रह्मभूतः सतत-ब्रह्मानन्दानुभव-भविक-सुभगभावुकः श्रीकृष्णस्य लौकिकीं केलिमनुबद्धतृष्णस्त्वामिदमभ्यर्थितवान्। (ठ)

---

(ञ) कमलयोने ब्रह्मणः, चरणोपकण्ठात् पदसान्निध्यात्। मानोन्नतेन महामान्येन उपसीदता उपतिष्ठता। राजमानः दीप्यमानः। वरीवर्त्ति पुनः पुनरतिशयेन वर्त्तते इत्यर्थः। नरीनृत्यमाना पुनः पुनरतिशयेन नृत्यन्ती। केलिकौमुदी विहारचन्द्रिका नयनविषयीकर्त्तव्या द्रष्टव्येति।

(ट) उपरोधितः अनुरोधितः।

(ठ) अवरजः कनिष्ठः। आत्मारामः आत्मना रमते इति

सूत्र। अस्ति रहस्यम्। (ड)

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥ (ढ)

इति भागवतीया गाथा।

पारि। भवतु नाम भक्तिं कुर्व्वन्तु। कथं लौकिकाचरितेऽनुरज्यन्ति। (ण)

सूत्र। मैवं वादीः।

अलौकिकीतः किल लौकिकीयं
लीला हरेरेति रसायनत्वम्।
लीलावतारानुकथाऽतिमृष्टौ
विश्वस्य सृष्ट्यादिकलापलिप्तौ॥ (त)

तथोक्तः परमात्मतत्त्वविहारीत्यर्थः। ब्रह्मभूतः जीवन्मुक्तः। सततेति सततेन अनवरतेन ब्रह्मानन्दानुभवे भविकसुभगम्भावुकः सुभगाभिमानीत्यर्थः नारद इति भावः। केलिम् अनु क्रीड़ां प्रति वल्लव्याः दर्शनाभिलाषीत्यर्थः।

(ड) रहस्यम् अतिगूढ़ं वस्तु इति भावः।

(ढ) आत्मारामा इति। आत्मारामाः परमात्मनिष्ठा इत्यर्थः निर्ग्रन्था वासनारहिता अपि मुनयः उरुक्रमे नारायणे अहैतुकीम् अकारणां भक्तिं कुर्वन्ति यतः हरिः इत्थम्भूतानि अहैतुकभक्तिभाजनानीत्यर्थः। गुणा यस्य तादृशः।

(ण) लौकिकाचरिते लौकिकं सामान्यलोकानुष्ठेयमित्यर्थः चरितं विहारादिकमित्यर्थः तत्र अनुरज्यन्ति अनुरक्ता भवन्तीत्यर्थः।

(त) अलौकिकीत इति हरेः इयं लौकिकी लीला अलौकिकीतः लीलाया इति शेषः अपेक्षार्थे पञ्चमी। रसायनत्वं प्रेमावाचकत्वम् एति प्राप्नोति किल निश्चितम्। विश्वस्य जगतः सृष्ट्यादि-

यत उक्तम्। "भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत्" इति साधारण-जन-परमेव। विशेषतस्त्वयं श्रीनारदो वृन्दावन-विनोद-प्रियः। श्रीगोपालमहामनो-ऋषिरपि तेन युक्तमेवैतत्। तदविलम्बितमेव सम्पद्यतां पात्रवर्गस्य भूमिकापरिग्रहः। (थ)

पारि। भाव! क्षणमपेक्ष्यतां यावदसौ मुनिवरः (द) समायाति।

सूत्र। आगतप्राय एव। न खलु तादृशामन्तरीक्ष-चारिणां पर्य्यटनविलम्बः।

पारि। एवञ्चेत् कः प्रयोगोऽनुष्ठातव्यस्तदप्यनु-ज्ञायताम्।

सूत्र। गृहीत्वा जरतीभावं या देव्या योगमायया।
सम्पद्यते दानलीला सैव राधामुकुन्दयोः॥ (ध)

कथा पविक्षी शुक्लकेशा नारी अतिवृद्धेत्यर्थः लीलावतारस्य कथा अतिवृद्धी अतिमनोहरेत्यर्थः।

(थ) भजते इति तादृशीः पर्य्यौकविधाः क्रीड़ाः भजते करोति हरिरिति शेषः, याः क्रीड़ाः श्रुत्वा तत्परः भगवत्परः भवेत्। साधा-रणजनपरं सामान्यजनोपदेशपरमित्यर्थः। श्रीगोपालस्य कृष्णस्य महामनोः महामन्त्रस्य ओं नमो भगवते वासुदेवायेत्यस्य ऋषिः सततजापक इत्यर्थः। पात्रवर्गस्य नटगणस्य। भूमिकापरिग्रहः नेपथ्यग्रहणम्।

(द) मुनिवरः नारदः।

(ध) गृहीत्वेति। जरतीभावं वृद्धाभावं गृहीत्वा देव्या योग-मायया राधामुकुन्दयोः राधाकृष्णयोः या दानलीला सम्पद्यते सम्पन्ना भवति सैव प्रयुज्यतेति।

पारि। कथमेषा त्वरितं सम्पादयितुं शक्यते।

सूत्र। कथमिव।

पारि। श्रूयताम्।

तस्मिन् प्रयोगे भवतस्तनूजाः
सर्वा विशेषाद्गणनाप्रवीणाः। (न)

सूत्र। साधङ्कम्। कथय तासां स्वस्त्यस्ति।

पारि। स्वस्त्येव। किन्तु,

वृन्दावनं ताः प्रययुः प्रमोदात्
सम्भूय गोपीश्वरपूजनार्थम्॥ (प)

सूत्र। किं करोमि कथमेतन्नारदः प्रत्येतु (फ)। अहो! तदभिशापाद्भयेन भाव्यम्।

पारि। अलमलं चिन्तया ता अपि समागतप्राया एव।

सूत्र। हन्त मारिष! न जानासि।

वर्त्मानभिज्ञाः किल ताः कुमार्य्यो
न चोपयुक्तः कतमोऽस्ति बन्धुः।
दावद्रवोत्क्षिप्तकरः कराल-
स्तम्बेरमो यत्र समेघधामा॥ (ब)

(न) तस्मिन्निति। तस्मिन् प्रयोगे सर्वाः भवतः तव तनूजाः कन्याः विशेषात् विशेषेण गणनया प्रवीणाः श्रेष्ठा इत्यर्थः प्राधान्येन तत् प्रयोगं कर्त्तुं शक्ता इति भावः।

(प) वृन्दावनमिति। ताः सर्वाः प्रमोदात् आदरात् गोपीश्वरस्य कृष्णस्य पूजनार्थं सम्भूय मिलित्वा वृन्दावनं प्रययुः गताः।

(फ) प्रत्येतु विश्वसितु।

(ब) वर्त्मेति। ताः कुमार्य्यः किल निश्चितं वर्त्मनः पथः अन-

पारि । भाव ! अस्ति तासां सङ्गे योगमाया-प्रभावा (भ) जरती भवच्छ्वश्रूः ।

सूत्र । विहस्य । तदा निश्चिन्त एवास्मि ।

या न पश्यति पन्थानं न शृणोति च या वचः ।
सा किं करोतु साहाय्यं या जरेव शरीरिणी ॥ (म)

पारि । मैवं वादीः ।

महाप्रभावा खलु योगिनी सा
वयो न तस्या मतिविप्लवाय ।
क्रमेण वृद्धा विधुमण्डलीयं
न ग्लायति द्योतत एव कामम् ॥ (य)

---

भिद्धाः अजानत्यः । कतमः कोऽपि उपयुक्तः योग्यः रक्षणसमर्थ इत्यर्थः बन्धुरपि नच अस्ति ताभिः सहेति शेषः । यत्र वर्त्म नि मेघधाम्ना सह वर्त्तमानः समेघधामा मेघवर्ण इत्यर्थः दानद्रवेण मद-वारिणा उक्षितः अभिषिक्तः करः शुण्डादण्डः यस्य तादृशः करालः भीषणः स्तम्बेरमः हस्ती अस्तीति शेषः ।

(भ) योगमायेति योगमाया इव प्रभावो यस्यास्तादृशी जरती वृद्धा ।

(म) येति । या पन्थानं मार्गं न पश्यति, या च वचः न शृणोति या च शरीरिणी मूर्त्तिमती जरेव वार्द्धक्यमिव स्थितेति शेषः दर्शनश्रवणसामर्थ्यरहिता तिष्ठतीत्यर्थः । सा मम श्वश्रूः किं साहाय्यं करोतु ? ।

(य) महेति । सा योगिनी तव श्वश्रूः महाप्रभावा खलु, तस्याः वयः वार्द्धक्यं मतिविप्लवाय बुद्धिभ्रंशाय न, तथाहि क्रमेण वृद्धा वृद्धिं प्राप्ता इयं विधुमण्डली चन्द्रमण्डलं न ग्लायति न मालिन्यं गच्छति, कामं सम्यक् द्योतते राजते एव ।

नेपथ्ये हंहो गन्धर्वपते ! को विलम्बस्तदभिनयस्य ।

सूत्र । श्रुतिमभिनीय । मारिष ! पश्यायमुत्कण्ठमानो मुनिवरः सप्रमोदमभिनेष्यमाण-विलोकनार्थं त्वरमाण आगच्छति । अस्माकन्तु न काऽपि सामग्री (र) सम्पद्यते । तदयमितो गत्वा तासामेव कुमारीणामनुसन्धानाय यामः ।

पारि । यथारुचितं भवते । इति अयं नर्त्तित्वा निष्क्रान्तौ ।

( प्रस्तावना । )

ततः प्रविशति स्नातकेनानुगम्यमानो नारदः ।

नारदः । अये गन्धर्वराज ! किमपरं विलम्बसे । इति तमनुसन्दधाति ।

प्रेम । वत्स मैत्रि ! पश्य पश्य ।

अंसे निधाय महतीं रणयन् प्रकोष्ठे
वामेतरे वलयवत्कलिताक्षमालः ।
विद्युद्विकस्वरविकीर्णजटाकलापः
कैलासकान्तिरयमेति सुरर्षिरग्रे ॥ (ल)

---

(र) अभिनेष्यमाणेति अभिनेष्यमाणस्य करिष्यमाणाभिनयस्य प्रयोगस्य विलोकनार्थं दर्शनार्थम् । सामग्री अभिनयसाधनसुद्योग इत्यर्थः ।

(ल) अंसे इति । कैलासकान्तिः कैलासपर्वतवत् श्वेतकान्तिरित्यर्थः विद्युदिव विकस्वरः विराजन् विकीर्णः विक्षिप्तः जटानां कलापः समूहः यस्य तथोक्तः वामेतरे दक्षिणे प्रकोष्ठे मणिबन्धोपरिभागे वलयवत् कलिता धृता अक्षमाला जपमाला येन तादृशः अयं सुरर्षिः नारदः अंसे स्कन्धे महतीं स्ववीणां विश्वावसोस्तु बृहतीतुम्बुरोस्तु कलावती । महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपीति

वत्से ! प्रणमैनम् । महाभागवतोत्तमोऽयं मुनिवरः । यस्य खल्वियं गाथा ।

अहो देवर्षिर्धन्योऽयं यत्कीर्त्तिं शार्ङ्गधन्वनः ।
गायन् माद्यन्निदं तन्त्र्या रमयत्यातुरं जगत् ॥ (ब)

वै । प्रणम्य । देवि ! तुए भणिदं। सिरिवासो णारदो हुविस्सदि । कहं दाणिं सअं ज्जेव णारदो आअदो (१) ।

प्रेम । अस्य सहज-नारदाऽऽवेशत्वान्नारदरूपता व्यक्तैव (भ) । अद्वैतादेषु तत्तदारोपः । तत्त्वया यथादृष्ट-मेव प्रतीयताम् ।

नार । भो भोः स्नातक ! कथमत्र कोऽपि न दृश्यते ।

स्नात । सुरर्षे ! गन्धर्वराजस्तु वृन्दावन एव नर्त्तितव्य-मिति तत्रैव ससामग्रीको (म) गतवानस्ति । एहि तत्रैव गच्छावः ।

(१) देवि त्वया भणितम् । श्रीवासो नारदो भविष्यति । कथमिदानीं स्वयमेव नारद आगतः ।

---

वैजयन्ती । निधाय रणयन् वादयन् अये पुरतः एति आगच्छति । वसन्ततिलकं वृत्तम् ।

(ब) अहो इति । अहो ! अयं देवर्षिः धन्यः पुण्यवान् । यत् यस्मात् तन्त्र्या वीणया शार्ङ्गधन्वनः कृष्णस्य कीर्त्तिं गायन् माद्यन् मत्तो भवन् इदम् आतुरं पापाकुलितमित्यर्थः जगत् रमयति आप्याययति ।

(भ) अस्य श्रीवासस्य । सहजेति सहजः स्वाभाविकः नारद-स्येव आवेशः भगवदनुराग इति भावः यस्य तथाभूतः तस्मात् । व्यक्तैव स्फुटैव ।

(म) ससामग्रीकः सोपकरणः ।

नार। इदं वृन्दावनं न भवति।

स्नात। भो महात्मन्! पतिग्रयहर्षोत्कर्षेण स्वात्माऽपि विस्मृतो भवता। यत्र तथा वृन्दावन-परिचय चातुर्य्य-धुर्य्योऽपि (अ) वृन्दावनं न परिचिनोषि।

नार। भोः स्नातक! सत्यमेवोक्तं भवता।

आनन्दोन्मादलुप्तान्तर्बहिष्करणवृत्तयः।
परिचिन्वन्तु के सम्यगात्मानं किमुतापरम्॥ (इ)

तदादिश तस्य (ख) पन्थानम्।

स्नात। भो इत इतः। इत्युभौ नाट्येन परिक्रामतः।

प्रेम। निरूप्य। अहो! महाभागवतस्य नैसर्गिकी वृन्दावनरतिः। (क)

नार। नाट्येन कियद्दूरं गत्वा। हन्त भोः!

यत्पारे विरजं विराजि परमव्योमेति यद्गीयते
नित्यं चिन्मयभूमिचिन्मयलता कुञ्जादिभिर्मञ्जुलम्।

---

(अ) [illegible]नेति वृन्दावनस्य परिचये ज्ञाने यत् चातुर्य्यं वैदग्ध्यं तत्र धुर्य्योऽपि अग्रणीरपि।

(इ) आनन्देति। आनन्देन य उन्मादः चित्तविकारविशेषः तेन लुप्ता नष्टा बहिष्करणानां बाह्येन्द्रियाणां वृत्तयः व्यापाराः येषां तथाभूताः के जनाः आत्मानं सम्यक् परिचिन्वन्तु परिचेतुं शक्नुवन्तु। अपरम् आत्मभिन्नं किमुत? नैव परिचिन्वन्तीत्यर्थः।

(ख) तस्य वृन्दावनस्य।

(क) महाभागवतस्य परमवैष्णवस्य नैसर्गिकी वृन्दावने रतिः अनुरागः।

(ख) यदिति। यत् पारे विरजं विरजसः [illegible] रजोगुणस्य पारे इति पारेविरजं रजोगुणातीतं [illegible]: । यत्

सान्द्रानन्दमहोमयैः खगमृगव्रातैर्वृतं सर्वत-
स्तद्वृन्दावनमीक्ष्यते किमपरं सम्भाव्यमक्ष्णोः फलम्॥ (ख)

यत्र स्वयं स्वयम्भूरप्युत्कण्ठिता यत्किञ्चिदेव (ग) जन्माऽभिलषितवान्। तथा च पौराणिकी गाथा।

तद्भूरिभाग्यमिह जन्म किमप्यटव्यां
यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम्। (घ)

इत्यादि। इत्येतदेव पद्यमुपधीयमटति। (ङ)

सूत। एवञ्चेत् प्रतिपदमेव (च) भवता प्रेमानन्दविह्वलेन भूयते तदा कथं गम्यताम्।

नार। धैर्यमवष्टभ्य। आदिश मार्गम्।

विराजि विराजमानं परमव्योम महाकाशमिति गीयते कथ्यते विद्वद्भिरिति शेषः तत् नित्यं चिरन्तनं भगवच्चिन्मयत्वादिति भावः। चिन्मयस्य ज्ञानमयस्य भगवतः भूमयः आश्रयभूताः याः चिन्मयलताकुञ्जादयः ज्ञानमयवल्लीवेष्टितस्थानादयः ताभिः मञ्जुलं मनोज्ञं सान्द्रानन्दमहोमयैः पूर्णानन्दतेजःस्वरूपैः खगमृगव्रातैः पक्षिमृगवृन्दैः सर्वतः समन्तात् वृतं वृन्दावनम् ईक्ष्यते दृश्यते, अतःपरम् अक्ष्णोः फलं किं सम्भाव्यं न किमपि सम्भवतीति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ग) यत्र वृन्दावने स्वयम्भूः ब्रह्मा यत्किञ्चित् इतरदेव।

(घ) तदिति। इह अटव्यां वने वृन्दावने इत्यर्थः अटव्यरण्यं गहनमित्यमरः। यत् किमपि सामान्यमपीत्यर्थः जन्म, तत् भूरिभाग्यं बहुभाग्याधीनमित्यर्थः यत् यतः गोकुले एतदन्तःपातिनि तदाख्यप्रदेशे कतमम् अङ्घ्रिरजः कृष्णपदरजसः अभिषेकं सर्वाङ्गीनग्रहणं लभते इति शेषः।

(ङ) अटति भ्रमति।

(च) प्रतिपदमेव पदे पदे एव।

स्नात। इत इतः। इत्युभौ पुनर्नाट्येन परिक्रामतः। नेपथ्ये मुरलीध्वनिः।

स्नात। देवर्षे! इदमेव वृन्दावनम्। यदेष भगवतो मुरलीकल (छ) आकर्ण्यते।

नार। श्रुतिमभिनीय। अये! सत्यमेवात्थ। तथाहि,

मधुरिमसरवापीमत्तहंसीप्रजल्पः
प्रणयकुसुमवाटीभृङ्गसङ्गीतघोषः।
सुरतसमरभेरीझाङ्कृतिः पूतनारे-
र्जयति हृदयदंशी कोऽपि वंशीनिनादः॥ (ज)

प्रेम। वत्स! भगवतः श्रीकृष्णचन्द्रस्य प्रवेशो भविता। तदिदानीं विस्मर्य्यतामाजन्मदुःखम्। सफलीक्रियेताञ्च नयने।

मै। सव्वं तुह चरण-पसादादोज्जेव (१)।

नार। निपुणं निभाल्य। स्नातक! सत्यमेव व्रजराज-कुमारस्यैव वंशीनिनादोऽयम्।

---

(१) सर्व्वं तव चरण-प्रसादादेव।

(छ) मुरलीकलः मुरल्याः वंश्याः कलः मधुराव्यक्तनिस्वन इत्यर्थः।

(ज) मधुरिमेति। मधुरिम्णां सरः प्रसरः अतिरेक इत्यर्थः स एव वापी सरसी तस्यां या मत्ता हंसी तस्याः प्रजल्पः रवविशेषः, प्रणय एव कुसुमवाटी पुष्पवाटी तत्र भृङ्गस्य सङ्गीतघोषः गीतनिस्वनः, सुरतमेव समरः संग्रामः तत्र या भेरी वाद्यविशेषः तस्याः झाङ्कृतिः झङ्कारः हृदयदंशी हृदयाकर्षीत्यर्थः पूतनारेः कृष्णस्य कोऽपि अनिर्वचनीयस्वरूपः वंशीनिनादः जयति। मालिनीवृत्तम्।

यतः, विततिरपि गिरीणां मुञ्चतीवाम्बुधारां
पुलकयति तरूणां वीरुधाञ्चैव वर्गः।
विदधति सरितोऽपि स्रोतसः स्तम्भमुच्चै-
र्हरि हरि हरिवंशीनाद एवोज्जिहीते॥ (झ)

इत्येतदेव पद्यं पूर्व्ववदुपगीथयन् नृत्यति।

ज्ञात। यथार्थमेवैतन्नटनम्। यतः,

श्रुतिभिरपि विमृग्यं ब्रह्मसम्पत्तिभाजा-
मपि पुरु रसनीयं मूर्त्त आनन्दसारः।
यदहह भविताऽद्य श्रीलशम्भुस्वयम्भू-
प्रभृतिभिरभिवन्द्यं पादपद्मं दृशोर्नः॥ (ञ)

तद्देवर्षे! क्षणमपवार्य्य स्थातुं युज्यते। किमसौ सह-

(झ) विततिरिति। गिरीणां विततिः श्रेणिरपि अम्बुधारां प्रेमानन्दवाष्पाणि मुञ्चतीव त्यजतीव। एषः तरूणां वृक्षाणां विरुधां लतानाञ्च वर्गः पुलकयति रोमाञ्चित इव आचरति। सरितः नद्यः अपि उच्चैः स्रोतसः प्रवाहस्य स्तम्भं विदधति स्तम्भिता इव भवन्तीत्यर्थः। हरि हरीति हर्षसूचकमव्ययं हरेः कृष्णस्य वंशीनिनाद इव उज्जिहीते उद्गच्छति। मालिनीवृत्तम्।

(ञ) श्रुतिभिरिति। यत् पादपद्मं श्रुतिभिः वेदैरपि विमृग्यं विशेषेण अन्वेषणीयं, ब्रह्मसम्पत्तिभाजां ब्रह्मपरायणानामपि पुरु महत् रसनीयम् आस्वाद्यं मूर्त्तः मूर्त्तिमान् आनन्दसारश्च, अहह हर्षातिशयद्योतकमव्ययम्। अद्य तत् श्रीलैः श्रीमद्भिः शम्भुस्वयम्भूप्रभृतिभिः अभिवन्द्यं वन्दनीयं पादपद्मं नः अस्माकं दृशोः चक्षुषोः भविता पतिष्यति।

चरैरेवोपसर्पति किंवा सौभाग्य-रस-गभीराभिराभीर-भीरुभिरिति सहसोपसर्पणमसाम्प्रतम् । (ट)

नार । सत्यमात्थ तदेवमेव कुर्व्वः । इति तथा स्थितौ ।

ततः प्रविशति कदम्बतरु काण्ड-कृताऽऽलम्बस्त्रिभङ्गी-ललितो मुरलीं वादयन् कतिपयैः सखिभिः (ठ) सह श्रीकृष्णः ।

श्रीकृष्णः । सखे ! रम्यमिदं वृन्दावनस्य सौभाग्यम् । तथाहि,

हसन्ती वासन्ती वलितमुकुलो वालवकुलो
विशोकश्चाशोकः सुलभविचयश्चम्पकचयः ।
अनागः पुन्नागः स्तवककमनः पश्य सुमनः-
कुटीरः पाटीरश्वसनसुरभिर्भाति सुरभिः ॥ (ड)

(ट) सहचरैः बलभद्रादिभिः । आभीरभीरुभिः व्रजाङ्गनाभिः । उपसर्पणं समीपगमनम् असाम्प्रतम् अयुक्तम् ।

(ठ) कदम्बेति । कदम्बस्य तरोः काण्डे स्कन्धे कृतः आलम्बः आश्रयः येन तथोक्तः । त्रिभङ्गीभिः अङ्गत्रयभङ्ग्या इत्यर्थः ललितः मनोहरः । सखिभिः सहचरैः ।

(ड) हसन्तीति । पश्य अवलोकय । वासन्ती वसन्तलक्ष्मीः हसन्ती वालवकुलः नववकुलः वलितं विकासोन्मुखं मुकुलं यस्य तथाविधः । अशोकः विशोकः शोकशून्यः विकासीत्यर्थः, चम्पकानां चयः समूहः सुलभः विचयः, अन्वेषणं यस्य तादृशः बाहुल्येन दृश्यमान इत्यर्थः अनागः न सन्ति नागाः यत्र तथोक्तः पुन्नागः तदाख्यवृक्षभेदः स्तवककमनः स्तवकैः गुच्छैः कमनः कमनीयः मनोहर इत्यर्थः तथा सुमनसां पुष्पाणां कुटीरः आलयः पुष्पमयीत्यर्थः पाटीरश्वसनेन चन्दनसमीरणेन सुरभिः सौरभवान् सुरभिः वसन्तः भाति राजते ।

वयस्याः। भो वअस्स! तुज्झ एदं कीला-काणणं कधं रमणिज्जं ण हुविस्सदि (१)।

प्रेम। निर्वर्ण्य। अहो! किमेतत्।

अयं नैवार्हतो बत न तदिदं वेशरचना-
कलाशिल्पं किन्तु स्वयमिह हरिः प्रादुरभवत्।
यथार्थं वस्त्वेव प्रथयति चमत्कारमधिकं
यथार्थस्याकारः सुखयति च सम्मोहयति च॥ (ढ)

पुनर्निभाल्य सपरामर्शम्।

अकृष्णः कृष्णत्वं व्रजितुमसमर्थो हि भवति
स्वयं कृष्णो नानाकृतिकृतिसमर्थोऽपि भवति।
गृहीतुं योग्यः स्यादवयवकलापं ह्यवयवी
कथङ्कारं धत्तामवयवविशेषोऽवयविताम्॥ (ण)

(१) भो वयस्य! तव इदं क्रीडा-काननं कथं रमणीयं न भविष्यति।

(ढ) अयमिति। बत हर्षे, अयम् अर्हतः नैव, तदिदं वेशरचनायाः कलायाः शिल्पं न, किन्तु इह वृन्दावने हरिः स्वयं प्रादुरभूत्। यथार्थं सत्यं वास्तवमित्यर्थः वस्तु एव अधिकं चमत्कारं प्रथयति विस्तारयति। यथार्थस्य तात्त्विकस्य आकारः सुखयति सम्मोहयति च अन्तरात्मानमिति शेषः। शिखरिणीवृत्तम्।

(ण) अकृष्ण इति अकृष्णः कृष्णभिन्नः जनः कृष्णत्वं व्रजितुं प्राप्तुम् असमर्थः अयक्तः हि निश्चितं भवति। कृष्णस्तु स्वयं नानाकृतिकृतौ बहुविधरूपपरिग्रहे इत्यर्थः समर्थः अपि भवति। हि तथाहि अवयवी अङ्गी अवयवकलापम् अङ्गसमूहं गृहीतुं योग्यः स्यात्। अवयवविशेषः अङ्गविशेषः अवयविताम् अङ्गितां कथङ्कारं

तदयमद्वैत एव न भवति। नाऽपि वेशरचना-कौशलम्। किन्तु स्वयं कृष्ण एवावतीर्णः।

नार। दूरान्निभाल्य सानन्दम्। अहो! किमेतत्।

सान्द्रानन्दरसाब्धिमन्थविदितं सद्भक्तगोष्ठ्यां कृपा-
मोहिन्या परिवेषितं रतिमतां वृन्देन तत्राभितः।
नानारुच्यनुपानतः प्रतिमुहुः पीतञ्च पूर्णं सदा
नो जीर्य्यत्यपि नोपयाति विकृतिं श्यामामृतं किञ्चन ॥(त)

अपिच,

नवजलधरधामा कोटिकामाऽभिरामः
परिणतशरदिन्दुस्निग्धमुग्धाऽऽननश्रीः।
नवकमलपलाशद्रोणिदीर्घाक्षियुग्मो
दशनकुसुमकान्तिभ्रान्तबिम्बाधरोष्ठः ॥ (थ)

केन प्रकारेण धर्त्तां त्वच्छात्तु नैव धर्त्तुं शक्नोतु इत्यर्थः। कृष्णः स्वयं जगतामङ्गी, जगत् तस्याङ्गम् अङ्गी अङ्गस्य रूपं ग्रहीतुं शक्नोति नतु अङ्गम् अङ्गिन इति फलितोऽर्थः। शिखरिणीवृत्तम्।

(त) सान्द्रेति। सान्द्रः घनः आनन्दरस एव अब्धिः समुद्रः तस्य मन्थेन विदितं ज्ञातम् उद्धृतमित्यर्थः सन्तः ये भक्ताः तेषां गोष्ठ्यां समाजे कृपा एव मोहिनी तया तथा रतिमताम् अनुरागभाजां वृन्देन समूहेन तत्र समुद्रे अभितः सर्वतः परिवेषितं वेष्टितं नाना-रुच्यनुपानेन स्वां स्वां रुचिमनुरुध्य इत्यर्थः प्रतिमुहुः पुनः पुनः पीतम् अथच सदा पूर्णं किञ्चन श्यामामृतं कृष्णरूपममृतं नो जीर्य्यति न परिपाकं व्रजति, नापि विकृतिम् उपयाति गच्छति। शार्दूल-विक्रीड़ितं वृत्तम्।

(थ) नवेति। नवस्य जलधरस्येव धाम तेजः कान्तिर्वा यस्य तथोक्तः नवीननीरदः श्याम इत्यर्थः, कोटिकामः कोटिसङ्ख्यककामः तद्वत्

इत एवाभिसर्पति। तदेहि कुञ्जाऽन्तरितौ भूत्वा पश्याव:।

स्नात। एवमेव। इति तथा कुरुतः।

कृष्णः। सखे सुबल! सखे श्रीदामन्! सखे सुदामन्! कुसुमासवो नाम वटुः (३) प्रियसखो मे कथं न दृश्यते। तदेतं मृगयत।

सखायः। यथाज्ञं मृगयाम इति तदन्वेषणं नाटयन्ति।

प्रविश्याऽपटीक्षेपेण सम्भ्रान्तो विदूषकः। भो वअस्स! परित्ताहि परित्ताहि (१)।

श्रीकृष्णः। कथं भीत इव लक्ष्यसे।

विदू। वअस्स! एक्का जोइणी जरदीव्व दीसमाणा दैवोपसण्ण-ललिद-बाल-ललणाओ पञ्चसाओ वण-मज्झम्मि आणिअ गोवीसर-पूअणत्थं किदाऽऽरम्भा दिट्ठा। तुह

(१) भो वयस्य! परित्राहि परित्राहि।

(२) वयस्य एका योगिनी जरतीव दृश्यमाना दैवोपसन्न-ललित-

अभिरामः सुन्दरः, परिणतः पूर्णः यः शरदिन्दुः शरच्चन्द्रः तस्येव स्निग्धा मुग्धा मनोज्ञा आननस्य मुखस्य श्रीः शोभा यस्य तथाभूतः, नवं यत् कमलपलाशं पद्मपत्रं तदिव तथा द्रोणिः काष्ठाम्बुवाहिनी नौकाविशेष इत्यर्थः सैव दीर्घं विशालम् अरुणं रक्तम् अक्षि नेत्रं यस्य तथाभूतः, तथा दशनाः दन्ता एव कुसुमानि तेषां कान्त्या सैत्येन इत्यर्थः श्यामौ कान्तौ धावल्ययोगात् रक्ततायाः घनत्वापगमादिति भावः बिम्बवत् अधरोष्ठो यस्य तथाविधः। मालिनीवृत्तम्।

(३) वटुः ब्राह्मणदारकः।

पुत्तेण प्रहं उव्वरिमो (ध)। मं गहिम णूणं बलिं दाइ-स्सदित्ति मे भअं जादं (१)।

कृष्णः। विहस्य। वयस्य सुबल! किमेतत्।

सुब। ज्ञातमिहस्थेनैव मया। अद्य खलु गोपीश्वर-पूजनकृते गुरु-जन-कृते गुरु-निवारणेऽपि मातामह्या मह्याऽऽचरणया बलतो बलतो हर्षोत्कर्षतः स्वच्छन्दतो वनगमनाय प्रवर्त्तयिष्यते राधा। तत्र तामेव जरती-मालोक्य योगिनी भ्रान्त्याऽयं वटुर्विभाय। विभाऽऽयता हि सा स्वभावादेव देवमायेव। (न)

बाल-ललना पञ्चषा वनमध्ये आनीय गोपीश्वरपूजनार्थं कृताऽऽरम्भा दृष्टा। तत्र पुत्रेण अहमुद्धृतः। मां गृहीत्वा नूनं बलिं दास्यति। इति मे भयं जातम्।

---

(ध) दैवेति दैवेन सन्नाः उपसन्नाः उपस्थिताः ललिताः सुन्दरीः बाललननाः मुग्धाङ्गनाः पञ्चषाः पञ्च षट् वा इत्यर्थः। कृता-रम्भा कृतोद्योगा। उद्धृतः नाभ्यः मुक्त इति भावः।

(न) गोपीश्वरेति गोपीश्वरस्य कृष्णस्य पूजनकृते पूजनार्थम्। गुरुजनेति गुरुभिः जनैः श्वश्र्वादिभिः कृते। गुरुनिवारणे महति निषेधे। मातामह्या मातुर्माता कयाचित् गोप्या इति भावः। मह्येति मह्यं महनीयं प्रशंसनीयमित्यर्थः आचरणं यस्यास्तथाभूतया। बलतः प्रबलात् बलतः बलात् बलातिशयवशादिति यावत् हर्षोत्-कर्षतः अतिहर्षात्, स्वच्छन्दतः स्वेच्छाचारित्वादित्यर्थः। प्रवर्त्तयिष्यते प्रवृत्ता करिष्यते। तत्र वृन्दावने तामेव मातामहीमेव जरतीं वर्षी-यसीम्। सा जरती विभायता विभया प्रभया कान्त्या इत्यर्थः आयता दीर्घा कान्त्युज्ज्वलेत्यर्थः। स्वभावात् निसर्गात्। देवमायेव दैवी मायेव मोहनमूर्त्तिरिवेत्यर्थः।

विदू। हो हो जद्दवि एव्वं तहवि पिअ-वअस्स-हत्थे णिपडिस्सन्ति सव्वाओ। जं गोउल-वासिणीणं इत्थी-कुरङ्गिणं रङ्गिणं क्खु पिअ-वअस्सस्स गुण-गणो वाउरा-जालो (१)। (प)

नार। भोः स्नातक ! अतःपरमत्रावस्थातुं न युज्यते। तदेहि योगप्रभावेण नभश्चरौ भूत्वा पश्याव:। इति निष्क्रान्तौ।

नेपथ्ये। हन्त अज्जे ! केण पहेण गोवीसरं अणुसरेम्ह जदो।

विरइअ ठाणे ठाणे दाणं सो वणगओ धुत्तो।

कड्डइ सदालिवग्गं हेला-कण्डूल-करदण्डो॥ (२)। (फ)

सुब। वयस्य ! फलितमस्मद्वच:।

कुसु। मए जं उत्तं वअणं तं किं ण फलिस्सदि। ता अली-अं ज्जेव गव्वमुव्वहसि (३)। कृष्णं प्रति। वअस्स !

(१) होहो यद्यपि एवं तथाऽपि प्रिय वयस्य-हस्ते निपतिष्यन्ति सर्वाः। यत् गोकुल-वासिनीनां स्त्री-कुरङ्गीणां रङ्गिणीनां खलु प्रियवयस्यस्य गुण-गणो वागुरा-जालः।

(२) हन्त आर्ये केन पथा गोपीश्वरमनुसरामो यतः।

विरचय्य स्थाने स्थाने दानं स वनगजो धूर्त्तः।

कर्षति सदालिवर्गं हेलाकण्डूल-करदण्डः॥

(३) मया यदुक्तं वचनं तत् किन्न फलिष्यति। तदलीकमेव गर्वमुद्वहसि।

---

(प) स्त्रीकुरङ्गीणां योषिन्मृगीणां रङ्गिणीनां विलासिनीनाम्। वागुराजालः बन्धनकूटयन्त्रमित्यर्थः।

(फ) पथा मार्गेण रीत्या इत्यर्थः। दानं मदजलं विरचय्य स्रावयित्वा वनगजः वन्यकरी। अलिवर्गं भ्रमरालीं मदसौरभादिति भावः। हेलेति हेलया अवलीलया कण्डूलः कण्डूकरणपरः करदण्डः शुण्डा-दण्डः यस्य तथोक्तः।

तुम्हे वि तेण उज्जमेण चिठ्ठध (१)।

कृष्णः। कोऽसावुद्यमः।

कुसु। ण सुदं विरइअ ठाणे ठाणे इत्यादि जं पढिदं। किंतु वण-गओत्ति जं भणिदं तं उइदंज्जेव। धुत्तोत्ति जं भणिदं तं क्खु मे दुक्खा-अरं (२)। (ब)

कृष्णः। विहस्य सावहित्थम्। वन-गजो धूर्त इति कथं ते दुःखाचरम्।

कुसु। एत्थ वणे को अवरो वण-गओ (३) (भ)। पुनर्नेपथ्ये

अवगाहिअ उण मग्गं सो विविणे सहअरेहिं कलहेहिं।
विहरइ दाण-विणोदे (म) हन्त कधं तत्थ गन्तव्वम् (४)॥

(१) वयस्य! त्वमपि तेनोद्यमेन तिष्ठ।

(२) न श्रुतं विरचय्य स्थाने स्थाने इत्यादि यत् पठितम्। किन्तु वनगजेति यद्भणितं तदुचितमेव। धूर्त इति यद्भणितं तत् खलु मे दुःखाचरम्।

(३) अत्र वने कोऽपरो वनगजः।

(४) अवगाह्य पुनर्मार्गं स विपिने सहचरैः कलभैः।
विहरति दान-विनोदो हन्त कथं तत्र गन्तव्यम्॥

(ब) दुःखाचरं दुःखजनकमक्षरं धूर्त्तानां भयजनकत्वादिति भावः।

(भ) कः अपरः त्वत्तोऽभिन्न इति भावः वृन्दावने धूर्त्तो वनगजः कृष्ण एवेति ध्वनिः।

(म) अवगाह्य आहृत्य अवरुध्य इत्यर्थः। सहचरैः कलभैः करियावकैः सुबलादिभिरिति ध्वनिः। दानेन मदवारिणा अन्यत्र भक्ताभीष्टप्रदानेन। विनोदी विनोदनशीलः।

कुसु। वअस्स! अम्हे क्खणं कुञ्जे ओवारिअ (य) चिठ्ठम्ह। जाव इमाओ विस्सत्था हुविअ इध आअच्छन्ति (१)।

सर्वे। एवमेव। इति श्रीकृष्णेन सह कुञ्जप्रवेशं नाटयन्ति।

ततः प्रविशति पूजोपकरण-पात्र-पाणिभिः सह सहचरीभिर्जरत्योपगम्यमाना पाण्डु-पत्राऽऽवृता नव-किशलय-श्रीरिव (र) श्रीराधा।

श्रीराधा। सहीओ गोवीसर-पूअणत्थं सव्वोज्जेव सम्भारो आणीदो (२)।

सख्यः। अध इं। किंतु मिलाणं हुविस्सदित्ति कुसुमंज्जेव ण आहरिदं। इदोज्जेव अवचिणिस्सं (३)।

राधा। पिअं मे पिअं। ता एहि अवचिणम्ह (४)।

इति नाट्येन पुष्पावचयनं नाटयन्ति।

प्रेम। निर्वर्ण्य। अहो! चित्रम्। स एवायं देवः। नास्य किमप्यशक्यम्। यतः,

---

(१) वयस्य! वयं क्षणं कुञ्जे अपवार्य तिष्ठाम। यावत् इमा अपि विश्वस्ता भूत्वा इत आगच्छन्ति।

(२) हे सख्यो गोपीश्वर-पूजनार्थं सर्व्व एव सम्भार आनीतः।

(३) अथ किम्। किन्तु म्लानं भविष्यति इति कुसुममेव न आहृतम्। इत एव अवचयिष्यामः।

(४) प्रियं मे प्रियम्। तदेहि अवचयाम।

(य) अपवार्य्य आत्मानं गोपायित्वा इत्यर्थः। विश्वस्ताः निःशङ्काः।

(र) जरत्या वृद्धया उपगम्यमाना अनुगम्यमाना अतएव पाण्डुपत्रेण पक्कपर्णेन आवृता आच्छादिता नवकिशलयश्रीरिव नवपल्लवश्रीरिव।

मोहिन्येव बभूव यः स्वकलया देवद्विषो मोहय-
न्नात्मारामममपीश्वरेश्वरमपि श्रीशङ्करं लोभयन् ।
तस्याश्चर्य्यमिदं न किञ्चिदपि यत् कृष्णावतारोऽपि स
श्रीराधाऽऽकृतिमग्रहीत् स्ववपुषा देवः स विश्वम्भरः ॥ (ल)

अथवा,

हरिरयमथ लीलया स्वशक्त्या
विदलयुगात्मकलायवन्न भिन्नः ।
अभवदिव पृथक् पुमान् वधूश्च
स्वयमुभयांशसमानरूपयोगात् ॥ (व) ॥

पुनरन्यतोऽवलोक्य ।

इयमपि ललितेव राधिकाऽऽली
खलु न गदाधर एष भूसुरेन्द्रः ।

---

(ल) मोहिनीति । यः एषः देवः देवद्विषः असुरान् मोहयन् मुग्धान् कुर्वन् तथा आत्मारामं ब्रह्मपरायणमपि ईश्वरेश्वरं परात्परमपि श्रीशङ्करं शम्भुं लोभयन् मदयन्नित्यर्थः स्वकलया स्वांशेन मोहिनी बभूव, तस्य इदं किञ्चिदपि न आश्चर्य्यं यत् कृष्णस्य अवतारोऽपि स देवो विश्वम्भरः चैतन्य इत्यर्थः स्ववपुषा निजशरीरेण राधाकृतिं राधाशरीरमग्रहीदिति । शार्दूलविक्रीडितं वृत्तम् ।

(व) हरिरिति । अथ पक्षान्तरे अयं हरिः विदलं दलविभागरहितं सम्भूय स्थितमित्यर्थः युगात्मकं युग्मरूपेण स्थितं यत् कलायं शस्यविशेषः तद्वत् लीलया क्रीडारूपिण्या स्वशक्त्या न भिन्नः न पृथक् स्वशक्तिसहित एक एवेत्यर्थः । स्वयम् उभयांशसमानयोगात् तुल्यरूपेण उभयोरंशयोः स्वस्वरूपशक्तिस्वरूपयोरिति भावः विभागयोगादिति भावः । पुमान् पुरुषः वधूः प्रकृतिश्च पृथक् अभवदिव न खलु वस्तुतः पृथगिति भावः । पुष्पिताग्रा वृत्तम्, अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रेति तल्लक्षणात् ।

हरिरयमथ वा स्वयैव शक्त्या
त्रितयमभूत् स सखी च राधिका च ॥ (अ)

पुनरन्यतोऽवलोक्य । अहो ! इयमपि योगमायाऽगमाया-दमनी शमिनी नीरजा नीरजाक्षी धवल-वलता केश-पाशेन तम इव शुद्धसत्त्वीकृत्य दधाना जरतीवेशं विधाय प्रविष्टा । नेयं नित्यानन्दतनुः । नित्यानन्दतनुर्भगवान् हि स्वामेव योगमायामायापयामास । तस्य तु न चित्र-मेतत् (ब) । यतः

निवासशय्यासनपादुकांशुको-
पधानवर्षाऽऽतपवारणादिभिः ।

---

(अ) इयमिति । इयमपि राधिकाया आली सखी ललितैव खलु निश्चितम् एषः भूसुरेन्द्रः द्विजवरः गदाधरः न, गदाधरस्य ललितानेपथ्यधारित्वस्य पूर्वमुक्तत्वादिति बोध्यम् । अथवा अयं हरिः स्वयैव निजयैव शक्त्या प्रभावेण सः कृष्णः सखी ललिता च राधिका च एतत् त्रितयम् अभूत् । पुष्पिताग्रावृत्तम् ।

(ब) अगमायादमनीति न गच्छतीति अगा निश्चला इत्यर्थः या माया अविद्या तया द्यति छिनत्ति पीड़यति लोकानिति अगमाया-दः संसारः तस्य शमिनी शान्तिविधायिनी संसारक्लेशनाशिनी-त्यर्थः शमिनी शमगुणवती नीरजा रजोगुणातीता इत्यर्थः नीरजाक्षी पद्मनेत्रा धवलवलता धवलः शुक्लः वलन् विराजन् तेन । तम इव अन्धकारमिव मोहमिव वा शुद्धसत्त्वीकृत्य विमलीकृत्य दधाना धार-यन्ती । नित्यानन्दस्य तनुः स्वयं भगवानेव स्वां निजां योगमायाम् आयापयामास प्रापयामास । तस्य भगवतः । चित्रम् आश्चर्यम् ।

(स) निवासेति । हे भगवन्नित्यध्याहार्यम् । निवासः स्थानं शय्या, आसनं पादुका, अंशुकं वस्त्रम्, उपधानं शयने शिरोभाग-

शरीरभेदैस्तव शेषतां गतै-
र्यथोचितं शेष इतीरितो जनैः ॥ (ख)

इति प्राचीनैर्भक्तैरुक्तम् ।

सख्याः । राधां निर्वर्ण्य । सखे !

उत्कीर्णा किमु चारु कारुपतिना कामेन किं चित्रिता
प्रेम्णा चित्रकरेण किं लवणिमा त्वष्ट्रैव कुण्डे धृता ।
सौन्दर्याम्बुधिमन्थनात् किमुदिता माधुर्यलक्ष्मीरियं
वैचित्रीं जनयत्यहो प्रहरहर्दृष्टाऽप्यदृष्टेव मे ॥ (ग)

अथवा,

गौडीयं स्मरभूपतेर्मधुमदो लावण्यलक्ष्म्याः श्रयः
सौभाग्यस्य विनोदभूर्मधुरिमोल्लासस्य हासश्रियः ।
अद्वैतं गुणसम्पदामुपनिषत्केली विलासाऽऽवलेः
केयं लोचनचन्द्रिकाचयचमत्कारैककोरेक्षणा ॥ (घ)

---

विशेषः, यर्षातपयोः वारणं छत्रम् आदि येषां तैः शेषतां गतैः तव शरीरभेदैः यथोचितं जनैः शेष इति ईरितः कथितः ।

( ग ) उत्कीर्णेति । इयं राधा कारुपतिना शिल्पिश्रेष्ठेन केनचित् चारु यथा तथा उत्कीर्णा किम् ? कामेन चित्रकरेण प्रेम्णा अनुरागेण चित्रिता किम् ? त्वष्ट्रा विश्वकर्मणा एव कुण्डे सूर्यमण्डलविशेषे धृता स्थापिता लवणिमा लावण्यं किम् ? सौन्दर्यमेव अम्बुधिः समुद्रः तस्य मन्थनात् उदिता उत्थिता माधुर्यलक्ष्मीः किम् ? अहो आश्चर्यम् अहरहः प्रत्यहं दृष्टापि अदृष्टेव मे मम वैचित्र्यं चमत्कृतिं जनयति । शार्दूलविक्रीडितं छन्दः ।

(घ) गौडीयमिति । स्मरभूपतेः कामनरपतेः गौडीयं गौडदेशोत्पन्नं मधु मदः मदो विकारः सौभाग्यजीवनादायकत्वेपक इति वक्ष्यमाणाः सौभाग्यादिशब्दमिलितार्थं इत्यर्थः, लावण्यलक्ष्म्याः श्रयः स्थितं, सौभा-

इति सभ्रूभङ्गमालोकयति ।

राधा । एहि ललिदे ! लवङ्गकुसुमं अवचिणुम्ह (२) ।

इति परिक्रामन्ति ।

जरती । एषा लवङ्ग-वाडिआ वि कण्हस्स अदिपिअसी । इमाए णिअडं मा गच्छ । पच्चात् तुमं मोआवेदुं (क) ण सक्किस्सम्ह (२) ।

ललि । अज्जे ! तुमं पडिभूत्तणेण (ख) संठाविअ अम्हे अप्पाणअं मोआविस्सम्ह (३) । का चिन्ता । इति सकौतुकं सर्व्वाः कुसुमावचयनं नाटयन्ति ।

राधा । ललिदे ! परित्ताहि परित्ताहि । एसो दुट्टो भमरो बाधेइ (४) ।

(१) एहि ललिते लवङ्गकुसुममवचयाम ।

(२) एषा लवङ्ग-वाटिकापि कृष्णस्य अतिप्रेयसी । अस्या निकटं मा गच्छ । पश्चात् त्वाम् मोचयितुं न शक्ष्यामः ।

(३) आर्य्ये ! त्वाम् परिभूत्वेन संस्थाप्य वयम् आत्मानं मोचयिष्यामः ।

(४) ललिते ! परित्राहि परित्राहि । एष दुष्टो भ्रमरो बाधते ।

---

न्यस्य विनोदम्: विनोदनस्थानम् [illegible] मधुरिमा माधुर्य्यं श्रियः शोभायाः ह्रासः, गुणसम्पदाम् अद्वैतम् उपनिषत् रहस्यभेदः, त्रिजगन्मण्डलेः विभावराः केली क्रीडनं, लोचनचन्द्रिकाचयानां चमत्कारः इत्थं चकोरेक्षणा चकोराक्षी का ? प्रादुर्[illegible] क्रीडितं इदम् ।

(क) मोचयितुं न शक्ष्याम इति भावः ।

(ख) परिभूत्वेन प्रतिभूत्वेन ।

चन्द्रः। मुञ्चिअ लवङ्ग-लदिअं चवलो महुसूअणो एसो।
पिअ-सहि! अणिअदपेम्मो तुह मुहगन्धेण अभिओ भमइ॥
(१) (ग)

कृष्णः। अवलोक्य सस्पृहम्। सखे! पश्य पश्य।

मुखमनु निपतन्तं वारयन्ती द्विरेफम्
भयचकितचलाक्षी न्यञ्चु(ञ्च)यं करेण।
तमपि तदभिभूतं घूर्णितभ्रू र्धुनीते
स च कमभिनिन्ये झाकृतैः कङ्कणानाम्॥ (घ)

कुन्द। वअस्स! अअं ओसरो अम्हाणं। अम्ह-लवङ्ग-कुसुमं एसा आहरेदि। इमाए आहरणं बलं कादुअ तुमं आहर (२)।

(१) मुक्त्वा लवङ्ग-लतिकां चपलो मधुसूदन एषः।
प्रियसखि! अनियतप्रेमा तव मुखगन्धेन अभितो भ्रमति॥

(२) वयस्य! अयमवसरोऽस्माकम्। अस्मल्लवङ्ग-कुसुमम् एषा आहरति। अनया आहृतं बलं कृत्वा त्वमाहर

(ग) मधुसूदनः मधुपः कृष्ण इति ध्वनिः। अनियतप्रेमा चञ्चलानुरागः यदा पुष्पेषु मधु स्यात् तदैव भ्रमरस्तत्राति आगच्छति अन्यथा नेति भावः। अन्यत्र अनियतम् अदंयनम् उड्डलमित्यर्थः प्रेम-यस्य तथाविध इति ध्वनिः।

(घ) मुखमिति। मुखम् अनु प्रति निपतन्तं द्विरेफं भ्रमरं भयेन चकिते अतो चले चञ्चले अक्षिणी यस्यास्तथाविधा तथा न्यञ्चुञ्ची मदावर्जितवदना सती करेण हस्तेन वारयन्ती इयं राधा घूर्णिता भ्रूर्यया तादृशी सती तदभिभूतं तेन भ्रमरेण अभिभूतं तं करमपि धुनीते कम्पयति। स च करः कङ्कणानां झाकृतैः शब्दैः पीताम्बरं अभिमतवनितामिति भावः अभिनिन्ये अभिनयति स्म। कामिनीयसेव।

कृष्णः। एवंविधमालोकमनिवाऽतिसुरसं तथाऽपि प्रिय-वटीवंशोऽनुरोधेन तथा कुर्म्मः। इति सनुपदकृत्य सदर्पम्। अयि ललिते! दुर्ललिते! ऽदुः के तव साहसिक्य भिचामेताम्। कास्ते मदो मदोकसि वृन्दावने कथं स्वातन्त्र्यमारभ्यते। वारंवारमेव मे वनमागत्य गत्यनवस्थया तत इत इतर-जनीवद् गात्र-गर्व्वेण फल-कुसुम-सुमञ्जुल-लता-विटप-भङ्गमाचरन्त्यश्च परितोऽपरितोषं मम जनयन्ति नयन्ति-रस्कृत्य मामवजानन्ति च भवत्यः। अद्यमद्य विलोकिताः स्थ:। अतः परमस्य (ङ) फलं भुज्यताम्।

जरतो। अरे कन्हड कुसुमेहिंज्जेव एदाणं पओजणं ण क्खु फल-भोअत्थं एदाहिं वण-मज्झे आअदं (१)

कुन्द। अज्जिए! वअसेण समं तुज्झ बुद्धी च गदा (च)।

(१) अरे कृष्ण! कुसुमैरेव एतासां प्रयोजनम्। न खलु फल-भोगार्थमेताभिर्वनमध्ये आगतम्।

(ङ) दुर्ललिते! दुर्विनीते! के जनाः तव साहसिक्यभिक्षां साहसकर्म्मोपदेशम् अदुः दत्तवन्तः? ते तव कः मदः गर्व्वः? मदो-कसि मन्मालये। स्वातन्त्र्यं स्वेच्छाचारित्वम्। वनं वृन्दावनम्। गत्यनवस्थया अनियततया गत्या अयथारीत्या इत्यर्थः इतरजनीवत् नीचजातिवित् गात्रगर्व्वेण शरीरसौन्दर्य्यमदेनेति यावत्। फलानां कुसुमानां सुमञ्जुलानां मनोहराणां लतानां विटपानां पल्लवानाञ्च भङ्गम् आचरन्त्यः कुर्व्वत्यः। परितः समन्तात्। नयं नीतिं तिरस्कृत्य अनीत्या अवज्ञायेति भावः। अस्य अपराधस्येत्यर्थः।

(च) वयसा यौवनेन समं सह यथा यौवनं गतं तथा बुद्धिश्च गतेत्यर्थः।

जदो फलं अवराहे दण्डोत्ति ण आणासि (१)।

जरतीं। बम्हण डिम्ह ! छीर कण्ठोऽसि। तुमं किं आणेसि। विआरेहि को अवराहो। अवराहेज्जेव दण्डो ण क्खु सराहाम्र (छ) अम्हेसु (२)।

ललि। अये वडुअ ! तुम्ह वअस्सो अस्स वणस्स को (३)।

वृन्द। ललिदे ! अहिआरी (ज) अअं (४)।

ल ल। होइ एवमेदं। अहिओ अरी जइ ण होइ तदा कधं अम्ह पिअ-सहीए (झ) एदस्स वणस्स एदारिसी अवत्था (५)।

(१) आर्य्ये ! वयसा सर्वं तव बुद्धिश्च गता। यतः फलम् अपराधे दण्ड इति न जानासि।

(२) हे ब्राह्मण डिम्भ ! क्षीर-कण्ठोऽसि। त्वं किं जानासि ? विचारय कोऽपराधः। अपराधे एव दण्डो न खलु सराधासु अस्मासु।

(३) अये। वटुक। तव वयस्योऽस्य वनस्य कः।

(४) ललिते ! अधिकारी अयम्।

(५) भवति एवमेव। अधिकः अरिर्यदि न भवेत् तदा कथम् अस्मत्प्रिय-सख्या एतस्य वनस्य एतादृशी अवस्था।

---

(छ) ब्राह्मणडिम्भ ! ब्राह्मणबालक ! क्षीरकण्ठः दुग्धपोष्य इत्यर्थः। अपराधे दोषे, राधाम्बुध्ये अन्ने इति ध्वनिः सराधासु राधासहितासु।

(ज) अधिकारी स्वामी अधिकः अरिरिति ध्वनिः प्राकृतत्वात् दीर्घः, अ लोपाभावो बोद्धव्यः।

(झ) अस्मत्प्रियसख्याः राधाया इत्यर्थः।

कुन्द। ललिदे ! पण्डिच्चणं पआसेइ। होदु होदु अम्ह-वअस्सो एदस्स वणस्स अहिओ मरीज्जेव। एदं वणं तुम्ह पिअ-सहीए कधं जादं (१)।

ललि। उवभोओज्जेव पमाणं (अ)। अण्णधा कधं णीसङ्कं कुसुमाइं आहरेम्ह (२)।

जरती। सच्चंज्जेव भणिदं ललिदाए। मह णत्तिणी-एज्जेव एदं वणं। जाए एत्थ देवदा रूएण णिओइदा अप्पाणो परिअण रूआ वुन्दा (३)। (ट)

कृष्ण०। विहस्य। आर्य्ये ! वृन्दा खलु तव नप्तर्याः परि-जनरूपा।

जर। अरे कान्हड एत्थ को संदेहो। साज्जेव पुच्छी-अद (४)।

(१) ललिते ! पाण्डित्यं प्रकाशयसि। भवतु भवतु अस्मद्वयस्य एतस्य वनस्य अधिकः मरिष्येव। एतद्वनं तव प्रियसख्याः कथं जातम्।

(२) उपभोग एव प्रमाणम्। अन्यथा कथं निःशङ्कं कुसुमानि आहरामः।

(३) सत्यमेव भणितं ललितया। मम नप्त्र्या एव एतद्वनम्। यया अत्र देवता-रूपेण नियोजिता आत्मनः परिजनरूपा वृन्दा।

(४) अरे कृष्ण ! अत्र कः सन्देहः। सैव पृच्छ्यताम्।

---

(अ) उपभोगः भोगः भोगस्य स्वत्वप्रामाणिकत्वं लिखितं साक्षिणो भुक्तिरित्यादि वचनात्सिद्धमिति भावः।

(ट) नप्त्र्याः दौहित्र्या इत्यर्थः। यया महौहित्रा राधयेत्यर्थः अत्र वने देवतारूपेण अधिष्ठातृदेवीत्वेन रक्षकत्वेनेति भावः। परि-जनरूपा परिवारस्वरूपा वृन्दा तत्राणी काचि गोपी नियोजिता स्थापिता अतएवास्य वृन्दावनमिति व्यपदेश इति बोध्यम्।

कुसु । कर्णे लगित्वा । भो वअस्स ! सा क्खु एदाणंज्जेव पक्ख-वादिणी । सा पमाणत्तणेण ण पुच्छिदव्वा (१) ।

लव । कुसुमासव मा भेतव्यम् । ललिते ! मद्वयस्य-नाम-मुद्रैवात्र प्रमाणम् । या खलु प्रतिद्रुममेव (ठ) विराजते ।

ललि । जइ एवं तहवि अम्हे ण अपरज्झम्ह । सअ-लाओज्जेव लदाओ मह पिअ-सही-णाम-क्खरङ्किदा । तेण क्खु लदासु कोऽग्रहिआरो तुह वअस्सस्स । अम्हेहिं लवङ्ग-लदि-आणंज्जेव कुसुमाइं आहरीअन्ति (२) ।

जर । ललिदे ! णिम्मच्छणं दे जामि (ड) अहंज्जेव भणिदं । कण्हड ! कीस कलहाएसि अात्तणो अहिआरे चिट्ठन्तीहिं एदाहिं सङ्ग । मग्गसि जइ तदो मग्ग मएज्जेव दादव्वाणि लवङ्ग-कुसुमाइं । तुमं कस्स ण पिओ होइ (३) ।

---

(१) भो वयस्य ! सा खलु एतासामेव पक्षपातिनी । सा प्रामाण्यत्वे न प्रष्टव्या ।

(२) यदि एवं तथाऽपि वयं न अपराध्यामः । सकला एव लता मम प्रिय-सखी-नामाक्षराङ्किताः । तेन खलु लतासु कोऽधिकारस्तव वयस्यस्य । अस्माभिर्लवङ्ग-लतिकानामेव कुसुमानि आह्रियन्ते ।

(३) ललिते ! निर्मञ्छनं ते यामि । अहमेव भणितम् । कृष्ण !

---

(ठ) मद्वयस्येति मम वयस्यस्य कृष्णस्य नाममुद्रैव नामचिह्नमेव । सा मुद्रा प्रतिद्रुमं सर्वेषु द्रुमेषु ।

(ड) निर्मञ्छनं नीराजनम् आरात्रिकमितियावत् । यामि गच्छामि करोमीति यावत् ।

राधा । सस्पृहमात्मगतम् । कृष्णमुद्दिश्य संकेतेन ।

श्यामीकरोति भुवनं वपुषा दिगन्तान्
पूर्णेन्दुमण्डलमयीकुरुते मुखेन ।
वाचा सुधारसभृतो विदधाति कर्णान्
दृष्ट्या नभोऽम्बुजमयीकुरुते किमेतत् ॥ (ड)

जर ! कण्हह ! गेह्णि कुसुमाइं (१) । इति तासामञ्जलतः कुसुमान्यादाय कृष्णोपकण्ठं विकिरति ।

राधा । अम्बुलेन मुखमावृत्य किञ्चित् स्मित्वा । अज्जिए ! किं किदं । देव-पूअण-किदे अवचिदस्स कुसुमस्स इरिसी अवत्था किदा (२) ।

कृष्णः राधां निर्वर्ण्य स्वगतम् । अहो अतिरम्यत्वं वर्त्तते वसनावृतमुखायाः । यतः

किमर्थं कलहायसे आत्मनः अधिकारे तिष्ठन्तीभिरेताभिः सार्द्धम् । याचसे यदि तदा याचस्व मयैव दातव्यानि स्वकुसुमानि । त्वं कस्य न प्रियो भवसि ।

(१) कृष्ण ! गृहाण कुसुमानि ।

(२) आर्ये ! किं कृतम् ? देव-पूजन-कृते अवचितस्य कुसुमस्य ईदृशी अवस्था कृता ।

---

(ड) श्यामीति । वपुषा शरीरेण तत्कान्त्या इति भावः भुवनं जगत् श्यामीकरोति अश्यामं श्यामं करोति, मुखेन दिगन्तान् पूर्णेन्दुमण्डलमयीकुरुते पूर्णचन्द्रमण्डलव्याप्तान् करोतीत्यर्थः, वाचा कर्णान् सुधारसभृतः अमृतरसपूर्णान् विदधाति करोति तथा दृष्ट्या नेत्रयुगलेन नभः अन्तरीक्षम् अम्बुजमयीकुरुते पद्मराजितं करोति, एतत् वस्तु इति शेषः किम् ? अत्यन्तातिशयं कृतम् ।

राधा। अज्जे ! कहिं गन्तव्वं गोवीसरो ण अचिदव्वो (१)।

कुन्द। अज्जिए ! एत्थ वअस्सस्स दाणं वट्टदि। कुसुम-अचो-रिअं तुह सुहं दट्ठुअ समप्पिदं दाणं दाउअ (य) सव्वाओ गच्छन्तु (२)।

जर। अरे बह्मणवडुआ ! किं रे दाणं (३)।

कुन्द। वअस्स सुबल ! भणीअदु (४)।

सुब। आर्य्ये ! श्रूयताम्।

योग्यं मत्वा स्मरनरपतिः पश्य दत्वा प्रसूनं
वृन्दारण्ये नवकुलवधूवृन्दघट्टाधिपत्ये।
यत्नादस्थापयदयमिमं मद्वयस्यं यशस्यं
दत्वा शुल्कं व्रजत सुदृशो ! माऽस्तु शुष्को विवादः ॥(द)

(१) आर्य्ये ! कुत्र गन्तव्यं गोपीश्वरो न अर्चितव्यः।

(२) आर्य्ये ! अत्र वयस्यस्य दानं वर्त्तते। कुसुम-चौर्य्यं तव सुखं दृष्ट्वा समर्पितं दानं दत्त्वा सर्वा गच्छन्तु।

(३) अरे ब्राह्मणवटुक ! किं रे दानम् ?

(४) वयस्य सुबल ! भण्यताम्।

(य) दानमिति दानं शुल्कमित्यर्थः। कुसुमचौर्य्यं पुष्पापहारं तव सुखं सुख्यं प्रधानं कर्मत्यर्थः दृष्ट्वा समर्पितं दृढीकृतम् अवश्यदेयत्वेन निर्णीतमिति यावत्।

(द) योग्यमिति। पश्य अवलोकय, स्मरनरपतिः मदनराजः वृन्दारण्ये योग्यं स्वाभिमतमिति भावः प्रसूनं कुसुमं मत्वा दत्त्वा मम वयस्यं यशस्यं महाकीर्त्तिं लब्धमिति भावः यत्नात् अनुनयादिभिरर्थः नवानां कुलवधूनां कुलाङ्गनानां घट्टाधिपत्ये शुल्काध्यक्षतायाम् अस्था-पयत् नियुक्तवान्। हे सुदृशः ! सुनयनाः ! शुल्कं दत्त्वा व्रजत गच्छत। शुष्कः नीरसः विवादः वाक्कलह इत्यर्थः मा अस्तु। मन्दाक्रान्ता-वृत्तम्।

जर । होदु दे वअस्सो दाणी (ध) । अम्हाणं किं तेण । सुमर-णर-वइणो वसाओ ण अम्हे (१) ।

कुसु । होइ वुड्ढिआए तुह कहिं तस्स अहीणदा (२) ।

जर सक्रोधम् । अरे दाण-योग्ग-पअत्थो (न) जइ होइ तदो सङ्का करीअदि (३) ।

कृष्ण । प्रियवयस्य ! स्वयमस्योत्तरं दीयताम् ।

कृष्णः । सगाम्भीर्य्यम् । हन्त भोः ! श्रूयताम् ।

रत्नाद्यं वः कुवलयदृशामस्तु वा नास्तु वस्तु
प्रेङ्खालेऽस्मिन् भुजलतिकयोर्भागधेयो विधेयः ।
मर्य्यादेयं मम निगदिता किन्तु रत्नान्यमीमा-
न्यानीयन्ते पुरटपुटिकामन्तरा दर्श्यध्वम् ॥ (प)

---

(१) भवतु ते वयस्यो दानी । अस्माकं किन्तेन । स्मर-नरपतेर्वश्या न वयम् ।

(२) भवति वृद्धायास्तव कथं तस्य अधीनता ?

(३) अरे ! दान-योग्य-पदार्थो यदि भवति तदा शङ्का क्रियते ।

(ध) दानी शुल्काध्यक्षः ।

(न) दानयोग्यपदार्थः दानयोग्यपात्रमित्यर्थः कृष्ण इति भावः ।

(प) रत्नाद्यमिति । कुवलयदृशां नीलोत्पलनयनानां वः युष्माकं रत्नाद्यं रत्नप्रभृति वस्तु करदानयोग्यमिति भावः अस्तु वा नास्तु, अस्मिन् वृन्दावने भुजौ लते इव तयोः प्रेङ्खाले प्रगमने एतत् कुसुमचयनार्थमिति भावः भागधेयः करः भागधेयः करो बलिरित्यमरः विधेयः, इयं मम मर्य्यादा स्थितिः निगदिता निरूपिता कामेनेति शेषः । किन्तु पुरटपुटिकां पूर्णभाजनविशेषः ( पुटिका इं इतीति भाषा ) अन्तरा पूर्णपुटिकामध्ये दर्श्यं इमानि रत्नानीति

सख्यः । पूअोवकरण-पुडिआ इअं गोवीसरस्स (१) ।

कुसु । अरे मुक्खा ! अअंज्जेव गोवीसरो इमंज्जेव पूएध (२) ।

सख्यः । महाआलो गोवीसरो (३) । (क)

कुसु । अअं महाआलो किं ण होदि ? । जस्स रुइ-पड़लेहिं (ख) सव्वंज्जेव वणं तमाल-वण्णं किदं (४) ।

सख्यः । चन्दअसेहरोज्जेव (ग) अच्चिदव्वो (५) ।

कुसु । पेक्ख पेक्ख एसो चन्दअसेहरो ण होइ ? (६) ।

इति बर्हावतंसं दर्शयति ।

सख्यः । वाआल ! गोरीपतिं पूअइस्सम्ह (७) ।

(१) पूजोपकरण-पुटिका इयं गोपीश्वरस्य ।

(२) अरे मूर्खा ! अयमेव गोपीश्वर इममेव पूजयत ।

(३) महाकालो गोपीश्वरः ।

(४) अयं महाकालो न भवति ? यस्य रुचिपटलैः सर्वमेव वनं तमालवर्णं कृतम् ।

(५) चन्द्रकशेखर एव अर्चयितव्यः ।

(६) पश्य पश्य एष चन्द्रकशेखरो न भवति ? ।

(७) हे वाचाल ! गौरीपतिं पूजयिष्यामः ।

भावः रत्नानि अपि आनीयन्ते युष्माभिरिति शेषः दर्शयध्वं तानीति शेषः ।

(क) महाकालः अत्यन्तकृष्णवर्णः शम्भुरिति ध्वनिः ।

(ख) रुचिपटलैः प्रभापुञ्जैः ।

(ग) चन्द्रकशेखरः चन्द्रकः मयूरपिच्छं शेखरं शिरोभूषणं यस्य तादृशः शशिशेखर इति ध्वनिः ।

कुत्र । तुम्हे गोरीओ (अ) ण भवेध ? (१) ।

अर । अरे वडुआ ! एदाणं पइ तुह वअस्सोत्ति तुमं जाणीसि । चिट्ठ चिट्ठ गाम मज्झे (ब) तुह दंसणं ण लब्भि-स्सं (२) ।

सख्यः । अरे वाचाल । पसुवई पूइदव्वो (३) ।

कुत्र । हन्त भो ! एत्तिआओ धेणुओ जो पालेदि सो किं पसुवई ण होइ (४) ।

सख्यः । एव्वं भणाध जस्स एदे अम्हे पसुओ सो किं पसुवई ण होइ (५) ।

सुब । भवतु वयं सर्व एव पशवः । तेन भवन्मते अय-मेव पशुपतिस्तदाऽयमर्च्यताम् । किञ्च पुटिकाभिः कृत्वा किं नीयते तदर्पयित्वा सुखं गम्यतां किमनेन शुष्क-कलहेन ।

---

(१) यूयं गौर्यो न भवथ ? ।

(२) अरे वटुक ! एतासां पतिस्तव वयस्य इति त्वं जानासि । तिष्ठ तिष्ठ ग्राम-मध्ये तव दर्शनं न लप्स्ये ।

(३) अरे वाचाल ! पशुपतिः पूजितव्यः ।

(४) हन्त ! भो एतावतीर्धेनूः यः पालयति स किं पशुपतिर्न भवति ।

(५) एवं भणत । यस्य एता वयं पशवः । स किं पशुपतिर्न भवति ? ।

---

(अ) गौर्यः गौरवर्णाः ।

(ब) ग्राममध्ये इत्यादि यदि त्वां कदाचित् ग्राममध्ये प्राप्नुयां तदा अद्य वचनस्य प्रत्युत्तरं दास्यामि तव शासनेनेति भावः ।

राधि। भो सहीओ ! दंसेध (१)। सख्यस्तथा कुर्वन्ति।

कुब। विलोक्य। अअं मिअमओ एदं कुङ्कुमं एदं कालागुरुअं एदं चन्दनं अअं कप्पूरो अअं मोत्ताहारो सिप्प-कोसलेण फणिहारोव्व (र) किदो (२)।

जर। अरे फणिहारो ! इमं वडुअं दंसेध (३)।

कुब। अज्जिए ! कालिअ-मद्दण-सहअरस्स (ल) मे कुदो फणिहारदो भअं। ता एदाणं करं दाउण गच्छध (४)।

सख्यः। होदु। अम्हे देअपूअं कदुअ घरं गच्छम्ह। तदो तुह वअस्सो तत्थ जइ गच्छदि तदा जं सङ्कीअदि तंज्जेव दादव्वं (५)।

कुब। अरे दासीए धुट्टाओ ! अप्पणो अहिआर-पदेसे

---

(१) भोः सख्यो ! दर्शयत।

(२) अयं मृगमद एतत्कुङ्कुममेतत्कालागुरुकमेतच्चन्दनमयं कर्पूरः अयं मुक्ताहारः शिल्पकौशलेन फणिहार इव कृतः।

(३) अरे फणिहार ! इमं वटुकं दर्शयत।

(४) आर्ये ! कालीय-मर्दन-सहचरस्य मे कुतः फणिहारतो भयम्। तस्मादेतेषां करं दत्त्वा गच्छत।

(५) भवतु। वयं देव-पूजां कृत्वा गृहं यामः। ततस्तव वयस्य-स्तत्र यदि गच्छति तदा यच्छङ्क्यते तदेव दातव्यम्।

---

(र) मृगमदः कस्तूरी, शिल्पकौशलेन गुम्फननैपुण्येन फणिहारः नागहारः।

(ल) कालियेति कालियः यमुनावासी भुजङ्गविशेषः तस्य मर्दनः दमनः कृष्णः तस्य सहचरः सखा तस्य।

सुधिम तुम्ह घरं गदुम मग्गिस्सदि मे वअस्सो। ता चिट्ठध चिट्ठध (१)। इति पूजोपकरणान्याहर्तुमिच्छति।

ललि। अत्त गोवराअ-णन्दणेण देव-द्व्वाणि एदाणि एव्वं अपवित्ताणि कादुं ण जुज्जीअन्ति (२)।

राधा। ललिदे! इमिणा पफंसिदाणि एदाणि कधं देवस्स दादव्वाणि। ता मुञ्च मुञ्च। घरं गदुअ अण्णोवअरणं आणिअ देओ अच्चिदव्वो। ता अज्जिए एहि घरं गच्छम्ह (३)। इति गन्तुमिच्छति।

कृष्णः। पन्थानमाक्रम्य। अयि चतुरम्मन्ये! क्व यासि।

राधा। सावहित्थामर्षम् (व)। मूलं ज्जेव (श) दिण्णं किं तस्स दाणं मग्गसि (४)।

कृष्णः। सहासामर्षम्। किं मूलं दत्तमस्ति। मूलञ्चेतदेव श्रूयताम्।

(१) अरे दास्यो! छला! आत्मनःअधिकार-प्रदेशं त्यक्त्वा तव गृहं गत्वा याचिष्यति मे वयस्यः। तस्मात्तिष्ठत तिष्ठत।

(२) अत्र गोपराज-नन्दनेन देव-द्रव्याणि एतानि एवम् अपवित्राणि कर्तुं न युज्यते।

(३) ललिते! अनेन स्पृष्टानि एतानि कथं देवस्य दातव्यानि। तस्मात् मुञ्च मुञ्च। गृहं गत्वा अन्योपकरणमानीय देवोऽर्चितव्यः। तस्मात् आर्य्ये! एहि गृहं गच्छाम।

(४) मूलमेव दत्तं किन्तस्य दानं याचसे।

---

(व) सावहित्थामर्षमिति अवहित्था आकारगुप्तिः अमर्षः क्रोधः ताभ्यां सहितम्।

(श) मूलम् आनीतद्रव्यस्य आत्मेति ध्वनिः।

एतत् स्वर्णसरोरुहं तदुपरि श्रीनीलरत्नोत्पले
तत्पश्चात् कुरुविन्दकन्दलपुटे तत्राऽपि मुक्तावली।
सर्वं दृश्यत एव किन्तु निभृता या हेमकुम्भद्वयी
किं वान्यन्नयसेऽनयेति तदिदं बाले! विचार्य्यं मम॥(घ)

राधा। को तुमं विचारस्स। ण हि अविचारेण विचारो कादुं सक्कीअदि (१)।

जर। इयोर्मध्यमध्यास्य संस्कृतेन। अरे यशोदा-मात! मा तरलो भव लोभ-वता हृदयेन कथमाचरसि दुर्विनीतत्वम्। तत्त्वं ते कथयामि। यदि निराकुल-कुलवधूपद्रव-द्रवकथा क्रियते तदा न तेन ते (ङ) भद्रं भविष्यति।

(१) कस्त्वं विचारस्य। नहि अविचारेण विचारः कर्त्तुं शक्यते।

---

(घ) एतदिति। हे बाले! मुग्धे! एतत् स्वर्णसरोरुहं काञ्चनकमलं, तस्य उपरि श्रीनीलरत्ने नीलकान्तमणी इव उत्पले कुवलये, तत्पश्चात् तयोः उत्पलयोः पश्चात् अध इत्यर्थः कुरुविन्दस्य पुष्पतरुविशेषस्य यत् कन्दलम् अङ्कुरः तस्य पुटे रेखाभ्यां विभक्तत्वात् आवरणांशविशेषाविन्यर्थः तत्रापि तत्पश्चादपीति भावः मुक्तावली एतत् सर्वं मुखनेत्ररागादन्तात्मकं मूलं रत्नमिति भावः दृश्यते, किन्तु निभृता गुप्ता वसनाच्छादितत्वादिति भावः या हेमकुम्भद्वयी स्वर्णकलसयुगलं स्तनद्वयमिति भावः अनया हेमकुम्भद्वय्या किमन्यत् नयसे नीत्वा गच्छसि तदिदं मम विचार्य्यं द्रष्टव्यमित्यर्थः। अत्र भेदेऽप्यभेदरूपातिशयोक्तिरलङ्कारः। तदुक्तं दर्पणे, सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते। भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ। पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा तत इति। शार्दूलविक्रीडितं वृत्तम्।

(ङ) यशोदेति यशोदा माता यस्य तत्सम्बुद्धौ। तरलः चपलः। दुर्विनीतत्वम् अनाचारं परस्त्रीव्यवहारकारित्वमिति

ललिता । वक्रोक्तमुपक्षिप्य संकेतेन ।

कस्त्वं भो ! ननु माधवः कथमहो ! वैशाख आकारवान्
मुग्धे ! विद्धि जनार्द्दनोऽस्मि तदिदं ब्रूते वनावस्थितिः ।
मां गोवर्द्धनधारिणं न धरणौ को वेत्ति हुं वर्द्धनं
हिंसा हे वृषहन् ! बिभर्षि तदघद्वारैव गोवर्द्धनम् ॥ (ह)

प्रेम । अहो ! कौतूहलम् ।

भावः । निराकुलेति निराकुलाः अव्याकुलाः विश्वस्ता इत्यर्थः याः कुलवध्वः कुलाङ्गनाः तासाम् उपद्रवाय पीड़नाय धर्षणायेत्यर्थः द्रवकथा सरसा कथा क्रियते कथ्यते । तेन कथनेन ते तव ।

(ह) कस्त्वमिति । भोः कः त्वम् ? ननु भोः ! माधवः मा लक्ष्मीः तस्याः धवः पतिः कृष्ण इत्यर्थः अहमिति शेषः । अहो ! आश्चर्यं कथम् आकारवान् मूर्त्तिमान् वैशाखः तदाख्यमास इत्यर्थः वैशाखे माधवो राध इत्यमरः । हे मुग्धे ! मूढे ! विद्धि जानीहि जनार्द्दनः नारायणः जनान् अर्द्दयति पीड़यति तथोक्त इति ध्वनिः । वनावस्थितिः वनेऽवस्थानं वनचरत्वमित्यर्थः तत् इदं जनार्द्दन इति अभिधानमित्यर्थः ब्रूते कथयति वनचरा हि लोकान् पीड़यन्तीति भावः । धरणौ पृथिव्यां मां गोवर्द्धनधारिणं को जनः न वेत्ति न जानाति ? सर्व एव जानातीत्यर्थः । हुमिति स्वीकारार्थकमव्ययं गोवर्द्धनधारित्वमिति स्वीकरोमीत्यर्थः तथापि हे वृषहन् ! वृषासुरघातिन् ! गोघ्न इति ध्वनिः वर्द्धनं हिंसा वधु हिंसायामित्यस्य अनटन्तस्य रूपम् । तदघद्वारैव तस्य वृषस्य अघद्वारैव अनिष्टाचरणेनैव हननेनैवेत्यर्थः गोवर्द्धनं गोवर्द्धनाभिधानमित्यर्थं बिभर्षि धारयसि । अत्र श्लेषवक्रोक्तिरलङ्कारः । तदुक्तं दर्पणे, अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि । अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधेति । शार्दूलविक्रीड़ितं वृत्तम् ।

येयं नटैरप्यभिनीयमाना
लीला हरेरिति रसायनत्वम्।
सा यत् स्वकीयैः स्वयमीश्वरेणा-
भिनीयते तत् किमुदाहराम:॥ (च)

अपिच, सामाजिकानां हि रसो नटानां
नैवेति पन्थाः क्वतिषु प्रसिद्धः।
इत्थोभयत्वे रसवित्त्वमेषा-
मलौकिके वस्तुनि को विरोधः॥ (छ)

अपिच, अलौकिकाल्लौकिकमेव शौरे-
र्वृत्तं चमत्कारि तदेव लीला।

(च) येयमिति। या इयं हरेः कृष्णस्य लीला नटैः कुशीलवैः अभिनीयमानापि रसायनत्वं निरतिशयानन्दप्रदत्वम् एति प्राप्नोति निरतिशयानन्ददायिनी भवतीत्यर्थः सा ईश्वरेण हरिणा स्वकीयैरनुचरैरित्यर्थः सह स्वयं यत् अभिनीयते, तत् किम् उदाहराम: कथयाम: तत्कथा किं वक्तव्येति भावः। उपजातिवृत्तम्। अर्थापत्तिरलङ्कारः। तदुक्तं दर्पणे,दण्डापूपिकयान्यायादर्थागमोऽर्थापत्तिरिष्यते इति।

(छ) सामाजिकानामिति। रसः काव्यनाट्यश्रवणदर्शनजः आनन्दविशेषः सामाजिकानां सभ्यानां हि निश्चितं भवति, नटानाम् अभिनेतृणां नैव रसास्वादो नैव भवतीत्यर्थः इति पन्थाः रीतिः कृतिषु विद्वत्सु प्रसिद्धः प्रचलितः। इत्थं किन्तु अलौकिके वस्तुनि विषये ईश्वरचरिते इति भावः एषां नटानाम् उभयत्वे नटसामाजिकोभयधर्मवत्त्वे इत्यर्थः यत् रसवित्त्वं तत्र को विरोधः? नैव विरोध इत्यर्थः। उपजातिवृत्तम्।

(ज) अलौकिकादिति। अलौकिकात् लोकातीतात् हरेः कृष्णात् उद्भूतमिति शेषः यत् लौकिकं चमत्कारि इत्तं चरितं तदेव

ह्याकर्षकत्वं हि जगज्जनाना-
मलौकिकत्वस्य स कोऽपि हेतुः ॥ (ख)

इति सविस्मयमालोकयति ।

कुन्द । अइ कुडिले दुव्विणीदे लज्जिदे ! मह वअस्सो दुट्ठाआरो किदो । ता चिट्ठ चिट्ठ (१) ।

सूत्र । सपरिहासामर्षम् । हन्त भोः ! सत्यमेतत् ।

वक्त्रं वो द्विजराजहिंसि मदिरालोले दृशौ रोचिषा
मूर्त्तिः काञ्चनहारिणी न विरमो गुर्व्वङ्गनासङ्गतः ।
सङ्गी पञ्चम एव पञ्चविशिखः शुद्धिस्तथाऽपीह वो
यन्नामाप्यखिलाघनाशि स परं दुष्टोऽस्मदीयः सखा ॥ (ग)

---

(१) अयि ! कुटिले ! दुर्विनीते ! लज्जिते ! मम वयस्यो दुष्टाकारः कृतः । तस्मात् तिष्ठ तिष्ठ !

लोला । अलौकिकत्वस्य जगज्जनानां यत् आकर्षकत्वं रञ्जकत्वं हि निश्चितम् अस्तीति शेषः सः कोऽपि हेतुः अचिन्त्यकारणमित्यर्थः । उपजातिवृत्तम् ।

(ग) वक्त्रमिति । वः युष्माकं वक्त्रं वदनं द्विजराजः चन्द्रः द्विजराजः शशधरो नक्षत्रेशः क्षपाकर इत्यमरः । तं हिनस्तीति तथोक्तं चन्द्रादपि मनोहरमित्यर्थः दृशौ नेत्रे मदिरया आसवपानेन लोले चपले, मूर्त्तिः रोचिषा प्रभया काञ्चनहारिणी सुवर्णचोरिका काञ्चनादप्युज्ज्वलतरेत्यर्थः, गुरूणां महतीनाम् उत्तमानामित्यर्थः अङ्गनानां कामिनीनां सङ्गतः सुखात् न विरमः न अभावः प्रशस्ताङ्गनासुखवन्तो यूयमिति भावः, एषः पञ्चमः स्वरविशेषः निषादर्षभगान्धारषड्ज-मध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वरा इत्यमरः मधुरभाषिण्यो यूयं येन मनसश्च चित्तविक्षेपः स्यादिति भावः । पञ्च-विशिखः पञ्चशरः काम इत्यर्थः अस्तीति शेषः सखाभाव यूयमिति

तद्वयस्य! चट्टपाला हि विना धृष्टता-प्रकटनेन स्वार्थ-कुशला न भवन्ति। तदात्मनः प्रकटय शौटीर्य्यम्। (घ)

कृष्णः। अन्तर्वर्त्तिनी भूत्वा राधां पृष्ठतः कृत्वा स्थितवतीं जरतीं करेण निक्षिप्य बलात् राधापटालमपहरणमभिनयति।

जरती। बलान्मोचयित्वा राधामन्तर्धापयन्ती (ङ) स्वयमप्यन्तर्दधाति।

नित्या। स्वरूपेण स्थिता स्मयति।

मैत्री। देवि! किन्विदं कुदो अअं अअस्मादो णिचाणन्दो। कहिं गदा सा जरदी (१)।

प्रेम। अयं खलु योगमायाप्रभावः। स्वयमभिन्नाविश्य जरती भूत्वा सम्प्रति रसः सावशेष (च) एव सुरसो भवतीति यथासमयमन्तर्हिताऽसौ। ततः स्वरूपेणावतिष्ठतेऽयं नित्यानन्दः।

(१) देवि! किन्विदं कुतोऽयमकस्मान्नित्यानन्दः। कुत्र गता सा जरती।

भावः, शुद्धिः पवित्रता युष्माकमिति शेषः न तु वयस्येन यूयं धर्षणेन अपवित्राः कृता इति भावः। तथापि इह जगति यस्य नामापि अखिलानां सर्वेषाम् अघानां पापानां नाशि नाशकं सः अस्मदीयः सखा कृष्णः वः युष्माकं परम् अत्यर्थं दुष्टः दुराचारः संवृत्त इति शेषः किमाश्चर्य्यमिति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

(घ) चट्टपालाः कराद्दायिन इत्यर्थः। धृष्टताप्रकटनेन धूर्त्ताचरणेन शौटीर्य्यं पराक्रमम्।

(ङ) अन्तर्धापयन्ती अन्तर्हितां कुर्वती।

(च) अस्मिन् नित्यानन्दे। सावशेषः अपूर्णः पूर्णत्वे तृप्तिलाभेन आकाङ्क्षाविरहात् रसाभावः, अपूर्णत्वे तृप्तिलाभाभावेन आकाङ्क्षासत्त्वात् रसस्य सुरसत्वमिति भावः।

यतः, स्वतो बलीयः सहजो हि भावः
स कृत्रिमं भावमधः करोति ।
अत्यातपाभ्यां जनितो जलानां
नैवोष्णभावश्चिरकालवर्त्ती ॥ (छ)

तदिदानीमेतावतैव स्थितं नाट्यम् । भवति हि ईश्वरलीलेवेयं न खलु नटरीतिः पश्चादेतोऽद्वैत एव ।

मैत्री । ण आणे दाणिं भअवं कोदिसो होइ (१) ।

नेपथ्ये । भो भोः सन्न्यासी सन्न्यासी ।

प्रेम । अहो ! किमियमाकस्मिकी प्रतिकूलवाङ् निरूपयामि (ज) इति निरूप्य । अये ! भगवद्धाटीं कश्चित्सन्न्यासी प्रविशति तमालोक्य कश्चिदाक्रोशति (झ) तदेहि सहैव निष्क्रमाव । इति निष्क्रान्तौ । निष्क्रान्ताः सर्वे ॥ * ॥

दानविनोदो नाम तृतीयोऽङ्कः ॥

---

(१) न जाने इदानीं भगवान् कीदृशो भवति ।

---

(छ) स्वत इति । यः सहजोहि स्वाभाविक एव भावः, स स्वतः आत्मनैव बली प्रबलः सन् कृत्रिमम् अस्वाभाविकं भावं धर्मम् अधः करोति निराकरोति शीघ्रमेव त्यजतीत्यर्थः । तथाहि अत्यातपाभ्याम् अनलसौरकिरणाभ्यां जनितः उत्पादितः उष्णभावः नैव चिरकालवर्त्ती न खलु चिरं तिष्ठतीत्यर्थः । अत नित्यानन्दस्य योगमायाविर्भावेण यः कृत्रिमो भावः संजातः, तस्य तदा अन्तर्भावेन तिरोहितत्वात् सहजो भावः समभवदिति भावार्थः । उपजातिवृत्तम् ।

(ज) प्रतिकूलवाक् मार्हस्यविपरीता वाणीत्यर्थः ।

(झ) भगवद्धाटीं गौराङ्गभवनं देवमन्दिरं वा । आक्रोशति सक्रोधं शीति स्वैरं वदतीत्यर्थः ।

# चतुर्थोऽङ्कः ।

ततः प्रविशति । आचार्य्यरत्नपत्न्यानुगम्यमाना भगवती शची ।

शची । बहिणिए ! सण्णासिणं पदि कधं सिरिविस्सम्भरस्स एदारिसो आदरो । विजादीअ-वासणो (क) क्खु सण्णासी (१) ।

भगिनी । आदरो कधं जाणिदो (२) ।

शची । जदो तत्थ दिअहे केसवभारदीणामस्स कस्सवि सण्णासिणो भिक्खत्थं (ख) सद्धालुओ हुविअ मं उत्तवं । सअञ्च तस्सिं गुरुई-भत्ती अणुराओवि पअडिदो (३) ।

भगिनी । सोवि भत्तो हुविस्सदिव्व (४) ।

---

(१) हे भगिनि ! सन्न्यासिनं प्रति कथं श्रीविश्वम्भरदेवस्य एतादृश आदरः । विजातीयवासनः खलु सन्न्यासी ।

(२) आदरः कथं ज्ञातः ।

(३) यदा तत्र दिवसे केशवभारतीनाम्नः कस्यापि सन्न्यासिनो भिक्षार्थं श्रद्धालुर्भूत्वा मामुक्तवान् । स्वयञ्च तस्मिन् गुरुतर-भक्तिरनुरागोऽपि प्रकटितः ।

(४) सोऽपि भक्तो भविष्यत्येव ।

---

(क) श्रीविश्वम्भरस्य चैतन्यस्य । विजातीयेति विजातीया विपरीता स्वस्वरूपविभिन्ना इत्यर्थः वासना अभिलाषः यस्य तादृशः ।

(ख) भिक्षार्थं भिक्षादानार्थम् ।

शची। कम्पेदि मे हिअअं सच्चासी-णाम मेत्तेण। अस्स अग्गजेणाहं पढाइदा। इमं सन्दब्भं (ग) तस्स ठाणे पुच्छिस्सं (१)।

भगिनी। जुत्तं णेदं (२)।

शची। ता जाणेहि। कुदो सो मह हिअआणन्दण चन्दणदुमो (३)।

भगिनी। पुरोऽवलोक्य। देवि! पेक्ख पेक्ख। अअं दे पुण्णिमचन्दो विअ पूव्वदिसाए उग्गच्छदि णन्दणो (४)

शची। मस्तृहमालोकयति। ततः प्रविशति भगवान् विश्वम्भर

विश्वम्भरः। अञ्जलिं बद्ध्वा। अम्ब! प्रणमामि।

शची। चिरं जीव। मूर्द्धानमाघ्राय। ताद! इअं आअरिअ-रअण-कलत्तं इमं प्रणम (५)।

देवः। तथा करोति। सा ससाध्वसं सङ्कुचति।

शची ताद! एक्कं पुच्छिस्सं (६)।

(१) कम्पते मे हृदयं सन्न्यासि-नाम-मात्रेण। अस्य अग्रजेनाहं पाठिता। इमं सन्दर्भं तस्य स्थाने प्रक्ष्ये।

(२) युक्त मिदम्।

(३) तज्जानीहि। कुतः स मम हृदयानन्दनचन्दनद्रुमः।

(४) देवि! पश्य पश्य। अयं ते पूर्णिमा-चन्द्र इव पूर्वदिशाया उद्गच्छति नन्दनः।

(५) तात! इयम् आचार्य्य-रत्न-कलत्रम् एनाम् प्रणम।

(६) तात! एकं प्रक्ष्ये।

---

(ग) अस्येति अस्य विश्वम्भरस्य अग्रजेन ज्येष्ठेन विश्वरूपेणेत्यर्थः। पाठिता शिक्षिता। तस्य विश्वम्भरस्य सन्दर्भं विषयम्।

देवः। आज्ञापय।

शची। पुत्तम ! सम्रासिणं पदि कधं दे एद्दारिसो आअरो। जं तत्थ दिअहे केसवभारदीं पदि तादिसी भत्ती किदा तुमए (१)।

देवः। अम्ब ! ते खलु परमभागवता भवन्ति।

शची। तत्तं कधेहि। सम्रासो वा कादव्वो तुमए (२)

देवः। विहस्य। अम्ब ! कुतोऽयं ते भ्रमः। इदमपि भवति किम् ?।

शची। वच्छ ! एदेणज्जेव दे अग्गजेण (घ) दिण्णं पुत्थअं मए पाअ-समए चुल्लीमज्झे दाऊण जालिदं (३) !

देवः। किं पुस्तकं कथं वा प्रदीपितम्।

शची। विस्सरूपेण मे कधिदं "अम्ब ! विस्सम्भरो जदा विण्णो भवति तदा तस्स एतत् पुस्तकं देयमिति"। मए दाव दावज्जेव तं रक्खिदं जाव सो पव्वइदो ण भूदो। पव्वइदे तस्स अव्वंपि (ङ) एदं पुत्थअं लम्भिअ पव्वइदो हुविस्सदित्ति तुह सङ्काए जालिदं (४)।

---

(१) पुत्र ! सन्न्यासिनं प्रति कथं ते एतादृश आदरः। यत्तस्मिन्दिवसे केशवभारतीं प्रति तादृशी भक्तिः कृता त्वया।

(२) तत्त्वं कथय। सन्न्यासो वा कर्त्तव्यस्त्वया।

(३) वत्स ! एतेनैव ते अग्रजेन दत्तं पुस्तकं मया पाक-समये चुल्लीमध्ये दत्त्वा ज्वालितम्।

(४) विश्वरूपेण मे कथितम्। मया तावत्तावदेव तत् रक्षितं यावत्

---

(घ) एतेन आरब्धेनेति पाठः। अग्रजेन विश्वरूपेण।

(ङ) तावदेव तावत् कालपर्यन्तमेव। अर्बं विश्वम्भरः।

देवः। सवमनुतप्य विहस्य च। अम्ब! यद्यपि संविद्रूपैव भवती तथापि पुत्रवात्सल्ये नेदमज्ञानविलसितमनुमोदितम्। (च)

शची। ताद! एसो अवराहो मम ण गहिदव्वो (१)।

देवः। कोऽपराधो जनन्याः पुत्रेषु। किन्तु ममापराधो यदि भवति तदा क्षन्तव्य एवासौ मातृचरणैरिति प्रसादः क्रियताम्।

शची। वच्छ! ण कहिंपि दे अवराहो गहिदव्वो सो तुह चत्तिज्जेव (२)।

देव। अम्ब! दिनानि कतिपयानि कुत्रापि मम गन्तव्यमस्ति त्वया मनसि खेदो न कार्य्यः।

शची। कहं गन्तव्वं (३)।

देवः। अम्ब! येन भवत्याः सर्वेषाञ्च बन्धूनां सदा सुखमेव भूयते तदनुसन्धानं कर्त्तुम्।

शची। तं क्खु तुमं ज्जेव (४)

प्रव्रजितो न भूतः। प्रव्रजिते तत्र अयमपि एतत् सकं बन्धुः प्रव्रजितो भविष्यति इति तव शङ्कया व्याकुलितम्।

(१) तात! एषोऽपराधो मम न ग्रहीतव्यः।

(२) वत्स! न कदापि ते अपराधः ग्रहीतव्यः स तव नाश्यैव।

(३) कथं गन्तव्यम्।

(४) तत् खलु त्वमेव।

---

(च) संविद्रूपा चित्स्वरूपा ज्ञानरूपिणीत्यर्थः। अनुमोदितं प्रकटितम्। तत्र पुत्रवात्सल्येऽपीत्यर्थः।

देवः । यद्यप्येवमेव तथाऽपि येन ममापि शोभाऽतिशयो भवति तदर्थं यतिष्यते ।

शची । वत्स ! जधा मह दुःखं ण होइ तधा कर-णिज्जं (१) ।

देवः । अम्ब !

श्रीकृष्णः परिपालकस्तव पिता माता च पुत्रोऽपि च
भ्रातिश्च द्रविणञ्च नित्यसुखदो बन्धुश्च देवोऽपि च ।
सङ्गः शाश्वत एव यस्य तमनुस्मृत्यानिशं चेतसा
सम्पन्नाऽसि तवाधुना सुखमयं जानीहि दिक्चक्रकम् । (ख)

शची । वत्स ! तुमं ज्जेव सव्वं । तुह पसादादो मह दुःखं णत्थि । किन्तु जधा सन्ततं तुमं पेक्खामि तधज्जेव कादव्वं (२) ।

(१) वत्स ! यथा मम दुःखं न भवति तथा कर्त्तव्यम् ।

(२) वत्स ! त्वमेव सर्वम् । तव प्रसादतो मम दुःखं नास्ति । किन्तु यथा सततं त्वां प्रेक्षामि तथैव कर्त्तव्यम् ।

---

(ख) श्रीकृष्ण इति । श्रीकृष्णः तव परिपालकः रक्षकः पिता, माता, पुत्रः भ्रातिः द्रविणं धनं नित्यसुखदः सततसुखदायी बन्धुः देवः उपास्यश्च । अत्र चकारबहुत्वम् अपि इत्यत्र छन्दःपूरणार्थं बोध्यम् । यस्य तस्य सङ्गः आश्रयः शाश्वतः अक्षयः यो हि सकिर रक्षकः, अनिशं निरन्तरं चेतसा तं श्रीकृष्णम् अनुस्मृत्य सम्पन्ना सर्वश्रियाधिकारिणी असि । अधुना साम्प्रतं दिक्चक्रकं तव सुखमयं सुखव्याप्तं जानीहि सर्वत्र एव तव सुखं भविष्यतीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

देवः । कृष्ण एव सततं त्वया द्रष्टव्यः । स एव तव सर्वदुःखध्वंसी भविष्यति ।

शची । तहत्थु । तां तुमं ज्जेव मम कण्हो । ता एत्थं हि मज्झण्हो जादो । तुमंपि सिणाण पूअणादिकं कुणह । अहम्मि पाअत्थं जामि । बहिणिए ! तुमम्मि घरं गच्छ । तहावि भअवदो पाअसेआ-समओ जादो (२) । इति सर्वे निष्क्रामन्ति ।

ततः प्रविशति अद्वैतः ।

अद्वैतः । मूलावेश-विवश-निखिलेन्द्रियवृत्तिर्भगवदा-वेशविसंस्थुलस्य समानमेव भावमादधाति । यतः खलु यावत्तस्मिन् दिवसे भगवदावेशेन यन्मया नर्त्तितं तज्जन-मुखादेव साम्प्रतं श्रुत्वा प्रतीयते सन्दिह्यते च । तेनाख्या-तप्रभावोऽयं भगवान् विश्वम्भरः । वस्तुतस्तु कोटि-कोटि-जगदण्ड-घट-घटन-विघटन-नाटक-परिपाटी-पाटवस्य निजचरित-ललित-कीर्त्ति-सुधा-धावित-जगज्जन-हृदया-वट-घटमान-तमःकाटवस्य भगवतस्तस्यैव लीलायितं खलु

(२) तथास्तु । त्वमेव मम कृष्णः । तदाद्युचित मध्याह्नो जातः । त्वमपि स्नानपूजनादिकं कुरु । अहमपि पाकार्थं यामि । भगिनि ! त्वमपि गृहं गच्छ । तथापि भगवतः पाक-सेवा-समयो जातः ।

(क) मूलावेशेति । मूलस्य देवयोर्निर्विशेषस्य आवेशेन शरीरान्तः-प्रवेशेन विवशा पराधीना निखिला समस्ता इन्द्रियवृत्तिर्यस्य तथाविधो जनः । भगवतः श्रीकृष्णस्य आवेशे विसंस्थुलः विवशेन्द्रियवृत्तिरिति भावः । भावम् अवस्थाम् आदधाति प्रकटयति । जनमुखादेव लोकानां

**प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यैतिह्यादिप्रमाणनिवहैरपि न प्रमातुं शक्यते विना तस्यैवानुग्रहजन्यज्ञानविशेषम्। तेन तदानीन्तनमलौकिक-चमत्कार-कारणमस्खलितमपि नटन-लीलायितं नास्माकमनुभवगोचरस्तद्व्यवसितम्।।(ज)**

**ते न यास्यन्ति केऽपि मोहं विवदिष्यन्ते च तैः समं केचित्।**
**केवल सन्दर्भविदो रहस्यमिदमित्यवैष्यन्ति॥ (झ)**

मुखादेव ननु स्वयं किमपि स्मर्यते इति भावः। भूतावेशे यथा तदावेशदृष्टान्तः कोऽपि न स्मर्यते तथा भगवदावेशेऽपि मया यद्यदाचरितं तत् सर्वं साम्प्रतं न किमपि स्मृतिपथमायातीति भावः। अव्याहतप्रभावः अबाधितसामर्थ्यः। कोटीति। कोटिकोटिजगदण्डानां अनन्तब्रह्माण्डानां घटनाभिः घटनाविवर्गो विघटनानि संहाराः त एव नाटकपरिपाट्यः नाटकव्यापाराः तासु पाटवं नैपुण्यं यस्य तथाभूतस्य निजेति। निजं स्वीयं चरितमेव या ललिता मनोहारिणी कीर्त्तिः सैव सुधाचूर्णं तया धावितं क्षालितं श्वेतीकृतमिति भावः जगज्जनानां हृदयाङ्गनेषु चित्ताभ्यन्तरेषु घटमानस्य तिष्ठतः तमसः तिमिरस्य मोहस्येत्यर्थः कटत्वं कटुत्वं मालिन्यं येन तथाविधस्य। लीलायितम्। प्रत्यक्षेति प्रत्यक्षं प्रमाणं दर्शनादीन्द्रियम् अनुमानं व्याप्तिसङ्कारेण लिङ्गात् लिङ्गिनो ज्ञापकरूपम् उपमानं गौरिव गवय इत्याद्युपमया ज्ञानं शब्दः श्रुतिवाक्यम् अर्थापत्तिः कैमुतिकन्यायः ऐतिह्यं प्रसिद्धिः एवमादिभिः प्रमाणसमूहैरित्यर्थः। प्रमातुम् अभ्रान्तत्वेन निश्चेतुम्। तदानीन्तनं तात्कालिकम्। अस्खलितम् अस्खलितम्। नटनलीलायितं नाट्यलीलाचरितं यदिति शेषः। तत् व्यवसितं व्यापारः अस्माकम् अनुभवगोचरः स्मरणविषयः न भवतीति शेषः।

(झ) ते इति। ते केऽपि जनाः मोहं न यास्यन्ति न प्राप्स्यन्ति, तैश्च समं सह केचित् विवदिष्यन्ते विवादं करिष्यन्ति,

ऊर्ध्वमवलोक्य। अहो! चरमाचल-शिखर-चुम्बी लम्बमानो-ऽयं भगवान् मरीचिमाली (ञ। तथाहि,

नाथैव मे त्वमसि किन्त्वखिलग्रहाणां
विश्रामपात्रमिति तत्पतिनाऽभिशप्ता।
तत्प्रत्ययाय परितप्तमयो दधाति
सन्ध्यार्कबिम्बकपटादिव वारुणी दिक्॥ (ट)

केचन सन्दर्भविदः प्रस्तुतविषयज्ञाः इदं रहस्यम् अतिगूढम् ऐशिक-विलसितमिति भावः इति अवैष्यन्ति ज्ञास्यन्ति।

(ञ) चरमाचलेति चरमाचलस्य अस्तगिरेः शिखरं शृङ्गं चुम्बतीति स्पृशतीति तथोक्तः। लम्बमानः आकाशात् अधःपतन्। मरीचिमाली सूर्यः।

(ट) नाथेति। वारुणी वरुणपालिता पश्चिमेत्यर्थः दिक् त्वं नाथैव वारुणीति संज्ञयैव न तु तत्त्वत इति भावः। मे मम असि भवसि, किन्तु त्वम् अखिलानां सर्वेषां ग्रहाणाम् अन्तरीक्षचराणां विश्रामपात्रं विश्रामस्थानं सर्वे एव ग्रहाः पश्चिमायां दिशि अस्तं यान्तीति भावः। इति हेतोः तत्पतिना तेन पतिना वरुणेनेत्यर्थः अभिशप्ता दूषिता इत्यर्थः सती तस्य वरुणस्य प्रत्ययाय नाहमन्यासक्ता इति विश्वासाय सन्ध्यायां यत् अर्कबिम्बं सूर्यबिम्बं रक्तवर्णमिति भावः तस्य कपटात् व्याजात् परितप्तं प्रज्वलितम् अयः लौहधातुं दधातीव यदि असती तदा मे हस्तः भस्मीभवतु, यदि नाहं तथा तदाहं प्रकृतिस्था भवामीति सतीत्वपरीक्षार्थं धारयतीव अत्र उत्प्रेक्षा-नुप्राणितापह्नुतिरलङ्कारः समासोक्तिश्च अनयोरेकाश्रयानुप्रवेशः सङ्करः। तदुक्तं प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति। समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति च। सङ्करविवरणं उक्तम्।

अथवा, सायाह्नघर्मपुरुलुप्तधियः प्रतीच्याः

श्रोणाम्बरावससि समुच्छ्रसिते नितम्बात्।

काञ्चीकलापकुरुविन्दमणीन्द्ररूपी

कालक्रमाद्दिनपतिः पतयालुरासीत्॥ (ठ)

तदिदानीं विगतवर्त्मपरिश्रमः (ड) सन्ध्यामुपास्य दर्शनीयतमो द्रष्टव्यः। स खलु भगवान् विश्वम्भरः। इति तथा कर्तुमिच्छति। नेपथ्ये। हन्त भो! निजपुरं गत्वा समागतप्रायोऽहमिति कृत्वा गतोऽद्वैतः कथमद्यापि नाऽऽयातः।

अद्वै। श्रुतिमभिनीय। अहो! मद्विलम्बमालोक्य स्वयमेव देवी मामाक्षिपति (ढ) तदहं सत्वरमेव गच्छामि। इति परिक्रामति श्रीवासः।

प्रविश्यापटीक्षेपेण।

श्रीवासः। भो अद्वैत तदेव आज्ञापयति भगवान्। अस्मितः श्रीवासस्त्वहं गच्छन्नस्मि भवताऽपि तत्रैव गन्तव्यमिति।

(ठ) सायेति। सायाह्नस्य सन्ध्याकालस्य नायकस्येति भावः घर्मेण यत् पुरु तेन लुप्ता विनष्टा धीर्यस्याः तथाभूतायाः प्रतीच्याः पश्चिमाया दिशः श्रोणाम्बं रक्तवर्णमेघपटलमेव वासः वसनं तस्मिन् नितम्बात् समुच्छ्रसिते स्खलिते सति कालक्रमात् समयक्रमेण काञ्चीकलापे मेखलायां यः कुरुविन्दाख्यः मणीन्द्रः रत्नश्रेष्ठः तद्रूपी तत् स्वरूपः तद्भ्राजेनेति भावः दिनपतिः सूर्यः पतयालुः पतितः आसीत्। अत्र रूपकसमासोक्त्यप्रस्तुतीनां सङ्करः। वसन्ततिलकं वृत्तम्।

(ड) विगतवर्त्मपरिश्रमः अध्वक्लान्तिरहित इत्यर्थः।

(ढ) आक्षिपति आहूयतीति।

अद्वै । यथाऽऽज्ञापयति देवः । इति तेन सह परिक्राम्य पुरोऽवलोक्य । इदमिदं श्रीवासपुरं यावत् प्रविशामि । इति प्रवेशं नाटयित्वा प्राचीं दिशमवलोक्य । अहो ! रम्यम् ।

आह्लादयन्नक्षि जगज्जनानां
प्रेमामृतस्यन्दसुशीमपादः ।
उल्लासयन् कौमुदमुज्जिहीते
चन्द्रश्च विश्वम्भरचन्द्रमाश्च ॥ (च)

ततः प्रविशति श्रीवासादिभिः समुपगम्यमानो भगवान् विश्वम्भरः ।

विश्वम्भरः । प्रत्युत्थाय । स्वागतं भोः ! स्वागतम् ?

अद्वै । श्रीमुखचन्द्रदर्शनेन ।

देवः । सादरमभिवन्द्याऽऽलिङ्ग्य च । भगवन्नत्रोपविश्यताम् ।

अद्वै । यथाऽऽज्ञापयसि । इति सर्वे सुखोपवेशं नाटयन्ति ।

भगवान् । अद्वैतं प्रति । सर्वे वयं भुक्तवन्तः पीतवन्तश्च केवलमध्वपरिश्रान्ताः क्षुत्परिश्रान्ताश्च भवन्तस्तदलं विलम्बेन ।

(च) आह्लादयन्निति । जगज्जनानां जगन्निवासिनां लोकानाम् अक्षि नयनम् आह्लादयन् तथा कौमुदं कुमुदवृन्दं कौ पृथिव्यां मुदं हर्षञ्च उल्लासयन् विकासयन् यश्च यश्च अयं प्रेम एव अमृतं तस्य स्यन्देन वर्षणेन सुशीमः शीतलः पादः किरणः चरणश्च यस्य तथाभूतः चन्द्रश्च विश्वम्भरचन्द्रमाश्च गौराङ्गदेवश्च उज्जिहीते उदेति । इन्द्रवज्राहत्तम् । अत्रार्थश्लेषालङ्कारः तदुक्तं दर्पणे । शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनमिति । द्वितीयपादे तु शब्दश्लेषः तदुक्तं दर्पणे । श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते इति तदनयोः संसृष्टिरिति बोध्यम् ।

श्रीवा । आतिथेयोऽस्मि । आतिथ्येन समुपचर्य्यन्तामेते (त) भवता ।

सर्वे । अलमनया चिन्तया वयमपि भवन्त इव समाप्तसर्वाङ्गिका एव ।

भगवान् । सप्रमोदम् । तदिदानीं हिमकर-कर-कलधौत-जल-धौते श्रीवास-वासाङ्गण-परिसरे भगवत्सङ्कीर्त्तनमङ्गलमङ्गीकुर्वन्तु (थ) भवन्तः ।

सर्वे । सप्रमोदम् । भगवन्नुत्थीयतां स्वयमपि ।

भगवान् । एषोऽहं गच्छामि । इति सङ्कीर्त्तनस्थलीं प्रति । सर्वे निष्क्रान्ताः ।

ततः प्रविशति गङ्गादासः ।

गङ्गा । अहो अद्वैतदेवः शान्तिपुरतः समागतोऽस्तीति श्रुतमस्ति न जाने किं भगवद्विश्वम्भरालये समुत्तीर्णः श्रीवासालये वा तदस्य तत्त्वमवधारयामि । इति कतिचित् पदान्यादधाति ।

नेपथ्ये । सङ्कीर्त्तनकोलाहलः ।

गङ्गा । आकर्ण्य । अहो ! श्रीवासाऽऽलयं समया समयाऽऽसादित-सकल-भक्तजन-प्रमोदी प्रेमोदीर्ण-सङ्कीर्त्तन-

(त) आतिथेयः अतिथिसेवाकुशलः । आतिथ्येन अतिथिसेवया । समुपचर्य्यन्तां सेव्यन्ताम् ।

(थ) हिमकरेति हिमकरकरः चन्द्रकिरणः स एव कलधौतजलं रजतजलं कलधौतं रौप्यहेम्नोरिति शेषः । तेन धौते क्षालिते चन्द्रकिरणभासिते इत्यर्थः श्रीवासस्य अङ्गणपरिसरे अजिरप्रदेशे । अङ्गीकुर्वन्तु अनुतिष्ठन्तु ।

कोलाहलोऽयं (द) मया श्रूयते। तदित एवाद्वैतेनापि भवितव्यं तदिह स्थित्वैव निभालयामि। इति निभाल्य। अहो सर्व एव कीर्त्तयन्तो भगवन्तं विश्वम्भरं नर्त्तयन्ति नृत्यन्ति च। तदेवं मन्ये।

दुर्वारदैत्यघटया घटिते पटीयो-
भारे स्वयम्भगवताऽपहृतेऽपि भूमेः।
तस्यावसादमधुना विधुनोति देवो
भक्तैर्नटन्नटननिष्ठुरपादघातैः॥ (ध)

पुनर्निभाल्य। अहो!

आनन्दः किमु मूर्त्त एष? परमः प्रेमैव किं देहवान्?
श्रद्धा मूर्त्तिमती? दयैव किमु वा भूमौ स्वरूपिण्यसौ?।
माधुर्य्यं नु शरीरि किं? नवविधा भक्तिर्गतैकां तनुं?
तुल्याऽऽवेशसुखोत्सवो भगवता भक्तेश्वरो नृत्यति॥ (न)

(द) श्रीवासालयं समवा श्रीवासवाटीमध्ये इत्यर्थः। समये आसादितानाम् उपस्थापितानां सकलानां भक्तजनानां प्रमोदी आनन्दमदः। प्रेम्णा उच्चैर्यस्य उच्चरितस्य सङ्कीर्त्तनस्य कोलाहलः।

(ध) दुर्वारेति। दुर्वाराणां दुर्जयानां दैत्यानां घटया वृन्देन घटिते जनिते भुवः पृथिव्याः पटीयोभारे अतिभारे भगवता ईश्वरेण कृष्णेन स्वयम् अपहृतेऽपि अधुना देवः विश्वम्भरः नटने नर्त्तने निष्ठुरः पादघातः चरणताडनं येषां तादृशैः भक्तैः जनैः सह नटन् नृत्यन् तस्य भारस्य अवसादं भारजनितं दैन्यमित्यर्थः भूमेरिति भावः विधुनोतीत्यर्थः दूरतं नाशयतीति भावः। वसन्ततिलकं वृत्तम्।

(न) आनन्द इति। एषः मूर्त्तः मूर्त्तिमान् आनन्दः किम्? परमः देहवान् मूर्त्तः प्रेमा एव किम्? मूर्त्तिमती श्रद्धा किम्? वा

पुनर्नेपथ्ये । अद्भुततरस्तदुत्थो जयध्वनिकलकलः ।

गङ्गा । निभाल्य । अहो ! महत् कौतुकम् ।

वक्रेश्वरे नृत्यति गौरचन्द्रो
गायत्यमन्दं करतालिकाभिः ।
वक्रेश्वरो गायति गौरचन्द्रे
नृत्यत्यसौ तुल्यसुखानुभूतिः ॥ (प)

पुनर्नेपथ्ये । तथैव जयध्वनिः कोलाहल उद्भूतनादश्च ।

गङ्गा । चिरं निरूप्य । अहो भगवान् विश्वम्भर एव नृत्ये प्रवृत्तः । तथा हि

गभीरैर्हुङ्कारैर्निजजनगणान् बर्हिणयति
द्रुतैर्बाष्पाम्भोभिर्भुवनमनिशं दुर्दिनयति ।
महः पूरैर्विद्युद्वलययति दिक्षु प्रमदय-
न्नसौ विश्वं विश्वम्भरजलधरो नृत्यति पुरः ॥ (फ)

भूयो भक्तिरूपिणी मूर्त्तिमती नवधा इयैव किम् ? शरीरि मूर्त्तिमत् माधुर्यं नु ? नवविधा नवप्रकारा एकां तनुं शरीरं गता प्राप्ता एकशरीरवर्त्तिन्यः भक्तिः किम् ? अयं वक्रेश्वरः तन्नामा भक्तः भगवता विश्वम्भरेण तुल्यः समः आवेशेन अभिनिवेशेन सुखोत्सवः यस्य तथाभूतः सन् नृत्यति । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

(प) वक्रेश्वरे इति । वक्रेश्वरे नृत्यति सति गौरचन्द्रः विश्वम्भरः करतालिकाभिः अमन्दं यथा तथा गायति । गौरचन्द्रे नृत्यति सति असौ वक्रेश्वरः तुल्या सुखानुभूतिः आनन्दानुभवः यस्य तथाविधः सन् गायति । इन्द्रवज्रावृत्तम् ।

(फ) गभीरैरिति । असौ विश्वम्भरजलधरः गौराङ्गमेघः पुरः अग्रतः विश्वं जगत् प्रमदयन् हर्षयन् नृत्यति गभीरैः गम्भीरैः हुङ्कारैः निजजनगणान् भक्तसमूहान् बर्हिणयति मयूरानिव आचरयति

अपिच, दिशि विदिशि दृशा सरोजमाला
नयनजलेन मधूनि तत्र तन्वन्।
मधुकरनिकरं भ्रुवा च चक्र-
भ्रमिनटने जयतीह गौरचन्द्रः॥ (ब)

अपिच, पादाघातैरमनगरानन्दनिस्यन्दहेतो-
र्बाहृत्क्षेपैरिव सुरपुरीताण्डवे पण्डितस्य।
आशापद्मं भ्रमयत इव भ्राम्यदुद्योतदण्डै-
र्जीयाच्चक्रभ्रमणनटनं देवविश्वम्भरस्य॥ (भ)

---

मयूरा मेघोदये नृत्यन्तः यथा नर्त्तयन्ति तथा स्वगणान् नर्त्तयतीति भावः। दृगैर्निगलितैः वाष्पाम्भोभिः आनन्दाश्रुभिः अनिशं सततं भुवनं दुर्दिनयति दुर्दिनमिव दृश्यतीत्यर्थः। तथा अरुणां प्रभाणां पूरैः समूहैः दिक्षु समन्तात् विद्युत्तडिनं वलययति चालयति देहप्रभाभिर्दिशः विकाशयतीति भावः। अत्र चारूरूपकमलङ्कारः तदुक्तम् अङ्गिनो यदि चाङ्गस्य रूपणं चारुणैव तदिति। शिखरिणीवृत्तम्।

(ब) दिशीति। इह अस्मिन् प्रदेशे गौरचन्द्रः दिशि विदिशि दृशा चक्षुषा सरोजमालां पङ्कजपङ्क्तिं नयनजलेन आनन्दवाष्पेण मधूनि तत्र चक्रभ्रमिनटने चक्राकारेण भ्रमिर्भ्रमणं यत्र तादृशे नटने नर्त्तने च भ्रुवा मधुकरनिकरं भ्रमरमालां तन्वन् विस्तारयन् जयति सर्वोत्कर्षेण वर्त्तते। पुष्पिताग्रावृत्तम्। व्यभिचाररूपकालङ्कारः।

(भ) पादाघातैरिति। पादाघातैः चरणचालनैः उरगाणां नागानां नगरस्य पातालस्य आनन्दनिस्यन्दहेतोः कारणस्य नागलोकमानन्दयत इत्यर्थः, बाहूत्क्षेपैः बाहोरुत्क्षेपणैः सुरपुर्याः स्वर्गस्य ताण्डवे नर्त्तने इव पण्डितस्य कुशलस्य सुरलोकं नर्त्तयत इत्यर्थः तथा भ्राम्यद्भिः घूर्णितः प्रसर्पन्तः ये उद्योतदण्डाः प्रभामण्डलानि तैः आशापद्मं दिक्पद्मकं भ्रमयत इव देवविश्वम्भरस्य चैतन्यदेवस्य चक्रभ्रमणवत् नटनं नर्त्तनं जीयात्। मन्दाक्रान्तावृत्तम्।

पुनर्निभाल्य । अहो ! अनन्तरं भगवानद्वैतोऽपि नर्त्तितुं प्रविष्टः ।

श्रीवासस्त्रिभिरेव सुस्वरतमैः रामादिभिः सोदरै-
र्गायत्येष कलं स्वयञ्च भगवान् वक्रेश्वरश्चोत्सुकः ।
मञ्जीराङ्गदहारकङ्कणधरः काञ्चीकलापादिमा-
नद्वैतस्तनुमानिवैष भजनानन्दो नरीनृत्यते ॥ (म)

स्थूलोष्णीषविलाससुन्दरशिराः कर्णद्वये ताण्डवा-
न्दोलन्मौक्तिककुण्डलो हृदि चलच्चामीकरस्रग्धरः ।
पादाग्रे चलनूपुरः पुलकितो वाष्पाम्बुधौताऽऽननो
नित्यानन्दमहाशयोऽपि महताऽऽवेशेन नृत्यत्ययम् ॥ (य)

अम्बरमवलोक्य । अहो ! याम-मात्रावशिष्टेयं त्रियामा ।

(म) श्रीवास इति । एष श्रीवासः सुस्वरतमैः अतिसुस्वरैः रामादिभिः त्रिभिरेव सोदरैः भ्रातृभिः सह कलम् अव्यक्तमधुरं गायति । भगवान् वक्रेश्वरश्च स्वयम् उत्सुकः कौतुकवान् । एषः मञ्जीराङ्गदहारकङ्कणधरः नूपुराद्यलङ्कृत इत्यर्थः तथा काञ्चीकलापादिमान् रशनादामधरः अद्वैतः तनुमान् मूर्त्तिमान् भजनानन्द इव नरीनृत्यते पुनः पुनरतिशयेन नृत्यति ।

(य) स्थूलोष्णीषेति । अयं नित्यानन्दमहाशयः महानुभावो नित्यानन्दोऽपि स्थूलस्य विशालस्य उष्णीषस्य शिरोवेष्टनस्य विलासेन पहथेन सुन्दरं शिरो यस्य तादृशः, कर्णद्वये ताण्डवेन नटनेन आन्दोलती मौक्तिककुण्डले यस्य तथोक्तः, हृदि वक्षसि चलन्त्या दोलन्त्या चामीकरस्रजा काञ्चनमालया धरः तद्युक्त इत्यर्थः, पादाग्रे चले चञ्चले नूपुरे यस्य तथाविधः पुलकितः रोमाञ्चितः तथा वाष्पाम्बुभिः आनन्दाश्रुभिः धौतम् आननं यस्य तथाविधः सन् महता आवेशेन अभिनिवेशेन नृत्यति । शार्दूलविक्रीडितं वृत्तम् ।

उचितमेव घूर्णते नयनयुगलम्। भगवत्या निद्रयाऽभि-
भूतोऽस्मि। तदत्रैव क्षणं निद्रामि। इति निद्रां नाटयन्
स्वप्नायते। भो विश्वम्भर देव! कुत्रासि। इति स्वप्नायित्वा पुनः
प्रबुध्य। अहो! किमयमालोकितो दुःस्वप्नः। इति मुहूर्त्तं हृदि
भगवच्चरणौ विचिन्त्य पुनर्नेपथ्याभिमुखमवलोक्य। अहो! न
कोऽपि दृश्यते, सर्व्व एव भगवत्प्रमुखाः सङ्कीर्त्तनोपरमे
यथायथं शयनाय गतवन्त इव लक्ष्यन्ते, भवतु तदहमपि
स्वनिलयं गच्छामि। इति कतिचित्पदानि परिक्रम्य। अहो!
विभातैव विभावरी (र)। इति प्राचीमवलोक्य।

उल्लङ्घ्य किञ्चिदुदयाचलवप्रधारां
प्राच्या दिशोऽम्बरतटीमवलम्बमानः।
पादप्रसारणविधावपटुस्तथाऽपि
बालो रविः कलय कालवशादुदेति॥ (ल)

इति कतिचित्पदानि गत्वा पुरोऽवलोक्य। अहो! कोऽयं

(र) यामेति। याममात्रं प्रहरमात्रम् अवशिष्टं यस्याः तादृशी। त्रियामा रजनी। स्वप्नायते स्वप्नमनुभवति। भगवत्प्रमुखाः भगवान् चैतन्यचन्द्रः प्रमुखो येषां ते। स्वनिलयं स्वगृहम्। विभावरी रात्रिः।

(ल) उल्लङ्घ्येति। बालः अभिनवः रविः सूर्य्यः उदयाचलस्य वप्रधारां तटप्रान्तं किञ्चित् ईषत् उल्लङ्घ्य अतिक्रम्य प्राच्या दिशः अम्बरतटीम् अन्तरीक्षप्रदेशमवलम्बमानः आश्रयन् अतएव पादप्रसारण-विधौ किरणविस्तारणव्यापारे चरणक्षेपणविधाने च अपटुः असमर्थः बालत्वादिति भावः तथापि कालवशात् उदेति उदयं गच्छति कलय पश्य। वसन्ततिलकं वृत्तम्।

सत्वरः किञ्चित्पिशुनरिव (ख) समुपैति। प्रविश्य। सम्भ्रान्तः कश्चित्।

पुरुषः। अहो गङ्गादास! भवद्भ्यां दृष्टो विश्वम्भरः।

गङ्गा। सोल्लासम्। अहो! मे भागधेयम्। यमवलोकयितुं गच्छन्नस्मि। स एव स्वयमागतोऽस्मद्भ्याम्।

पुरुषः। अये! एवं पृच्छामि। भवद्भ्यामागतः किमिति?।

गङ्गा। सवैमनस्यम्। कथमेवं पृच्छसि?।

पुरुषः। अन्यस्मिन्नहनि प्रातः स्वनिलये गत्वा कृत्यं करोति अद्य न गत इति शचीदेव्या प्रेषितोऽस्मि तदन्वेषणाय।

इत्युक्त्वैव पुनरन्यतोऽन्वेष्टुं निष्क्रान्तः।

पुनरन्यः सम्भ्रान्तः सत्वरं प्रविश्य पुनस्तथैव पृष्ट्वा निष्क्रान्तः।

पुनरन्यः पुनरन्यः पुनरन्यश्चेति तथा तथैव पृष्ट्वा पृष्ट्वा निष्क्रामति।

गङ्गा। सवैमनस्यम्। अहो! फलितमिव दुःस्वप्नेन। तत् किं करोमि। अद्वैतादयो यत्र तिष्ठन्ति तत्रैव यामि।

इति कतिचित्पदान्यादधाति।

ततः प्रविशन्ति दौर्मनस्येन वितर्कं नाटयन्तोऽद्वैतादयः।

अद्वै। श्रीवास! किमेतत्?।

मतेऽस्माकं प्रातः स्वभवनमुपेतोऽस्ति भगवान्
गृहे श्रीवासादेः स्थित इति जनन्या मतमिदम्।

---

(ख) पिशुनः प्रच्छिन्नः।

इति भ्रान्ताः सर्वेऽप्रकृतमनसः सम्प्रति वयं
कथं विद्मोऽकस्मादयमशनिपातोऽद्य भविता ॥ (घ)

श्रीवा। ये ये प्रहितास्तदन्वेषणाय तेषां न कोऽपि प्रत्यावर्त्तते। (ङ)

चन्द्र। अन्विष्य यदि पश्यति तदैव प्रत्यावर्त्तिष्यते (च)। कोऽपि किमप्यनुसन्धानं न लब्धवान्। एतत् किं सम्भाव्यते।

इह ग्रामे को वा स्थगयतु तमात्मप्रकटनं ?
स किं वा स्वात्मानं स्थगयितुमपीशः प्रभवतु ?।
अपह्नोतुं शक्यो न भवति जनैश्चण्डकिरणः
कथङ्कारं व्योम्नि स्वमपि स दिने व्यन्तरयतु ॥ (छ)

(घ) मते इति। भगवान् गौरचन्द्रः अस्माकं मते मतमनुसृत्येत्यर्थः प्रातः स्वभवनं गतः अस्ति, श्रीवासादेः गृहे स्थित इति अन्याः अयोध्येव्या इदं मतं मनसि स्थितमित्यर्थः। सम्प्रति इति इत्थं भ्रान्ताः भ्रमपतिताः सर्वे अप्रकृतमनसः अप्रस्तुतचित्ता वयम् अकस्मात् अद्य अयम् अशनिपातः वज्रपातः भविता इति कथं विद्मः केन प्रकारेण जानीमः। शिखरिणीवृत्तम्।

(ङ) प्रहिताः प्रेषिताः। प्रत्यावर्त्तते प्रत्यागच्छति।

(च) प्रत्यावर्त्तिष्यते प्रत्यागमिष्यते।

(छ) इहेति। इह अस्मिन् ग्रामे को वा जनः, आत्मप्रकटनं स्वप्रकाशं तं देवं स्थगयतु आच्छादयतु न कोऽपि तं गोपितुं शक्नोतीति भावः। स वा ईशः आत्मानं निजस्वरूपं स्थगयितुं तिरोधातुं किं प्रभवतु ? नैव स्वं गोपयितुं शक्नोतीति भावः। चण्डकिरणः सूर्यः जनैः अपह्नोतुम् आच्छादयितुं न शक्यो भवति। सः चण्डकिरणः व्योम्नि आकाशे दिने दिवसे स्वम् आत्मानं कथङ्कारं केन वा प्रकारेण व्यन्तरयतु आच्छादयतु नैव आच्छादयितुं शक्नोतीति

श्रीवा। पुरोऽवलोक्य। अयं गङ्गादासः समायाति तदयं प्रष्टव्यः।

उपसृत्य। गङ्गा। भो भो महाभागाः! कथमाकस्मिकोऽयं विप्लवः। (ख)

सर्वे। अहो! अयमपि तदनुसन्धानधुरन्धरः(क)। यदयमस्मानेव पृच्छति।

अद्वै। सास्रम्।

हे विश्वम्भरदेव! हे गुणनिधे! हे प्रेमवारांनिधे!
हे दीनोद्धरणावतार! भगवन्! हे भक्तचिन्तामणे!।
अन्धीकृत्य दृशो दिशोऽन्धतमसीकृत्याखिलप्राणिनां
शून्यीकृत्य मनांसि मुञ्चति भवान् केनापराधेन नः?॥(ख)

मुरारिः। भो भो देव अद्वैत! त्वमतिदुरवगाह-

भावः। शिखरिणीवृत्तं प्रतिवस्तूपमालङ्कारः तदुक्तं दर्पणे। प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति।

(ख) विप्लवः अनिष्टापातः।

(क) तदिति तस्य चैतन्यस्य अनुसन्धाने धुरन्धरः अग्रणीः।

(ख) हे इति। हे विश्वम्भरदेव! हे गुणनिधे! सर्वगुणाकर! हे प्रेमवारांनिधे! प्रेमसागर! हे दीनोद्धरणावतार! दीनजनानामुद्धरणार्थम् अवतीर्ण! हे भगवन्! हे भक्तानां चिन्तामणे! भवान् अखिलप्राणिनां दृशः चक्षूंषि अन्धीकृत्य दिशः अन्धतमसीकृत्य गाढान्धकारावृताः विधाय मनांसि शून्यीकृत्य केन अपराधेन नः अस्मान् मुञ्चति त्यजति?। शार्दूलविक्रीडितं वृत्तम्।

गभीरोऽसि । कथमनिर्णयेनैवं विलपसि । त्वादृशामीदृशानुतापेनैव नितरां प्रतप्ता भविष्यति तपस्विनी (ग) शची देवी ।

श्रीवा । सत्यमाह मुरारिः । यतः ।

तज्जातपुत्रा बत ! सा तदेक-
चक्षुस्तदेकात्मसुखानुभूतिः ।
माताऽपि तस्मिन् गुरुदेवबुद्धि-
र्न तं विना जीवति सा क्षणञ्च ॥ (घ)

तदधुना तज्जीवनरक्षैव नः कर्त्तुमुचिता । तस्माद्भो गङ्गादास ! भवद्वचसि तस्याः प्रत्ययोऽस्ति त्वया तथा कथनीयं यथाऽसौ जीवनेन न वियुज्यते ।

गङ्गा । यथाऽऽज्ञापयन्ति भवन्तः । इति निष्क्रान्तः ।

गदाधरः । सकरुणम् । भो नाथ ! ।

गतो यामो यामावपि ! गतवन्तौ बत ! गता
अमी यामा हा धिक् ! दिनमपि गतप्रायमभवत् ।

---

(ग) तपस्विनी वराकी ।

(घ) तज्जातेति । तज्जातः पुत्रः यस्याः सा तदेकतनयेत्यर्थः तदेकचक्षुः तज्जातनयना तस्मिन् एके पुत्रे सा सुखानुभूतिर्यस्यास्तादृशी माता जननी अपि तस्मिन् गुरुः महती देवबुद्धिः देवताज्ञानं यस्याः तथाविधा सा शचीदेवी बत ! खेदे तं विना क्षणञ्च अल्पक्षणमपि न जीवति । उपजातिवृत्तम् । परिकरालङ्कारः तदुक्तं दर्पणे । उक्तिर्विशेषणैः साभिप्रायैः परिकरो मत इति ।

(ङ) गत इति । आश्चर्य ! बत हा धिक् ! बत हा एतानि खेदातिशयद्योतकानि अव्ययानि । यामः प्रहरः गतः द्वौ याम-

क्रमाद्यामायामस्त्रुटति बत हा ! सार्द्धमसुभि-
स्तथाऽपि त्वद्वार्त्ता न हि गतवती श्रोत्रपदवीम् ॥ (ङ)

इति लुठति ।

यक्षेश्वरः ।

त्यक्ता नः किमु यास्यतीति करुणासिन्धो ! गतायां निशि
प्रेमाधिक्यपरिप्रकाशसरसां नानानुकम्पां व्यधाः ? ।
कारुण्यं तव तच्च कीदृशमहो ! भूयस्युपेक्षा च वा
कीदृक् ते बत कृत्पते ! द्वयमिदं हे नाथ ! लोकोत्तरम् ॥ (च)

इति लुठति ।

मुरारिः । सक्षोभम् ।

आश्चर्य्यधैर्य्यं क्रियते बहिर्यत्
छिनोति तद्वाष्पभरोऽन्तरस्थः ।

प्रहरौ समाविस्त्वमरः । यामौ प्रहरौ गतवन्तौ, अमी यामाः प्रहराः गताः, दिनमपि गतप्रायम् अभवत् । क्रमात् आयामायः दैर्घ्यमायारूपा रज्जुः तवेति शेषः असुभिः प्राणैः अस्माकमिति शेषः सार्द्धं सह त्रुटति छेदं प्राप्नोति, तथापि तव वार्त्ता श्रोत्रपदवीं कर्णपथं न हि गतवती । शिखरिणीवृत्तम् ।

(च) त्यक्तेति । हे करुणासिन्धो ! नः अस्मान् त्यक्ता यास्यति भवानिति शेषः इति हेतोः गतायां निशि रजन्यां प्रेमाधिक्यस्य प्रेमातिशयस्य परिप्रकाशेन सर्वतः प्रकटनेन सरसां सद्भावाद्रीं नानानुकम्पां विविधां वात्सल्यभावं किमु व्यधाः कृतवान् ? हे नाथ ! हे कृत्पते ! कृत्यप्रभो ! तव तत् कारुण्यं कीदृशं भूयसी महती उपेक्षा अवस्त् परिहारः वा कीदृक् अहो आश्चर्य्यं बत खेदे, इदं द्वयं तव लोकोत्तरम् अलौकिकम् । नहि लोका ईदृशं कारुण्यं दर्शयित्वा परित्यजन्तीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

पुनः पुनर्बद्धमपि प्रवृद्धः
सेतुं यथा सैकतमम्बुपूरः ॥ (छ)

इति फूत्कृत्य फूत्कृत्य रुदन् भूमौ निपतति ।

श्रीवा । तथालोक्य । अतिगभीरोऽयं दुर्निवारानुराग-तारल्यः संप्रवृत्तः (ज) । भवत्येव ।

पयःप्रपूरः स्थिर एव तावत्
करोति यावन्न हि सेतुभङ्गम् ।
भग्ने तु सेतावतिदुर्निवारः
समस्तमाप्लावयितुं समर्थः ॥ (झ)

भो नाथ विश्वम्भर ! क्वासि क्वासि ।
पूर्वं मृतः कष्टमहो ! बत जीवितोऽहं

---

(छ) आहार्य्येति । यद्धि यत् आहार्यधैर्य्यं क्रियते अवलम्ब्यते मयेति शेषः अन्तरस्थः हृत्स्थः वाष्पभरः वाष्पातिशयः प्रवृद्धः अम्बु-पूरः जलप्रवाहः पुनः पुनः बद्धमपि सैकतं सिकतामयं सेतुं यथा तत् धैर्य्यं क्षिणोति अयं भवति मनसि धैर्य्यम् अवलम्बितुं यते, परम् अन्तरस्थवाष्पातिरेको बलात् तत् निरस्यतीति भावः । उप-जातिवृत्तम् ।

(ज) अतिगम्भीरः अतिगम्भीरप्रकृतिः अयं मुरारिरिति शेषः दुर्निवारम् अनुरागस्य तारल्यं चापल्यं यस्य तथाविधः संप्रवृत्तः संजातः ।

(झ) पय इति । पयसां जलानां प्रपूरः प्रवाहः यावत् सेतुभङ्गं न हि करोति तावत् स्थिर एव, स किन्तु सेतौ भग्ने सति अति-दुर्निवारः अतिशयेन निवारयितुमशक्यः सन् समस्तम् आप्लावयितुं जलैः पूरयितुं समर्थः भवतीति शेषः ।

(ञ) पूर्वमिति । हे विभो ! प्रभो ! आत्मकं पतनकं येहादिमद-

भूयोऽपि मारयसि किं बत ! जीवयित्वा ? ।
दुर्लीलता तव विभो ! न मनोऽधिगम्या
नन्वीश्वरो भवति केवलबाललीलः ॥ (ञ)

इति रोदिति ।

सुकुन्दः ।

नालोक्यते तव मुखं नयनेन किं नो ?
नाऽऽकर्ण्यते तव वचः श्रवणेन वा किम् ? ।
हे प्राणनाथ ! भगवंस्त्वदुपेक्षितानां
कष्टेन वा किममुना हतजीवितेन ? ॥ (ट)

जगदानन्दः । सवाष्पम् ।

नास्माहृग्भिस्तव पदाम्बुजसङ्गहीनै-
र्जीविष्यते क्षणमपीति मनो न ह्यासीत् ।

---

व्युत्क्रमम् । पूर्वं मृतः अहं कथं जीवितः जीवनं प्रापितः त्वयेति शेषः, जीवयित्वा भूयः पुनः किं कथं मारयसि ? तव दुर्लीलता दुष्टा लीला विसंवादी विलास इत्यर्थः न मनोऽधिगम्याः न मनोगोचराः मनसा ज्ञातुं न शक्यते इत्यर्थः । ईश्वरः केवला बालस्येव लीला विलासो यस्य तादृशः ननु खलु । वसन्ततिलकं वृत्तम् ।

(ट) नेति । हे भगवन् ! नः अस्माकं नयनेन तव मुखं किं कथं न आलोक्यते न दृश्यते ? श्रवणेन कर्णेन वा तव वचः किं कथं न आकर्ण्यते न श्रूयते ? त्वया उपेक्षितानां परित्यक्तानाम् अस्माकम् अमुना कष्टेन क्लेशबहुलेन हतजीवितेन वा किम् ? । वसन्ततिलकं वृत्तम् ।

(ठ) नेति हे देव ! अस्मादृशैः तव पदाम्बुजसङ्गहीनैः भवच्चरण-कमलसङ्गविरहितैः सद्भिः क्षणमपि न जीविष्यते इति नः अस्माकं मनः आसीत् हे दयित ! प्रिय ! तव अनीक्षणे अदर्शनेऽपि हिमवान्

लज्जामहे दयित ! हे तत एव देव !
जीवाम एव दिवसांस्त्वदनीक्षणेऽपि ॥

इति मूर्च्छति ।

दामोदरः । हा प्राणनाथ ! क्वासि क्वासि ।

प्राणा ! न किं व्रजत ? मुञ्चत जाड्यमुच्चैः
प्राणेश्वरश्चरति साम्प्रतमेक एव ।
तत्पादपङ्कजमुपेत्य भजध्वमज्ञाः !
प्रेमात्मनामहह ! माऽस्तु कुले कलङ्कः ॥ (ङ)

इति मूर्च्छति ।

हरिदासः । अहो ! कष्टम् ।

प्राणेश्वरेण सह चेत्सहसा न जग्मुः
प्राणाः पुनर्झटिति नैव भवन्ति गन्तुम् ।

जीवाम एव तत एव तस्मादेव कारणात् लज्जामहे लज्जां प्राप्नुमः ।
वसन्ततिलकं वृत्तम् ।

(ङ) प्राणा इति । हे प्राणाः ! किं कथं न व्रजत न गच्छत, गमनं युष्माकमुचितमेवेत्यर्थः उच्चैः महत् जाड्यं जडतां निश्चलता-मित्यर्थः मुञ्चत त्यजत । सम्प्रति प्राणेश्वरः युष्माकम् ईश्वर इत्यर्थः एक एव एकाकी एव चरति तिष्ठति, हे अज्ञाः ! मूढाः ! तस्य ईश्व-रस्य पादपङ्कजं चरणकमलमुपेत्य प्राप्य भजध्वम् उचितमेव सेवकानाम् ईश्वरचरणसेवनमिति भावः अहह खेदसूचकमव्ययं प्रेमात्मनां प्रेमि-काणां भक्तानामित्यर्थः कुले कलङ्कः मा अस्तु न भवतु भक्तानां हि प्रभुभजनं कर्त्तव्यं तदकरणे तेषां कुलस्य कलङ्कः स्यादिति भावः । वसन्ततिलकं वृत्तम् ।

(ड) प्राणेश्वरेणेति । प्राणाः चेत् यदि सहसा प्राणेश्वरेण प्राण-

धिक्कारकोटिकटुतामनिशं सहन्ते
सीदन्ति नैव वहतस्त्ववसादयन्ति ॥ (ढ)

भवतु क्षणमवगच्छामि ।

यदि नयनयोः पन्थानं मे न याति स ईश्वरो
यदि करुणया नो दृक्पातं स मद्विधे ।
कुलिशकठिनानां वोऽसूनां सहस्रमपि क्षणा-
त्तृणमिव परित्यक्ष्याम्यन्तस्तदङ्घ्रिपरीप्सया ॥ (ण)

इति धैर्य्यमवष्टभ्य चिन्तां नाटयति ।

विद्यानिधिः ।

प्रेमन् ! नमोऽस्तु भवते यदकैतवेन
नोत्पद्यसे क्वचन हा ! वत किं ब्रवीमि ।

पतिना सह न जग्मुः न गतवन्तः, तदा पुनः किन्तु झटिति गन्तुं नैव भवन्ति समर्था इति शेषः अनिशं निरन्तरं धिक्कारकोटिकटुतां बह्वयो धिक्कारान् सहन्ते, नैव सीदन्ति नावसादं गच्छन्ति किन्तु वहतः जीवतः अस्मानिति शेषः अवसादयन्ति अवसादं नयन्ति । वसन्ततिलकं वृत्तम् ।

(ण) यदीति । स ईश्वरः यदि मे मम नयनयोः पन्थानं न याति नं तं पश्यामि यदीत्यर्थः, यदि स करुणया कृपया मद्विधे मादृशे जने दृक्पातं नेत्रपातं नो करोतीति शेषः तदा तस्य अङ्घ्रि-परीप्सया तत्पादपद्मप्राप्तीच्छया कुलिशकठिनानां वज्रवत् कठोराणामपि असूनां प्राणानां वः युष्माकं सहस्रमपि तृणमिव क्षणात् अन्तः झटिति परित्यक्ष्यामि । शिखरिणीवृत्तम् ।

(त) प्रेमन्निति । हे प्रेमन् ! भवते नमः अस्तु, त्वां प्रणमामीत्यर्थः वत् यस्मात् त्वम् अकैतवेन कैतवं विना क्वचन क्वचिदपि न उत्पद्यसे, अकपटं प्रेम क्वचिदपि न दृश्यते इति भावः हा वत इति

तस्मिन्नकैतवकृपेऽपि सकैतवत्वं
नो चेत् कथं नु मम जीवनयोग एषः ? ॥ (त)

इति भूमौ पतित्वा विह्वलः सन् रोदिति ।

मुरारिः धैर्यमवष्टभ्य । हंहो महानुभावा ! विचारयत किमेकाकिनैव प्रभुणा क्वापि गतं किंवा कश्चिदन्योऽपि गत इति ।

सर्वे । अयं विचारः कथमुत्पद्यताम् ;

न गच्छन् पथि केनापि स दृष्टो गौरचन्द्रमाः ।
विद्युत्पुञ्ज इवाकस्माद् गोरविषयं गतः ॥ (थ)

मुरा । अस्त्युपायो विचारस्य ।

सर्वे । कथमिव ।

मुरा । आत्मवर्गमध्ये विचार्यताम् । कोऽत्र न वर्त्तते ।

सर्वे । सम्यगुक्तमेतत् । इति मिथो विचारयन्ति ।

मुरा । अहो ! मयाकलितम् । (द)

सर्वे । तत् किम् ? ।

इदं शोकातिशयव्यञ्जकम् । किं ब्रवीमि कथयामि, अकैतवकृपे सत्य-कृपानिधौ अपि तस्मिन् देवे तं सकैतवः सकपटः, कपटप्रेमवान् अहमिति भावः । नो चेत् यदि नेत्यर्थः तदा कथं नु मम एषः जीव-नेन योगः, यदि कपटप्रेमिको नास्मि तदा तं देवं विना कथं जीवनं धारयामीति भावः । वसन्ततिलकं वृत्तम् ।

(थ) नेति । स गौरचन्द्रमाः चैतन्यचन्द्रः पथि गच्छन् केनापि जनेन न दृष्टः । विद्युत्पुञ्ज इव अकस्मात् सहसा दृशोः नयनयोः अविषयम् अगोचरं गतः ।

(द) आकलितं विचारितम् ।

मुरा। नित्यानन्दमहानुभाव आचार्यरत्न।

सर्वे। कुत इदमुपयुज्यते।

मुरा। एतावति कष्टे यद्यत्र तावभविष्यतां (ध) तदा-ऽत्रैवागमिष्यताम्।

सर्वे। किञ्चिदाश्वस्य। अहो! अस्माकं यथा तथा भवतु स चेदेकाकी न भवति तेनैव किञ्चिदाश्वस्तमस्माभिः।

अद्वै। अये मुकुन्द! त्वमनया वार्त्तया मातरमाश्वा-सय "मातस्त्वं प्रति चिन्ता न कार्य्या नित्यानन्दाचार्य्य-रत्नाभ्यां कार्य्यविशेषार्थं क्वापि देवेन गतमस्ति समागत-प्रायोऽयम्" इति वक्तव्यम्।

मुकु। यथाऽऽज्ञापयति। इति निष्क्रान्तः।

अद्वै। हंहो विश्वम्भरदेवप्रियाः! किञ्चिद्धैर्य्यमिव जातं चेतसः। यतस्तावभ्भावेनाभियुक्तौ तयोः सतोः स्वतन्त्रोऽपि भगवानस्वातन्त्र्यं न करिष्यति। हन्त! किमुद्दिश्यं तस्य यदर्थमिदमध्यवसितम्। (न)

तीर्थाटनञ्चेत् किमपक्रमेण
गन्तुं समर्थाः सह तेन सर्वे।

(ध) अभविष्यताम् अस्थास्यताम्।

(न) तौ आचार्य्यरत्ननित्यानन्दौ। अभियुक्तौ संलग्नौ। तयोः सतोः विद्यमानयोः। स्वतन्त्रोऽपि स्वाधीनोऽपि अस्वातन्त्र्यम् अस्वा-धीनताम्। तस्य भगवतः। अध्यवसितं चेष्टितम्।

(प) तीर्थाटनमिति। तीर्थाटनं तीर्थभ्रमणं चेत् अभिप्रेतमिति शेषः, तदा अपक्रमेण गोपनेन किम्? सर्वे वयं तेन सह गन्तुं

तयोर्विशेषप्रणये हितञ्चे-
दत्रापि तत्सम्भविलुञ्च योग्यम् ॥ (प)

इति सर्वे सर्वं विस्मयन्तस्तूष्णीं तिष्ठन्ति ।

नेपथ्ये । हन्त भोः ! कष्टम् ।

हा धिक् ! कष्टमहो ! दिनत्रयमभूद्वार्त्ताऽपि तैर्न श्रुता ?
ते जीवन्ति हता न किं ! किमथवा इत्ताश्रया मूर्च्छया ? ।
सन्त्यज्य प्रियमीश्वरं वत विधे ! हहा च तं तादृशं
प्रत्यावृत्तिपरः कथं नु पुरतस्तेषां भविष्याम्यहम् ? ॥ (फ)

तदिहैव स्थित्वा शरीरत्याग एव यतनीयम् ।

सर्वे । श्रुतिमभिनीय । अहो ! आचार्य्यरत्नस्येव स्वरः श्रूयते । वाष्पगद्गदतया सम्यङ्नालक्षि तन्निपुणमवधारयाम । इति सर्वे अवधानं नाटयन्ति ।

पुनर्नेपथ्ये । हन्त हन्त ! किमिति पामरेण (ब) मया तत्सङ्गे न गतम् अथवा ।

समर्थाः । तयोः आचार्य्यरत्ननित्यानन्दयोः विशेषप्रणयस्य ईहितं चेष्टितं चेत् अत्रापि विशेषप्रणयेऽपि तत् तीर्थाटनं सम्भवितुं योग्यञ्च । अस्माकं सर्वेषां सङ्गेऽपि ताभ्यां विशेषप्रणयिभ्यां सह तीर्थभ्रमणस्य सम्भवे कथमस्माकं परित्याग इति भावः ।

(फ) हा धिगिति । हा ! धिक् कष्टम् अहो वत ! इत्येतानि खेदातिशयसूचकानि । दिनत्रयम् अभूत् गतमिति शेषः । तैः श्रीवासादिभिः वार्त्ता अपि न श्रुता, ते किं जीवन्ति ? न हताः किम् ? अथवा मूर्च्छया इत्ताश्रयाः किम् ? मोहं गतास्तिष्ठन्ति किम् ? हे विधे ! तं तादृशं प्रियम् ईश्वरं सन्त्यज्य अहं प्रत्यावृत्तिपरः प्रत्यागतः तेषां श्रीवासादीनां पुरतः अग्रतः कथं नु केन वा प्रकारेण भविष्यामि स्थास्यामि ? शार्दूलविक्रीडितं वृत्तम् ।

(ब) पामरेणम् नीचेन ।

शिव ! शिव ! शठः कर्त्तुं शक्तो न हि प्रभुणा समं
निजमभिमतं स्वेषां चित्ते प्रवर्त्तयति प्रभुः ।
प्रकटयति हि स्वीयं सूर्य्यः सकान्तमणौ महो
न विघटयितुं शक्नोत्येष स्वदाहकरञ्च तत् ॥ (भ)

सर्वे । आकर्ण्य । सत्यमेवायमाचार्य्यरत्नमस्मन्यामहे भगवन्तं विमुच्य समागतोऽयम् । यतः "शिव शिव शठः कर्त्तुं शक्तो न हि प्रभुणा समम्" इति निगदति । हन्त भो ! भर्ज्जितमिव दुर्द्दैव दव-दहन ज्वालया (म) कथमप्यासादितमाश्वासवीजम् ।

मुरा । एवं मन्ये नित्यानन्ददेवः सङ्गे वर्त्तते । अयं कार्य्यान्तरायात्र (य) प्रेषित इव ।

अद्वै । किं तावदस्यात्र कार्य्यम् । न तावद्वित्ते प्रयोजनं यदर्थमयमागमिष्यति । न मातरि च तथा ममत्वम् । यत्तामेव शान्त्वयितुं प्रहेष्यति । न तादृग-

---

(भ) शिवेति । शिव ! शिव ! इति खेदसूचकमव्ययं शठः स्वेच्छाकारी अविवेक इत्यर्थः अतः प्रभुणा समं तुल्यं यथा तथा कर्त्तुं नहि शक्यः, प्रभुः स्वेषां स्वभक्तानां चित्ते निजम् अभिमतं प्रवर्त्तयति प्रकाशयति किन्तु भक्तास्तदनुरूपमाचरितुं न शक्नुवन्तीति भावः। हि तथाहि सूर्य्यः सकान्तमणौ सूर्य्यकान्तमणौ स्वीयं महः तेजः प्रकटयति अर्पयति, एषः सूर्य्यकान्तस्तु स्वदाहकरं तत् महः विघटयितुम् अपनेतुं न शक्नोति । हरिणीवृत्तं न समरसलागः षड्वेदैर्हयैर्हरिणी मतेति लक्षणात् ।

(म) दुर्द्दैवेति दुर्द्दैवमेव दवदहनः वनानलः तस्य ज्वालया शिखया ।

(य) कार्य्यान्तराय अन्यस्मै कार्य्याय ।

मादृशां सौभाग्यम्। यदस्मांल्लालयितुं प्रस्थापयिष्यति। तदलमनया विचिकित्सया। तत्र वेद्मि किमपरं फलं कृतमस्ति मादृशां दुर्दैवविषभूरुहेण (र)। इति विचिन्त्य तिष्ठति।

पुनर्नेपथ्ये। हा कष्टं! पामर एवास्मि। यतः

पश्चात् पश्चात् कथमनुसृतं नैव हा हन्त! दृष्टा
तादृग्रूपं कथमिव दृशौ हन्त! तापैर्न दग्धे?।
याहीत्युक्ते सति भगवता जीवितं किं न यातं?
हा हा विश्वम्भर! तव तया मायया वञ्चितोऽस्मि॥ (ल)

सर्वे। आकर्ण्य। नेपथ्याभिमुखं निरीक्षामहे माऽतःपरं विलम्ब्यताम्। इति तद्दीक्षमाणास्तिष्ठन्ति।

ततः प्रविशत्याचार्य्यरत्नः।

आचा।

क्व च स्निग्धश्यामः कुटिलकचपाशः? क्व स विधिः?
क्व च श्रोणीभारः? क्व शिव! शिव! कौपीनमपि तत्?(व)

अर्द्धं स्थित्वा परावृत्य।

(र) शिक्ष्ये भजे। तां मातरं, प्रहेष्यति प्रेषयिष्यते। लालयितुम् आचारयितुम्। विचिकित्सया वितर्केण। दुर्दैवेति दुर्दैवमेव विषभूरुहः विषवृक्षः तेन।

(ल) पश्चादिति। हा कथं पश्चात् पश्चात् नैव अनुसृतं नैव गतं, हन्त खेदे, तादृक् रूपं दृष्ट्वा दृशौ नयने कथं तापैः सन्तापैः न दग्धे पुनरदर्शनेनेति भावः। भगवता याहि गच्छ इति उक्ते सति जीवितं ममेति शेषः किं कथं न यातं न गतं? हा हा विश्वम्भर! चैतन्यदेव! तव मायया वञ्चितः प्रतारितः अस्मि। मन्दाक्रान्तावृत्तम्।

(व) क्वेति। स्निग्धश्चासौ श्यामश्चेति स्निग्धश्यामः कुटिलकच-

प्रतीतिर्द्रष्टॄणां परमियमहो ! वस्तु न हि तत्
समस्तस्याधारात्मनि चिति समस्तं स्फुरति हि ॥ (ग)

सर्वे। उपसृत्य सौत्सुक्यम्। आचार्य ! कथय कथय क्वासौ भगवान्।

आचा। हन्त भोः ! किमेष पामरः कथयतु।

अद्वै। कथय किं वृत्तम्।

आचा। कर्णे। एवमेव।

अद्वै। हन्त ! कथमयं करेण पिधापनीयोऽर्थः (घ)। तत् स्फुटं कथय सर्वे शृण्वन्तु। इति सवाष्पमुच्चैः।

तास्ताः कीर्त्तनगृत्यकौतुककला हा धिक् ! समाप्तिं गता-
स्तास्ताः प्रेमविलासहासमधुरा वाचः स्थिता नो हृदि।
सा प्रीतिः करुणा च सा प्रिय ! प्रिय ! स्मृत्येकशेषाऽभवत्
सन्न्यासेन तव प्रभो ! विरचितः सर्वस्वनाशो हि नः ॥ (ङ)

पाद्यः भङ्गिमत्कोशचयः क्व च, स विधिः विधानम् उत्सवव्यापारश्च क्व, स श्रोणीभारः नितम्बभारः क्व च, राधास्वरूपधारणे इति भावः, प्रिय ! प्रिय ! इति खेदे, तत् कौपीन[illegible]पि क्व।

(ग) प्रतीतिरिति। द्रष्टॄणां दर्शकानाम् इयं प्रतीतिः, तत् हि परं वस्तु पदार्थो न, अहो आश्चर्यं समस्तस्य अखिलस्य जगतः आधारात्मनि आश्रयस्वरूपे चिति ज्ञानरूपे तस्मिन् समस्तं सर्वं स्फुरति हि प्रकाशते एव। शिखरिणीवृत्तम्।

(घ) पिधापनीयः आच्छादनीयः वातोऽभाप्योरित्यपेरकारलोपः।

(ङ) ता इति। हा धिक् ! ताः ताः अनिर्वचनीयरूपा इति कीर्त्तनगृत्ययोः कौतुककलाः उत्सवव्यापाराः समाप्तिं गताः नाधुना वर्त्तन्ते इति भावः। ताः ताः प्रेम्णः विलासेन यः हासः तेन मधुरा मनोहारिण्यः वाचः वचनानि नः अस्माकं हृदि स्थिताः, सा

सर्वे । आकर्ण्य शोकं नाटयन्ति । प्रविश्य सत्वरम्

गङ्गादासः । आचार्य्य ! कथय कल्याणिनो देवस्य कल्याणमित्येषा पृच्छति भगवन्माता । आचार्य्यो बाष्पगद्गदकण्ठस्तिष्ठति ।

अद्वैत । महात्मा तां ब्रूहि ।

रामस्य विपिनवासः कृष्णस्य च माथुरं गमनम् ।
अस्य च सन्न्यासविधिस्त्रितयं मातृत्रयस्य सोढव्यम् ॥ (छ)

गङ्गा । हंहो ! तयाऽप्येतदनुमितमस्ति पुरैव स्वान्ते । किं गोप्यते भवद्भिः स खलु ज्येष्ठस्य वर्त्म यियासति । लोकोत्तरचरितानां तुल्ये काठिन्यकारुण्ये । (ज)

अद्वैत । भवत्येवमेवासौ धैर्य्यवती कथमन्यथा तादृशः पुत्रः । क्षणं स्थित्वा विमृश्य । भवत्येवम् ।

प्रीतिः प्रेम, सा च करुणा चिरं स्थिरेति शेषे, कुलैकयोग्या करुणामयाऽभवत् । हे प्रभो ! तव सन्न्यासे । प्रव्रज्यया नः अस्माकं सर्वस्वनाशः समस्तधनक्षयः विरचितः कृतः हीति अवधारणार्थमव्ययम् । शार्दूलविक्रीडितं वृत्तम् ।

(छ) रामस्येति । रामस्य दाशरथेः विपिनवासः वनवासः, कृष्णस्य च माथुरं गमनं मथुरायां प्रस्थानम् अस्य चैतन्यस्य च सन्न्यासविधिः सन्न्यासग्रहणम् एतत् त्रितयं मातॄणां कौशल्यायशोदाशचीनां त्रयस्य सोढव्यं सह्यं कर्त्तव्यम् ।

(ज) तया शचीदेव्या । एतत् चैतन्यस्य प्रव्रजनम् । पुरैव पूर्वमेव । सः चैतन्यः ज्येष्ठस्य भ्रातुः वर्त्म पन्थानं सन्न्यासाश्रमरूपम् । लोकोत्तरचरितानाम् अलौकिकचरित्रशालिनाम् । काठिन्यकारुण्ये निर्दयत्वदयत्वे ।

सन्न्यासकृच्छमः शान्तो निष्ठाशान्तिपरायणः।

इति नामानि देवोऽयं यथार्थान्यधुनाऽकरोत्॥ (क)

अपिच, अस्मिन्नेव हि भगवति! यथार्थमभवन्महावाक्यम्। मुख्यार्थतया हि तया जहदजहत्स्वार्थलक्षणा नाम॥(ख)

आचार्य्य! आमूलतः कथय।

आचा। हन्त! एतदर्थमेव जीवितं मया। तदितो निशाऽवसाने नृत्योपरमसमय एव मत्करमालम्ब्य कतिचित्पदानि गच्छन्नग्रे नित्यानन्ददेवमालोक्य "त्वमप्येहि" इति सङ्केतं कृत्वा सुरधुनीमुत्तीर्य्य चलितवान्। मयोक्तम्। देव! कथय कथमेकाकिना कुत्र गम्यत इति तदनाकलयन् तूष्णीमेव चलन्ननुपदमावाभ्यामनुगम्यमान एव काटोयानामानं ग्राममासाद्य केशवभारतीयतीन्द्रमुपसेदिवान्। तदावाभ्यामात्मगतमेव विचिन्तितम् "भगवान्

(क) सन्न्यासेति। अयं देवः अधुना सन्न्यासकृत् सन्न्यासकरः शमः शमगुणः यस्य तथोक्तः, शान्तः शमगुणावलम्बो तथा निष्ठायाम् अन्ते या शान्तिः तत्परायणः तदेकाश्रयः इति यथार्थानि अर्थमनुगतानि नामानि नामत्रयम् अकरोत् इत्यादिरर्थः।

(ख) अस्मिन्नेव। भगवति चैतन्यदेवे। तया मुख्यार्थतया अभिधेयार्थतया। जहदिति जहत्स्वार्थलक्षणा अजहत्स्वार्थलक्षणा चेत्यर्थः जहत्स्वार्थलक्षणा हि तत्त्वलक्षणा तदुक्तं दर्पणे। अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये। उपलक्षणहेतुत्वात् एषा लक्षणलक्षणेति इयमेव जहत्स्वार्थेति च। अजहत्स्वार्थलक्षणा तु उपादानलक्षणा तदुक्तं तत्रैव। मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये। स्यादात्मनोऽप्युपादानादेषोपादानलक्षणेति इयमेव अजहत्स्वार्थेत्युच्यते इति।

तुर्य्याऽऽश्रमं परिजिघृक्षुः” इति चिन्तयित्वाऽपि प्रभुतेजसा पराभूताभ्यां न किञ्चिदपि वक्तुमशक्यत। परेद्यवि “आचार्य्यरत्न! त्वयैतस्य कर्म्मणः पूर्व्वक्रिया क्रियताम्” इत्युक्तेन मया भगवानवादि तत् किं कर्म्मेति। तदनु गदितं भगवता मयैतत् कर्त्तव्यमिति। समनन्तरं प्रतिपत्तिमूढेन मया मूकवदनुत्तरेन रोदितुमेव प्रवृत्तम्। समनन्तरमनायत्त्यैव विधिवद्विहितं सकलमेव कर्म्म। ततो यद्वृत्तं (ग) तद्वाचा वक्तुं न शक्यते।

सर्व्वे। आकर्ण्य सविषादम्। हा देव! कथमिदमध्यवसितम्। अथवा मद्विधानामेव दुःखद्रुम-फल-कालविलसितमिदं किमनुयोज्यन्ते प्रभुचरणाः। हन्त हन्त! श्रवणदशारूढमपि तन्नो मनः छन्तति कथमाचार्य्य! भवता दृष्टम्। इति वैक्लव्यं (घ) नाटयन्ति।

अद्वै। किं तावत्तदाश्रमसमुचितं नामाङ्गीकृतं भगवता।

आचा। कृष्णचैतन्य इति।

(ग) एतदर्थमेव एतन्निमित्तमेव। सुरधुनीं गङ्गाम्। अनाकलयन् अपश्यन्। तुर्य्याश्रमं चतुर्थाश्रमं सन्न्यासमित्यर्थः। परेद्यवि परस्मिन् दिवसे। एतस्य कर्म्मणः सन्न्यासस्य इत्यर्थः प्रतिपत्तिमूढेन इतिकर्त्तव्यताज्ञानरहितेनेत्यर्थः मूकवत् वर्णानुच्चारको मूकः तद्वत्। अनायत्त्या अवशतया। वृत्तं घटितम्।

(घ) अध्यवसितं प्रक्रान्तम्। अनुयुज्यन्ते तिरस्क्रियन्ते। तत् प्रभोर्घटनमित्यर्थः। छन्तति छिनत्ति कर्त्तयतीत्यर्थः। वैक्लव्यं कातर्य्यम्।

अद्वै। सचमत्कारम्। अहो! समुचितमेवैतत्।

कृष्णस्वरूपं चैतन्यं कृष्णचैतन्यसञ्ज्ञितः।

अत एव महावाक्यस्यार्थो हि फलवानिह॥ (ङ)

केशवभारती हि श्रुतिरेव तस्याः केशवस्य भारती-
त्वात्। यथा

मयाऽऽदौ ब्रह्मणे प्रोक्ता (च) धर्मो यस्यां मदात्मक इति।

अतः केशवभारतीप्रतिपादितं श्रुतिप्रतिपाद्यमेवेति
तत्कथयाऽऽचार्य! कथय।

किं तत्रास्ति? किमन्यतः स भगवान्?

आचा।——तत्कालमेव प्रभु-

र्धृत्वा मस्करिभूमिकां चलितवान्

अद्वै।——त्वामी किमप्युक्तवान्?।

आचा।

प्रेमान्धः स्खलिताक्षिरस्रुसलिलैर्निर्धौतवक्षःस्थलः

स्वात्मानमपि न वेद हन्त! किमसौ हा हन्त! मां वक्ष्यति॥
(छ)

(ङ) कृष्णस्वरूपमिति। यतः असौ विश्वम्भरः कृष्णस्वरूपं चैतन्यं ततः कृष्णचैतन्यसंज्ञितः कृष्णचैतन्यसंज्ञां प्राप्त इत्यर्थः। अतएव इह कृष्णचैतन्ये महावाक्यस्य श्रुतेः अर्थः परमात्मरूपः फलवान् हि।

(च) केशवभारती केशवस्य कृष्णस्य भारती वाणी। ईश्वरवाक्यस्यैव श्रुतित्वादिति भावः। मयेति मया आदौ सृष्टेः प्रागित्यर्थः यस्यां मदात्मकः मदेकपरः धर्मः उक्त इति शेषः सा श्रुतिः ब्रह्मणे प्रोक्ता कथिता।

(छ) किमिति। स भगवान् तत्र केशवभारतीयतीन्द्रसकाशे

अद्वै। भवान् कथं नानुगतः ?।

आचा। नित्यानन्दस्त्वकथयदिदं यामि देवस्य पश्चात्
पश्चादेनं पथि पथि परिभ्राम्य तैस्तैरुपायैः।
अद्वैतस्यालयमपि नयाम्येष याहि त्वमेतां
वार्त्तामार्त्तानुपहर सुखं प्रापयाद्वैतमुख्यान् ॥(ज)

अद्वै। धन्योऽसि नित्यानन्ददेव! धन्योऽसि। जितं भवता निष्कैतवसौहृदेन (झ) तदागच्छतानया वार्त्तया भगवतीं शचीं माश्वास्य वयमपि समुचितमाचराम। इति निष्क्रान्ताः सर्वे॥

सन्न्यासपरिग्रहो नाम चतुर्थोऽङ्कः॥

इत्यर्थः किमस्ति ? किम् अन्यतः अन्यत्र अस्ति ?। तत्क्षणमेव तदानीमेव मस्करिभूमिकां यतिवेशं धृत्वा चलितवान् प्रस्थितः। त्वां किमपि न उक्तवान् ? असौ विश्वम्भरः प्रेमणा भगवत्प्रीत्यतिशयेन अन्धः प्रेयान्तरप्रतीतिरहित इत्यर्थः अतएव स्खलिताङ्घ्रिः पदे पदे पतन्नित्यर्थः अश्रुसलिलैः वाष्पाम्बुभिः निर्धौतं क्षालितं वक्षस्थलं यस्य तथाविधः सन् स्वात्मानं निजस्वरूपञ्च न वेद, मां किं मन्यते ? कृन्तद्वयं का इति च खेदद्योतकमव्ययम्। शार्दूलविक्रीडितं वृत्तम्।

(ज) नित्यानन्द इति। नित्यानन्दस्तु इदम् अकथयत् अबोचत् यथा देवस्य श्रीकृष्णचैतन्यस्य पश्चात् यामि गच्छामि, पश्चात् एषः अहं तैः तैः उपायैः कौशलैः एनं देवं पथि पथि परिभ्राम्य भ्रामयित्वा अद्वैतस्य आलयमपि नयामि प्रापयामि, त्वं याहि गच्छ, आर्त्तान् दुःखितान् अद्वैतमुख्यान् अद्वैतप्रभृतीन् वार्त्तां संवादम् उपहर नय, सुखं प्रापय सुखिनः कुरु इत्यर्थः। मन्दाक्रान्तावृत्तम्।

(झ) निष्कैतव सौहृदेन अकपटप्रेमणा।

# पञ्चमोऽङ्कः ।

ततः प्रविशति श्रीकृष्णचैतन्यः पश्चान्नित्यानन्दश्च ।

श्रीकृष्णचैतन्यः । एतां समास्थाय परात्मनिष्ठा-
मध्यासितां पूर्वतमैर्महद्भिः ।
अहं तरिष्यामि दुरन्तपारं
तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ (क)

इति स्खलितं नाटयति ।

नित्या । स्वगतम् । अहो ! अद्भुतम् ।

प्रेमामृतं किल तथाविधमेव किन्तु
निर्वेदखेददहनेन शृतत्वमेत्य ।
आवर्त्यमानमिव गच्छति पिण्डभावं
कालेऽस्य हृद्व्रण इव व्यथनाय भावि ॥ (ख)

---

(क) एतामिति । अहं पूर्वतमैः अतिप्राचीनैः महद्भिः नारदादिभिरित्यर्थः अध्यासिताम् अवलम्बिताम् एतां परात्मनिष्ठां परमात्मविषयिणीमेकाग्रतामित्यर्थः समास्थाय अवलम्ब्य मुकुन्दस्य कृष्णस्य अङ्घ्रिनिषेवया चरणशुश्रूषयैव दुरन्तपारं दुस्तरमित्यर्थः तमः अज्ञानरूपं तरिष्यामि पारयिष्यामि । उपजातिर्वृत्तम् ।

(ख) प्रेमामृतमिति । अस्य प्रेमामृतं तथाविधमेव किन्तु, निर्वेदखेददहनेन वैराग्यरूपखेदाग्निना शृतत्वं क्वथितत्वम् एत्य प्राप्य आवर्त्यमानमिव आलोड्यमानमिव पिण्डभावं घनीभावं गच्छति, किन्तु काले कालवशादित्यर्थः हृद्व्रण इव हृदयस्य क्षतमिव व्यथनाय क्लेश-

तदेकाकिना मया किं क्रियते भवतु चिन्तयामि ।
इति पुनर्निरूप्य । अहो ! अद्भुतम् ।

नृत्योर्मीकः प्रकटितमहोल्लासहुङ्कारघोषः
स्वेदस्तम्भप्रभृतिविलसद्भावरत्नावलीकः ।
अन्तर्वेगः समजनि विभोः सोऽयमानन्दसिन्धु-
र्नो जानीमः परिणतिरहो ! भाविनी कीदृगस्य ॥ (ग)

अहो ! बलवता वातेन चालितः केशरपरागपुञ्ज इव चलत्येषो मयाऽपि सत्वरेणानुगन्तुं न शक्यते । विरत-सकलेन्द्रियवृत्तिस्तत इत एव गच्छत्यस्ति न तूद्देश्यपुरः-सरं (घ) क्वापि । तथाहि

यस्य यापि भवति तादृक् प्रेमातिशयस्य देहभावो हृद्व्रण इव दुःखाकरोतीति भावः । वसन्ततिलकं वृत्तम् ।

(ग) नृत्योर्मीक इति । नृत्यानि नर्त्तनानि ऊर्मयः तरङ्गा यस्य तथोक्तः प्रकटितः महता उल्लासेन हुङ्कार एव घोषः कलरवः यत्र तथाविधः, स्वेदस्तम्भप्रभृतयः सत्त्वगुणोद्रेकजनिता इति भावः । विलसन्तः स्फुरन्तः भावाः धर्मा एव रत्नावल्यः रत्नराशयः यत्र तथा-भूतः अन्तर्वेगः मनसि जनितरय इत्यर्थः; सः अयं विभोः गौराङ्गदेवस्य आनन्दसिन्धुः समजनि समुत्पन्नः, अहो आश्चर्यम् अस्य कीदृक् परि-णतिः भाविनी, नो जानीमः । मन्दाक्रान्तावृत्तम् ।

(घ) केशरेति केशरेषु किञ्जल्केषु किञ्जल्कः केशरोऽस्त्रियामित्य-मरः । यः परागपुञ्जः कौसुमरजसां चयः स इव एषः गौराङ्गदेवः । विरतेति विरता निवृत्ता सकलानाम् इन्द्रियाणां चक्षुरादीनां वृत्ति-र्व्यापारः यस्य तथाभूतः । गच्छत्यस्ति गच्छतीत्यर्थः । उद्देश्यपुरः-सरम् अभिप्रायपूर्वकम् ।

अपन्थाः पन्था वा न भवति द्वयोरस्य विषयः
किमुच्चं नीचं वा किमथ सलिलं वा किमु वनम् ।
प्रभिन्नोऽयं वन्यो गज इव चलत्येव न पुनः
पुरो वा पश्चाद्वा कलयति न चात्मानमपि च ॥ (ङ)

भवति हि,

आत्मारामाः किमपि दधते वृत्तिहीनेन्द्रियत्वं
प्रेमारामा अपि भगवतो रूपमात्रैकमग्नाः ।
स्वानन्दस्थो भवति यदि चेदीश्वरोऽपि क्व भेदो

ज्ञातं ज्ञातम्,

नित्यानन्दो भवति भगवान् जीव आनन्दनिघ्नः ॥ (च)

---

(ङ) अपन्था इति । अपन्थाः पन्थाः न, पन्था वा, उच्चं नीचं वा किम्? सलिलं वा किम्? अथ वनं वा किमु? एतत् सर्वमिति शेषः अस्य गौराङ्गदेवस्य द्वयोः चक्षुषोः विषयः न भवति । अयं देवः प्रभिन्नः मत्तः वन्यः गज इव चलति एव, दिग्विदिग्ज्ञानशून्य इति शेषः । पुरः अग्रतः वा, पश्चात् पृष्ठे वा आत्मानमपि च न कलयति न पश्यति । शिखरिणीवृत्तम् ।

(च) आत्मारामा इति । आत्मारामाः आत्मनि परमात्मनि रमन्ते इति तथोक्ताः प्रेमारामाः भगवत्प्रेमनिरता जनाः किमपि वृत्तिहीनेन्द्रियत्वम् इन्द्रियव्यापारशून्यत्वं दधते धारयन्ति, अपि किन्तु भगवतः कृष्णस्य रूपमात्रे एकमग्नाः केवलनिरताः केवलं कृष्णरूपं पश्यन्तीत्यर्थः। ईश्वरोऽपि कृष्णचैतन्योऽपि यदि स्वानन्दस्थः निजस्वरूप-मानन्दमेव पश्यतीत्यर्थः तदा क्व भेदः? को विशेषः जीवब्रह्मणोरिति शेषः । भगवान् ईश्वरः नित्यानन्दः स्वायत्तानन्दः आनन्दोपरिस्थ इत्यर्थः जीवः देही आनन्दनिघ्नः आनन्दस्य वशे तिष्ठतीत्यर्थः । एता-वानेवानयोर्भेद इति भावः । मन्दाक्रान्तावृत्तम् ।

तदिदानीं किं करोमि। इति क्षणं स्थित्वा।

नाहारोऽद्य दिनत्रयं न च पयः पानं किमन्याः क्रियाः
कौपीनैकपरिच्छदो निजसुखावेशैकमात्रानुगः।
गच्छन्नेव दिनं निशामपि विभुर्नो वेत्ति किं कुर्महे
हे गौराङ्ग! कृपानिधे! कुरु कृपामार्त्ते मयि प्रीयताम्॥(छ)

क्षणं स्थित्वा। एतेन किञ्चिदाश्वस्तमपि (ज) भवति चेतः। तद् यथा

आनन्दवैवश्यमिदं महाप्रभो-
र्बभूव नः सम्प्रति जीवनौषधम्।
विश्रामयन् वर्त्म विवेचनाक्षमं
नेष्येऽहमद्वैतविभोरिहानमुम्॥ (झ)

(छ) नाहार इति। अद्य दिनत्रयम् आहारः न, पयःपानम् जलपानञ्च न, अन्याः क्रियाः शयनासनादयः तासां किं वक्तव्यमिति शेषः। कौपीनमेव एकः परिच्छदः वेशः यस्य तादृशः निजसुखावेशः स्वानन्दानुभव एव एकमात्रः अनुगः अनुचरः यस्य तथाभूतः, एष विभुः गच्छन् एव दिनं निशामपि नो वेत्ति नानुभवति, किं कुर्म हे? हे गौराङ्ग! कृपानिधे! करुणामय! कृपां कुरु, प्रीयतां प्रसन्नेन भूयताम्। शार्दूलविक्रीडितं वृत्तम्।

(ज) एतेन वक्ष्यमाणाभिसन्धिनेत्यर्थः। आश्वस्तं शान्तियुतम्।

(झ) आनन्देति। इदं महाप्रभोः आनन्दवैवश्यम् आनन्दाधीनत्वं सम्प्रति इदानीं नः अस्माकं जीवनौषधं प्राणधारणभेषजं बभूव यतः अहं विवेचनाक्षमं दिग्विदिग्ज्ञानवर्जितममुं वर्त्म पन्थानं विश्रामयन् भूषयन् अद्वैतविभोः इह गृहान् नेष्ये प्रापयिष्यामि।

चापल्यजाड्योभयवच्च कश्चित्

कश्चिद्ग्रहग्रस्ततया समानः ॥ (ङ)

तदिदानीं चरमावस्थ इव (ढ) भगवत आनन्दोन्मादो जातः। तथाहि

उन्मील्य दृशौ पश्यति न किमपि विषयीकरोत्येषः।

अर्द्धबधिर इव किञ्चिच्छृणोति न तदर्थमुपयाति ॥ (ण)

भगवान्। पाणिकमलेन तेषां शिरः परामृश्य। अये! साधु कीर्त्तितं भवद्भिर्भगवन्नाम कृतार्थीकृतश्चाहम्। तज्जानीत वृन्दावनं केन पथा गम्यते।

सर्वे। [illegible]। अयमवसरो मम। इति तेषां मध्यादेकमानीय। तात। एष मार्गो वृन्दावनस्येति कथय।

बालकः। अह आणवेदि भअवं (१)। इत्युपसृत्य। भो

(१) यथा आज्ञापयति भगवान्।

---

(ङ) अर्थः। [illegible] निरतिशयं यथा तथा चापल्यवत् कश्चित् जाड्यवत् जाड्यवत्, कश्चित् चापल्यजाड्योभयवत् चापल्यं जाड्यञ्च उभयं करोतीत्यर्थः, कश्चित् ग्रहग्रस्ततया भूताद्याविष्टतया समानः तुल्यः भूताद्यावेशवत् विकारं जनयतीति भावः। आनन्दजनितोन्मादेन कोऽपि इतस्ततः स्वेच्छं सञ्चरति, कोऽपि निश्चलवत् तिष्ठति, कश्चन कदापि चापल्यं कदापि वा निश्चलत्वं करोति, कश्चन ग्रहाविष्टवत् व्यवहरतीति वर्णनार्थः। इन्द्रवज्राछन्दः।

(ढ) चरमावस्थ इव परां कोटिमधिरूढ इव।

(ण) उन्मील्येति। एषः प्रभुः दृशौ चक्षुषी उन्मील्य पश्यति, परं किमपि वस्तु न विषयीकरोति नाभिनिवेशं न पश्यतीत्यर्थः। अर्द्धबधिर इव प्रायशः कोलाहलश्रवणे नेत्यर्थः किञ्चित् शृणोति परं तदर्थं तस्य शब्दस्य अभिप्रायं न उपयाति आवधारयति।

इति साश्वासमनुमन्यते। नेपथ्ये। हरिं वद हरिं वद। इति सम्भूय (ञ) कोलाहलः।

नित्या। पुरोऽवलोक्य। अये! अद्भुतमिदम्। यदमी गोरक्षबाला (ट) भगवन्तमालोक्य सकौतुकाऽऽदरभक्ति-श्रद्धानन्दचमत्कारं हरिं वद हरिं वद। इति उच्चैर्जल्पन्ति।

भगवान्। पूर्वाभ्यासेन हरिध्वनिं श्रुत्वा किञ्चिदानन्दसुप्तोत्थित इव हरिध्वन्यनुसारिणीं दिशं नयनकमले समुन्मील्यावलोकयति।

नित्या। निरूप्य। अहो! उपकृतं गोरक्षशिशुभिः यदमीषां हरिध्वनिमाकर्ण्य किञ्चित्तरामानन्दनिद्रोत्थित इवायं महामन्त्राकृष्ट इव फणिदष्टस्तमेव पन्थानमनुसर्पति। (ठ)

भगवान्। उपसृत्य। ब्रूत भो! ब्रूत हरिम्। इति पुनः पुनः प्रजल्पति।

प्रविश्य गोरक्षकाः शिशवः परितो दण्डवन्नत्वा करतालिकाभिर्हरिसङ्कीर्तनं कुर्वन्ति। भगवान् तन्मधुरमाकर्णयन् मुहूर्तं प्रत्यानतो विरमति।

नित्या। सानन्दम्।

उन्माद आनन्दकृतो हि नाना-
चापल्यकृच्चापलदृश्यमन्दम्।

---

(ञ) सम्भूय मिलित्वा।

(ट) गोरक्षबालाः गोपशिशवः।

(ठ) गोरक्षशिशुभिः गोपबालकैः नीतः पान्थोऽर्भकोऽपि इव प्रकारः। फणिदष्टः सर्पदष्टः। अनुसर्पति अनुसरति।

(ड) उन्माद इति। आनन्दकृतः आनन्दजनितः उन्मादः चित्तविकारविशेषः नाना हि विविध एव कथाचित् किंचित् चपला।

भअवन्! एसो मग्गो बुन्दावणस्स (१)। इति नित्यानन्दोपदिष्टमार्गं दर्शयति।

भगवान्। सानन्दावेशं तमेव मार्गमनुक्रामति।

शिष्याः। प्रणम्य निष्क्रामन्ति।

नित्या। हन्त! निस्तीर्णोऽस्मि। सम्प्रति सम्पत्स्यते मे मनोरथः। यदनेन पथैवाद्वैतवाटीमासादयितुं शक्यते। इति तेन पथा तमनुगच्छन् कियद्दूरं गत्वा सपरामर्शम्। अहो! कथमहं न परिचीये परपरिचयदशा किञ्चित्तरामिवास्य जाताऽस्ति तत् परीक्षे (त) च निजसौभाग्यम्। इति निकटमुपसर्पति।

भगवान्। "एतां समास्थाय परात्मनिष्ठाम्"।

इत्य् द्विः पुनः पठित्वा। अहो! सम्यग्गीतं भिक्षुणा। "मुकुन्दसेवयैव तमस्तरिष्यामि न त्वनया परात्मनिष्ठया" अस्या आस्थामात्रं कार्य्यं न त्वेषैवोद्देश्या तद्वृन्दावनं गत्वा मुकुन्दसेवैव मानसो कर्त्तव्या (थ)। इति आकाशे लक्ष्यं बद्ध्वा। हहो! कियद्दूरे वृन्दावनम्?।

---

(१) भो भगवन्! एष मार्गो वृन्दावनस्य।

(त) निस्तीर्णः निस्तारं प्राप्तः। सम्पत्स्यते सेत्स्यति। सपरामर्शं सवितर्कम्। परिचीये परिचितोऽस्मि प्रभुणेति शेषः। परपरिचयदशा परज्ञानावस्था किञ्चित्तराम् ईषदित्यर्थः। गोपबालकानां दर्शनेनेति भावः। परीक्षे पश्यामि।

(थ) भिक्षुणा सन्न्यासिना केशवभारतीयतीन्द्रेणेति भावः आत्मा परात्मनिष्ठया परात्मविवेकेनेत्यर्थः। अस्या परात्मनिष्ठायाम् आस्थामा-

नित्या । उपसृत्य । देव ! दिवसैकप्राप्यमस्ति वृन्दावनम् ।

भगवान् । स्वप्नजागरयोरन्तरालदशामापन्न इव सचमत्कारम् । कथमहो ! श्रीपादनित्यानन्दोऽसि ? । (द)

नित्या । देव ! स एवाहम् । इत्यञ्जलौ वासस्तवकबद्धस्तिष्ठति ।

भगवान् । श्रीपाद ! कथय कुतो भवन्तः ? ।

नित्या । देवस्य वृन्दावनजिगमिषामाश्रुत्य मयाऽपि तद्दिदृक्षया (ध) चलता भगवत्सङ्गो गृहीतः ।

भगवान् । भद्रं भो ! भद्रम् । एहि सहैव गच्छाव इति सानन्दं गच्छति ।

नित्या । भगवन्नितः । इति कियद्दूरं नीत्वा । भगवन् ! इतः कियद्दूरे यमुना भगवती वर्त्तते तदवगाहनं कर्त्तुमुचितम् ।

भगवान् । हन्त ! यमुनाऽद्य विलोकितव्या ।

नित्या । अथ किम् ?

भगवान् । हर्षं नाटयित्वा श्रीपाद ! क्व सा ।

नित्या । इत इतः । इति कियद्दूरं नीत्वा गङ्गामादाय । भगवन्नियं यमुना ।

भगवान् । सानन्दं प्रणम्य स्तौति ।

त्वम् आपन्नमात्मन् । एषा एव परोक्षनिष्ठा एव उद्देश्या अभिवन्दनीया । मानसीकर्त्तव्या उद्देश्यविषयीकर्त्तव्येत्यर्थः ।

(द) श्रीपादेति श्रीयुक्तौ पादौ चरणौ यस्य तथाविधः तदुपाधिको वा नित्यानन्द इति विग्रहः ।

(ध) आश्रुत्य आकर्ण्य तद्दिदृक्षया वृन्दावनदर्शनेच्छया ।

चिदानन्दभानोः सदा नन्दसूनोः
परप्रेमपात्री द्रवब्रह्मगात्री।
अघानां लवित्री जगत्क्षेमधात्री
पवित्रीक्रियान्नो वपुर्मित्रपुत्री॥ (न)

नित्या। भगवन्नवगाह्यतामियम्।

भगवान्। यथाऽऽदिष्टम्। इति स्नानमभिनयति।

नित्या। स्वगतम्। अहो! निर्वृतोऽस्मि महामत्तवन्य-कुञ्जरो मन्त्रेणैव वशीकृतः। तत्परिशेषमस्य कर्म्मणः (प) किमप्यस्ति तदपि सम्पादयामि। इति परितोऽवलोक्य कश्चि-दाह्वयति।

प्रविश्य कश्चित्पुरुषः प्रणमति।

नित्या। जनान्तिकम्। भद्र! इदमनतिदूरे पारेगङ्गं भगवतोऽद्वैतस्य पुरम्। त्वमितस्त्वरितं गत्वा विज्ञापय "नित्यानन्दः केनचिदन्येन सन्न्यासिना सह निकटवर्त्ती भवन्तमपेक्षते तत्त्वरताम्"। (फ)

(न) चिदानन्दभानोरिति। चिदानन्दभानोः ज्ञानानन्दसूर्यस्य नन्दसूनोः श्रीकृष्णस्य सदा परप्रेमपात्री परमप्रेमनिलया द्रवब्रह्म-गात्री ब्रह्मगात्रद्रवमयीत्यर्थः अघानां पापानां लवित्री छेदिनी जगतां क्षेमधात्री मङ्गलजननी मित्रपुत्री सूर्य्यतनया यमुना नः अस्माकं वपुः शरीरं पवित्रीक्रियात् पवित्रं करोतु। भुजङ्गप्रयातं वृत्तं भुजङ्ग-प्रयातं चतुर्भिर्यकारैरिति तल्लक्षणात्।

(प) निर्वृतः निर्वृतिं प्रीतिं प्राप्तः। यतः महान् मत्तः वन्यकुञ्जरः अरण्यगजः गौराङ्गदेव इति भावः मन्त्रेण कं.शलेन। अस्य कर्म्मणः वन्यगजवशीकरणस्य इत्यर्थः।

(फ) पारेगङ्गं गङ्गायाः पारे। अपेक्षते प्रतीक्षते। त्वरतां त्वरया आगच्छतु इत्यर्थः।

पुरुषः । एषोऽहं तथा करोमि । इति सत्वरं निष्क्रान्तः ।

निन्दा । स्वगतम् । अहो ! मम दिनत्रयं जातं जल-स्पर्शोऽपि न जातस्तदहमपि स्नामि । इति तथा करोति ।

नेपथ्ये । आशापाशद्विगुणवलितैस्तस्य पैरेव बद्धाः

प्राणा नो यद्विरहविधुरा हन्त ! गन्तुं न शेकुः ।

सम्प्रत्येतैरुपकृतमहो ! तन्मुखं दर्शयद्भि-

र्दिष्टे दीष्टे भवति सहसा हन्त ! वामोऽप्यवामः ॥ (ब)

निन्दा । दूरादाकर्ण्य । अहो ! आचार्य्य एवायं प्रस्तौति तत्सुविहितमेव विधिना अतःपरं ममातिभारो लघूभूतः (भ) । भगवन्तमालोक्य । अहो ! कष्टम् ।

---

( ब ) आशेति । यस्य गौराङ्गस्य विरहेण विच्छेदेन विधुराः कातराः नः अस्माकं प्राणाः आशाः तत्प्राप्त्यभिलाषा एव पाशा रज्जवः ताभिः द्विगुणं दृढमित्यर्थः वलितैः बद्धैः तस्य भगवतो गुणैः अस्मासु प्रकटितैर्दयादाक्षिण्यादिभिरेव बद्धाः सन्तः, हन्त ! खेदे गन्तुं न शेकुः नागच्छन्नित्यर्थः । तद्विरहे गमनस्य औचित्येऽपि केवलं तद्गुणस्मरणेन तत्प्राप्त्याशया स्थिता इति भावः । सम्प्रति एतैः प्राणैः यस्य भगवतः मुखं दर्शयद्भिः सद्भिः उपकृतम् उपकारतः कृतः, अहो ! आश्चर्य्यं दिष्टे दैवे दैवं दिष्टं भागधेयमित्यर्थः दृष्टे अनुकूले सति सहसा वामोऽपि प्रतिकूलोऽपि अवामः अनुकूलः भवति हि भवत्येव हन्तेति हर्षस्तवकमव्ययम् । पूर्वं तद्विरहे प्राणधारणं प्रतिकूलमासीत् सम्प्रति तदेव तन्मुखदर्शनात् अनुकूलं जातमिति दैवानुकूल्येन वामस्यावामत्वमिति भावः । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । तदुक्तं दर्पणे । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति । मन्दाक्रान्तावृत्तम् ।

(भ) प्रस्तौति प्रस्तावं करोति निगदतीत्यर्थः । लघूभूतः

अम्भःस्यन्दैः स्तिमितवपुषं लज्जयाऽभ्यासहानेः
कौपीनाच्छादनमपि न निर्गाल्य निःसारिताम्बुम् ।
देवं रक्ताम्बुजदलचयैश्छाद्यमानोत्तमाङ्गं
स्नानोत्तीर्णं करिवरमिव स्वर्णगौरं निरीक्षे ॥ (म)

तदाकलयामि कियान् विलम्बोऽर्हतागमनस्य । इति पुरोऽवलोकयति ।

ततः प्रविशति उत्कण्ठां नाटयन् परितोऽपरिमितपरिवारोऽर्हतः ।

अर्हतः । पुरोऽवलोक्य । अहो ! अयमयं देवः ।

चूडावियोगाद्वर्णेन वाससा
दूरादसौ चेदनसाविवेक्ष्यते ।
तथाऽपि हेमप्रतिमेन तेजसा
लावण्यभूम्नाऽपि स एव भाति नः ॥ (य)

स्नानसमापनः आचार्यसाहाय्यप्राप्तिरिति भावः ।

(म) अम्भ इति । अम्भसां जलानां स्यन्दैः स्रावैः स्तिमितवपुषम् आर्द्रीकृतदेहम् अभ्यासहानेः अभ्यासक्षयात् लज्जया अभ्यासक्षयो माभूदित्याशयेनेत्यर्थः सवत्रासिनो गात्रेभ्यः कौपीनादिभ्यश्च स्नानादिजलं न निष्कासयन्तीति भावः । कौपीनाच्छादनं कौपीनम् आच्छादनञ्चापि निर्गाल्य निष्पीड्य न निःसारितानि अम्बूनि येन तथोक्तम् अतएव रक्ताम्बुजदलानां रक्तपद्मपत्राणां चयैः छाद्यमानम् आव्रियमाणम् उत्तमाङ्गं शिरो यस्य तादृशम् आच्छादनवमनस्य रक्तत्वादिति भावः स्नानोत्तीर्णं करिवरमिव गजेन्द्रमिव स्वर्णगौरं देवं निरीक्षे पश्यामि । मन्दाक्रान्तावृत्तम् उपमालङ्कारश्च ।

(य) चूडावियोगादिति । चूडावियोगात् शिखाकर्त्तनात् मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजट इति वचनात् यतीनां मुण्डत्वं

अहो ! प्रतिरम्यम् ।

रक्ताम्बरं कनकपीतमिदं तदेव
देवस्य पश्यत वपुः सदृशीकरोति ।
गौराङ्गस्य परिपक्वमहारसस्य
वैराग्यसारसहकारफलस्य लक्ष्मीम् ॥ (२)

इति त्वरमाण उपसृत्य ध्यानामीलितनयनस्य भगवतः पुरो-ऽवस्थाय मुक्तकण्ठं रोदिति ।

भगवान् । सत्वरमक्षिणी समुन्मील्य । कथममी अद्वैता-चार्यमहानुभावाः ? ।

नित्या । भगवन् ! एवमेतत् ।

भगवान् । गाढं परिष्वज्य कथय कथमिहस्थोऽहं भवद्भि-रवगतः कथं वा ममानुपदमेव भवानपि वृन्दावनमनु-प्राप्तः । अथवा ममैवायं स्वप्नः ।

अद्वै । सवाष्पमात्मगतम् । अहो ! देवस्यात्र वृन्दावनप्रती-

जटिलत्वं वा शिखाजटत्वं विच्छिन्नम् अस्य तु सन्न्यस्तत्वावलम्बनात् शिखा-वियोग इति भावः । अरुणेन रक्तेन वाससा आच्छादनेन विशेषेण लतीया असौ देवः दूरात् चेत् यदि च अनघो इव अदेव इव दृश्यते, तथापि तथापि हेमप्रतिमेन काञ्चनसदृशेन तेजसा लावण्यभूम्ना प्रभाविशेषातिशयेन अपि मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इति । स एव गौराङ्ग एव नः अस्माकं भाति प्रतिभासते ।

(२) रक्ताम्बरमिति । देवस्य तदेव कनकपीतं काञ्चनगौरमिदं रक्ताम्बरं वपुः गौराङ्गस्य परिपक्वमहारसस्य वैराग्यमेव सारो यस्य तादृशं यत् सहकारफलम् आम्रफलं तस्य लक्ष्मीं श्रियं सदृशीकरोति अनुकरोति पश्यत अवलोकयत यूयमिति शेषः । वसन्ततिलकं वृत्तम् ।

तिरेव जाताऽस्ति प्रकाशं देव! नायं ते स्वप्नः। अपि तु स एवाहं पामरः (ल)। इति स्खलितं नाटयति।

देवः। बाहुभ्यामालिङ्ग्योत्थापयन् सचाष्यम्। भवतु भो अद्वैत! त्वमेव वृन्दावनं त्वय्यनवरतं भगवत्पादकमल-संयोगात्। तत् कथय कुताऽऽगतोऽसि।

अद्वै। इयं भगवती भागीरथी इदमिदं पारे (व) मदीयं पुरम्।

भगवान्। वहिर्वृत्तिं नाटयित्वा। श्रीपाद! भवता यमु-नेयमित्यभाणि। (श)

नित्या। अस्यां यमुना वर्त्तते न देव एव जानातु।

भगवान्। श्रीपादस्य नाट्येनैव नाटितोऽस्मि। (ष)

अद्वै। आशापाशेत्यादि यच्छब्दे तच्छब्दे च त्वच्छब्दं दत्त्वा पुनः पठति। (स)

नित्या। भो अद्वैत! अस्य दण्डग्रहणावधि ममैव दण्डो जातः। दिनत्रयमाहारविरहात्। देवस्य तु

(ल) अत्र प्रदेशे। पामरः मूर्खः।

(व) इदं पारे अस्याः पारे।

(श) वहिर्वृत्तिं बाह्येन्द्रियव्यापारम्। अभाणि उक्ता।

(ष) नाट्येन अभिनयेन नाटितः अभिनीतः। यथा कश्चित् तिर्य्यञ्चं नर्त्तयति तद्वत् मां नित्यानन्दो नाटितवानिति भावः।

(स) यच्छब्दे तच्छब्दे इति आशापाशेति तद्गुणैरिति त्वद्गुणै-रिति यद्विरहविधुरा इति त्वद्विरहविधुरा इति तन्मुखमिति त्वन्मु-खमिति।

स्नानम्बुभोगेनैव हृष्टिस्तदलमत्र कथाप्रसङ्गतुङ्गिम्ना। (छ)

अद्वै। परिजनकरात् प्रत्यग्रकौपीनाच्छादने (च) आनीय पुनर्भगवन्तं स्नापयित्वा धारयति सकरुणम्।

देवोचितञ्च परिधापितमस्ति पूर्वं
भिक्षूचितञ्च वसनं परिधापयामि।
लक्ष्मीः समा तव समश्च मुखप्रसादो
हा हन्त! नो नयनयोर्विषमं तदेतत्॥ (ज)

तदिदमनतिदूरमेव मे भवनं तदलङ्कर्त्तुमर्हन्ति भगवच्चरणाः।

भगवान्। एतदर्थमेव श्रीपादेनाहं (झ) प्रतारितोऽस्मि।

अद्वै। भगवान् कस्यापि प्रतार्य्यो न भवति किन्तु।

(छ) पथ्यप्रश्नावधि सन्न्यासग्रहणमारभ्य। कथाप्रसङ्गतुङ्गिम्ना कथाप्रसङ्गानां विस्तारेण।

(च) प्रत्यग्रकौपीनाच्छादने अभिनवे कौपीनोत्तरीये।

(ज) देवोचितमिति। पूर्वं देवस्य उचितं वसनमितिशेषः परिधापितम् अस्ति, साम्प्रतं भिक्षूचितञ्च वसनं कौपीनाच्छादनमित्यर्थः परिधापयामि। हे भगवन्नित्याध्याहार्य्यं तव लक्ष्मीः श्रीः समा, मुखप्रसादः समश्च उत्तमवसने यादृशी श्रीर्मुखप्रसादश्च कौपीनाच्छादनेऽपि तादृशेवेति भावः। हा हन्त! इति खेदसूचकमव्ययं तदेतत् पूर्वतनमिदानीन्तनञ्च परिच्छदवैषम्यमित्यर्थः नः अस्माकं नयनयोः विषमं विरुद्धं कष्टकरमित्यर्थः। वसन्ततिलकं वृत्तम्।

(झ) एतदर्थमेव तव भवनगमनार्थमेव। श्रीपादेन नित्यानन्देन।

इष्टोऽपि स्यात् प्रकृतिविधुरः स्वीयया माययैव
स्वच्छन्दोऽपि स्फटिकमणिवत् सन्निकृष्टेन योगात्।
इत्थं केचिद्वयमिह किल ब्रूमहे बालखेला-
प्रायं लीलाविलसितमहो! सर्वमीशस्य सत्यम्॥ (ग)

उभयथैव न प्रतार्य्योऽसि। अस्य च नैष दोषः श्री-पादत्वात्। श्रियं पातीति श्रीपः कृष्णः तमाददातीति तथैवानेन कृतं तदग्रे भवन्तु (घ) भगवन्तः। अद्य प्राथमिकी भिक्षा ममैवालये भवतु भगवतः।

भगवान्। यथा रुचितं भवते। तदादिश पन्थानम्।

अद्वै। इत इतः। इति नावमारोपयति।

नित्या। अपवार्य्य। भो अद्वैत! नवद्वीपे कश्चित् प्रहितोऽस्ति।

अद्वै। अथ किम्। सर्वे समागतप्राया एव।

(ग) ईश इति। स्वच्छन्दोऽपि स्वायत्तोऽपि ईशः ईश्वरः सन्निकृष्टेन सन्निहितेन केनचित् वस्तुनेति शेषः योगात् स्फटिकमणिवत् स्फटिकोपल इव स्वीययैव मायया प्रकृतिविधुरः विभिन्नप्रकृतिरित्यर्थः स्यात् यथा स्फटिकं वस्त्वन्तररागसंक्रमणात् अन्यदिव वस्तु प्रतिभाति तथा मायायोगात् ईश्वरोऽपि अन्य इव प्रतिभासते इति भावः। इह अस्मिन् जगति केचित् वयम् इत्थम् एवम्प्रकारम् ईशस्य सर्वं यथार्थं बालखेलाप्रायं बाल्यलीलानुरूपं लीलाविलसितं विलासचेष्टितं ब्रूमहे कथयामः किल अहो! आश्चर्य्यम्। मन्दाक्रान्तावृत्तम्।

(घ) उभयथा द्विप्रकारेण ईश्वरत्वेन श्रीपादकर्त्तृकेन अवतारनयनेन चेत्यर्थः। श्रीपादत्वात् श्रीपं लक्ष्मीपतिम् आददातीति स्वनाम्नोऽनुरूपाचरणादिति भावः। भवन्तु गच्छन्तु।

भगवान्। भो अद्वैत! अपूर्वं (ङ) नो भवद्भवनगमनम्।

अद्वै। श्रीवासस्येव क्व मे तादृशं सौभाग्यं यस्य भवने प्रतिदिनमेव देवितं (च) देवेन।

नित्या। भो अद्वैत! अतःपरं महीयसी लोकयात्रा भाविनी स्वयं प्रकाशिनी हि भगवद्वार्त्ता तत्रापि भगवतो मथुरागमनं प्रथितमस्ति। सम्प्रति त्वद्भवनसुभगम्भावुकभावुके भगवति सर्वं एवाऽऽबालवृद्धतरुणाः करुणापारावारमधुनैवामुमवलोकयितुं (छ) समागमिष्यन्ति लोकाः। तद्यावत् तेषां तथा प्रचारेण न भूयते तावदलक्षिता एव भवद्भवनं प्रविशाम।

अद्वै। एवमेव। इति कतिचित्पदानि परिक्रम्य। भो देव! इदमिदमस्मद्भवनं तावत् प्रविश। इति सर्वे प्रवेशं नाटयन्ति।

नेपथ्ये। विश्वम्भरः स भगवान् जननीं प्रतार्य,
 श्रुत्वा यतेरनुमतिं मथुरां यियासुः।
 व्याजेन शान्तिपुरमागमितः स नित्या-
 नन्देन भोः सकल भोः शतेनजाय॥ (ज)

---

(ङ) अपूर्वं प्रथममित्यर्थः।

(च) देवितं क्रीडितम्।

(छ) महीयसी अतिमहती, लोकयात्रा जनता बहुलोकसमागम इत्यर्थः। प्रथितं ख्यातम्। त्वद्भवनेति तव भवने सुभगम्भावुकः अतिप्रियान् भावुकः मङ्गलमयश्च तस्मिन् भगवति श्रीचैतन्ये। करुणापारावारं कृपासिन्धुम्।

(ज) विश्वम्भर इति। स भगवान् विश्वम्भरः जननीं मातरं शचीदेवीं प्रतार्य वञ्चयित्वा अनसुश्राव्य इत्यर्थः यतेः संन्यासिनः

नित्या। आकर्ण्य निरूप्य च। अद्वैत ! श्रुतं दृश्यताञ्च तदिहत्या एवैते सपद्येव परःसहस्रा (भ) बभूवुः। कियता विलम्बेन लक्षसङ्ख्या भविष्यन्ति। तदिह द्वारि दौवारिकै-र्भूयताम्।

अद्वै। प्रतिद्वारि दौवारिकाक्रियोच्च देशमयतः कृत्वा नित्यानन्देन सह प्रवेशं नाटयन् निष्क्रान्तः।

ततः प्रविशन्ति भगवद्दर्शनोत्कण्ठिताः पुरुषाः।

केचित्। नवद्वीपे यादृक् समजनि दृशोर्नः पदमसौ
तदन्याकारत्वं यदपि मनसः क्षोभजनकम्।
तथाप्युत्कण्ठा नः शिव ! शिव ! महत्येव वलते
ह्यनाकार्यं वस्तु प्रकृतिविकृतिभ्यां समरसम्॥ (ञ)

---

अनुकृतं यादृशं कृत्वा यतिभूत्वेत्यर्थः मथुरां यियासुः गन्तुमिच्छुः। यः नित्यानन्देन व्याजेन छलेन शान्तिपुरम् आगमितः प्रापितः, भो जनाः भो जनाः। दिदृक्षाय दर्शनाय चलत चलत गच्छत गच्छत। वसन्ततिलकं वृत्तम्।

(भ) इहत्या एतत्शान्तिपुरवासिन इत्यर्थः सपद्येव झटित्येव परःसहस्राः सहस्राधिकाः।

(ञ) नवद्वीपे इति। असौ विश्वम्भरः नवद्वीपे नः अस्माकं यादृक् दृशोः नयनयोः पदं समजनि जातः यादृशो दृष्टोऽस्माभिरिति भावः, यदपि यद्यपि तदन्याकारत्वम् तस्य तद्भिन्नाकारत्वं यतिरूपत्वमित्यर्थः मनसः अस्माकमिति शेषः क्षोभजनकं दुःखदायकम् अवस्थानादिति भावः। तथापि नः अस्माकं महती एव उत्कण्ठा तद्दिदृक्षा अस्माकमिति शेषः। वलते प्रबलीभवति, शिव शिवेति खेदजनकमव्ययम्। किं तथाहि अनाकार्यम् आकर्तुमशक्यं दुर्लभमित्यर्थः वस्तु प्रकृतिविकृतिभ्यां समरसं सम्यगास्वादनीयं दुर्लभं वस्तु स्वभावस्थितं यद्वत् मनोरमं भवति, विकृतौ स्थितमपि तथेत्यर्थः। शिखरिणीवृत्तम्।

तदधुना आनीम स्व भगवान् । इति परितः परिक्रामन्ति । अन्यतमां दिशि ।

अन्ये ।

पूर्वाश्रमे मधुरिमप्रथिमा य आसी-
दस्येश्वरस्य स दृशोरतिथिर्न नोऽभूत् ।
अद्यापि चेन्न स विलोक्यत एव तन्नो
धिग् ! जन्म धिग्वपुरहो ! धिगसून् ! धिगक्षि ! ॥ (ट)

अपरे । हन्त ! भो ! आगच्छतागच्छत । भगवानद्वैतपुरं प्रविष्ट इति श्रुतं तत्रैव प्रविशाम । इति सोत्कण्ठमुपसृत्य । अहो ! अमी दौवारिकाः सर्वानेव निवारयन्ति । भद्रममी एवानुनेया दातव्यञ्च किञ्चिदेतेभ्यः । इति निकटमुपसर्पन्ति ।

ततः प्रविशन्ति वेत्रपाणयो द्वारोपान्तनिविष्टा दौवारिकाः ।

दौवा । अरे पुरुषाः ! क्षणं विलम्बन्तां यावत्तुरीयाश्रमपरिग्रहः (ठ) कृतो भगवता तावदनाहारेणैव स्थीयते ।

(ट) पूर्वाश्रमे इति । पूर्वाश्रमे गार्हस्थ्ये अस्य ईश्वरस्य यः मधुरिमप्रथिमा माधुर्य्यविकाशः आसीत् सः अस्माकं दृशोरतिथिः नो अभूत् न, अपितु अभूदेव अस्माभिः सः प्रत्यक्षीकृत इति भावः चेत् यदि अद्यापि स मधुरिमप्रथिमा नैव विलोक्यते दृश्यते अस्माभिरिति शेषः तत् तदा नः अस्माकं जन्म धिक् वपुः शरीरं धिक् असून् प्राणान् धिक् अक्षि नेत्रञ्च धिक् अहो ! इति खेदसूचकमव्ययम् । वसन्ततिलकं वृत्तम् ।

(ठ) तुरीयाश्रमपरिग्रह इति । तुरीयस्य चतुर्थस्य आश्रमस्य सन्न्यासाश्रमस्येत्यर्थः ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये आश्रमोऽस्त्रीत्यमरः । परिग्रहः ग्रहणं स्वीकरणमित्यर्थः ।

अद्यैव भिक्षा भविष्यति । तदधुना कोलाहलो न कार्यः । उपविश्य स्थीयतां भिक्षोत्तरं भगवानवलोकनीयः ।

नेपथ्ये । भगवच्छ्रित इतः ।

दौवा । निरूपयामि । इति समुच्छ्रितं (ड) स्थलमारुह्य उड्डीयिकमालोक्य च । अये ! कृतभिक्ष एव भगवान् । यदयम्

श्रीखण्डपङ्कपरिलिप्ततनुर्नवीन-
शोणाम्बरो धवलमाल्यविराजिवक्षाः ।
हेमद्युतिर्विजयते हिमसान्ध्यराग-
गङ्गाप्रवाहरुचिभागिव रत्नसानुः ॥ (ढ)

तदेते समुत्कण्ठिताः कथममी दृश्यन्ते । इति पुनर्निभाल्य । अहो ! साधु समाहितमदैतदेवेन यदनेनायमुत्त-तरामुपकारिकान्तर्गोपितो भगवान् । तदधुना सर्वे सुखं द्रक्ष्यन्ति स्वनाम च यथार्थं तदनयोपकारिकयाऽकारि (ण) । पुरुषाः सर्वे श्रीकण्ठं हरिं वदेति सम्भूय निगदन्ति ।

(ड) समुच्छ्रितं सम्यक् उन्नतम् ।

(ढ) श्रीखण्डेति । श्रीखण्डपङ्केन चन्दनरसेन परिलिप्ता अनुलिप्ता चर्चिता इत्यर्थः तनु शरीरं यस्य तथोक्तः, नवीनं नूतनं शोणं रक्तम् अम्बरं वसनं यस्य तथाविधः । धवलेन माल्येन विराजि शोभमानं वक्षः वक्षःस्थलं यस्य तादृशः तथा हेमद्युतिः काञ्चनप्रभः अतएव हिमेन सान्ध्यरागेण सन्ध्याकालजनितरक्तिम्णा गङ्गाप्रवाहेण च या रुचिः दीप्तिः तां भजते इति तथाविधः रत्नसानुरिव रत्नमयः पर्वतैकदेश इव विजयते विराजते इत्यर्थः । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ।

(ण) समाहितं सम्पादितं कृतमित्यर्थः । उपकारिका पटमण्ड-

ततः प्रविशति यथार्थनिर्दिष्टोपकारिकोऽतत्त्वोपदिष्टो भगवानद्वैताद्वयश्च ।

अद्वै । केयं लीला व्यरचि भवता योऽयमद्वैतभाजा-
मत्यन्तेष्टस्तमधृत भवानाश्रमं यत्तुरीयम् ।

भगवान् विहस्य,

भो अद्वैत ! स्मर किमु वयं हन्त ! नाद्वैतभाजो
भेदस्तस्मिंस्त्वयि च यदियान् रूपतो लिङ्गतश्च ॥ (त)

अद्वै । वागीश्वरेण किमुचितं वचनानुवचनम् । (थ)

भगवान् । तत्ततोऽवधारयन्तु ।

विना सर्वत्यागं भवति भजनं न ह्यसुपते-
रितित्यागोऽस्माभिः कृत इह किमद्वैत ! कथया ।
अयं दण्डो भूयात् प्रबलतरसो मानसपशो-
रितीवाहं दण्डग्रहणमविशेषादकरवम् ॥ (द)

---

थम् । यथार्थमिति प्रभुदर्शनदानेनोपकारकरणादिति भावः ।

(त) केयमिति । भवता का इयं लीला व्यरचि विरचिता अव-लम्बितेत्यर्थः यत् यः अयम् अद्वैतभाजाम् अद्वैतवादिनाम् एकेश्वर-वादिनामित्यर्थः अत्यन्तेष्टः अत्यभिमतः, भवान् तं तुरीयं चतुर्थम् सन्न्यासाश्रमम् अधृत अवलम्बितवान् ? । भो अद्वैत ! स्मर वयं किमु न अद्वैतभाजः, यत् यतः तस्मिन् अद्वैते परब्रह्मणीत्यर्थः त्वयि च रूपतः लिङ्गतश्च इयान् एतावान् भेदः विशेषः, तदद्वैतम् अरूपम् अलिङ्गञ्च त्वं रूपवान् सलिङ्गश्चेति भेद इति भावः । तस्मात् वयम् आर्यैरवात् तव मतेन अद्वैतभाज एवेति फलितम् । मन्दाक्रान्ता-वृत्तम् । श्लेषालङ्कारः ।

(थ) वागीश्वरेण वाक्पतिना ईश्वरेणेत्यर्थः वचनानुवचनं भङ्गि-क्रमेण प्रतिवचनमित्यर्थः ।

(द) विनेति । सर्वत्यागं विना असुपतेः प्राणपतेः ईश्वरस्येत्यर्थः

अद्वै । सर्वमिदं प्रतारणमेव किन्तु "सन्यासकर्षणम: शान्तो निष्ठाशान्तिपरायण" इत्यादि नाम्नां निरुक्त्यर्थमेवैतत् । (ध)

दौवा । पुरतः सर्वानवलोक्य । अहो ! आश्चर्यम् ।

एतावत्यपि दुर्गमे जनघटासङ्घट्टनोच्चावचे
सर्वैरेव यथासुखं प्रभुरसौ पारेपरार्द्धैर्नृभिः ।
अव्यग्रैरवकाशलम्भनसुखावस्थानमुख्यैर्यथा-
कामं लब्धतदीयपूर्णकरुणादृक्पातमुद्दीक्ष्यते ॥ (न)

न चेदमसंवादि (प) । यतः

---

भजनम् आराधनं नहि भवति, इति हेतोः अस्माभिः त्यागः सर्वेषामिति शेषः कृतः, हे अद्वैत ! इह अस्मिन् विषये कथया अन्यथा इति शेषः किम् ? अयं दण्डः सन्यासदण्डः मानसपशोः चित्तरूपस्य छागस्य भूयान् अतिमहान् प्रबलतरः दमयितेत्यर्थः इतीव हेतोः अहम् अविशेषात् सम्यगित्यर्थः दण्डग्रहणम् अकरवम् । मन्दाक्रान्ता-वृत्तम् ।

(ध) प्रतारणं प्रवञ्चनम् अमत्यागलक्षणमिति यावत् । निरुक्त्यर्थं साफल्यार्थमित्यर्थः । एतत् सन्यासग्रहणमित्यर्थः ।

(न) एतावतीति । एतावति एतादृशे दुर्गमे निविड़े इत्यर्थः जनघटानां जनसमूहानां सङ्घट्टनं सम्मेलनं तस्य उच्चावचे नानाविधत्वे इत्यर्थः भावप्रधानोऽयं निर्देशः उच्चावचं नैकविधमित्यमरः । पारेपरार्द्धैः परार्द्धसंख्यातीतैरित्यर्थः सर्वैरेव नृभिः अवकाशलम्भनेन अवसरप्राप्त्या यत् सुखावस्थानं तेन मुख्याः तैः अतएव अव्यग्रैः सद्भिः यथाकामं यथासुखं लब्धः प्राप्तः तदीयः ऐश्वरीय इत्यर्थः पूर्णः करुणादृक्पातः यस्मिन् तद् यथा तथा असौ प्रभुः उद्दीक्ष्यते ऊर्द्धं दृश्यते । शार्दूलविक्रीड़ितं वृत्तम् ।

(प) नचेति इदं दर्शनं नहि असंवादि नैव विफलमित्यर्थः ।

उत्तीर्णोऽद्य भवाब्धिरद्य पिहितं द्वारं यमस्यापि च
प्राप्तं मानुषजन्मलम्भनफलं तप्तञ्च सर्वं तपः ।
यद्देवः करुणाकटाक्षसरणोऽदर्शीति सर्वैरहो !
प्रत्येकं प्रथयद्भिरात्मसुभगीभावः समुद्घुष्यते ॥ (फ)

नेपथ्ये परितः कोलाहलः ।

पुरुषा । अहो ! अमी भगवज्जन्मस्थलीनिवासिनः (ब) सर्वे समागच्छन्ति तदधुना महता सम्मर्द्देन भवितव्यं वयमित इदानीमपसराम । इति सर्वे निष्क्रामन्ति ।

ततः प्रविशन्ति सर्वे नवद्वीपवासिनः ।

ते ।

अद्याऽऽन्ध्यं गतमेव नो नयनयोरद्य प्रसन्ना दिशः
शुष्काश्चापि जिजीविषाव्रततयः प्रोन्मीलयन्त्यङ्कुरान् ।
नष्टोऽन्तःकरणे च केनचिदहो ! चैतन्यमप्याहितं
येनास्माकमहो ! बताद्य भविता चैतन्यचन्द्रोदयः ॥ (भ)

---

(फ) उत्तीर्ण इति । अद्य भवाब्धिः संसारसागरः उत्तीर्णः, अद्य यमस्य द्वारमपि पिहितम् आच्छादितम् अद्य मानुषजन्मलम्भनफलं प्राप्तम् अद्य सर्वं तपः तप्तं चरितञ्च यत् यतः करुणाकटाक्षसरणः कृपादृष्टिप्रद इत्यर्थः देवः अदर्शि दृष्टः अस्माभिरिति प्रथयद्भिः प्रकाशयद्भिः वदद्भिरित्यर्थः सर्वैः एतैः जनैः प्रत्येकम् आत्मनः सुभगीभावः सौभाग्यं समुद्घुष्यते सम्यक्कीर्त्यते अहो आश्चर्यम् । शार्दूलविक्रीडितं वृत्तम् ।

(ब) भगवज्जन्मस्थलीनिवासिनः नवद्वीपवासिनः ।

(भ) अद्येति । अद्य नः अस्माकं नयनयोः आन्ध्यम् अन्धत्वं गतमेव निवृत्तमेव, चैतन्यं विना यदभावा जाताः, अद्य च नवप्रसन्ना

इति सोत्कण्ठमुपसर्पन्ति ।

अद्वै । आलोक्य ।

अग्रे निधाय भगवज्जननीं समीयुः

श्रीवासपण्डितमुखाः सुहृदस्त एते ।

अन्ये च बालतरुणस्थविराः किमन्य-

द्देशः स एष उदपादि स एष कालः ॥ (म)

भगवान् । सत्वरमवतारं नाटयति ।

दौवारिकाः । सादरं प्रवेशयन्ति ।

भगवान् । मातरं प्रणमति ।

माता । सभयभक्तिवात्सल्यपरितोष प्रवलिताश्रुपुलकगद्गदं संस्कृतेन ।

तदस्तत्वं विनष्टमिति भावः । अद्य दिशः प्रसन्नाः, चैतन्यं विना अस्माकं दिशः मलिना जाताः, अद्य तु तत्प्रसन्नत्वमिति भावः । अद्य शुष्काः चैतन्यं विनेति शेषः जिजीविषारहिततयः जीवनेच्छारहिताः, अस्माकमिति शेषः अङ्कुरान् प्ररोहान् उन्मीलयन्ति उत्पादयन्ति, अद्य नष्टे अन्तःकरणे केनचित् जनेन चैतन्यम् अपि आहितम् अर्पितं चैतन्यं विना अचेतना वयं पुनः सचेतनाः कृता इति भावः । येन अद्य अस्माकं चैतन्यचन्द्रस्य उदयः प्रकाशः भविता अस्माभिश्चैतन्यदेवो द्रष्टव्य इत्यर्थः अहोद्वयं वत बेति अव्ययं हर्षसूचकं बोध्यम् । शार्दूलविक्रीडितं वृत्तम् ।

(म) अग्रे इति । श्रीवासपण्डितमुखाः श्रीवासादिविद्वत्प्रभृतयः ते एते सुहृदः, अन्ये च बालतरुणस्थविराः शिशुयुवकवृद्धाः भगवतो जननीं शचीदेवीम् अग्रे निधाय कृत्वा समीयुः समाजग्मुः अन्यत् किं वक्तव्यं स एष देशः नवद्वीपप्रदेश इत्यर्थः स एष कालश्च उदपादि उत्पन्नः यत्र देशे यत्र समये च भगवदधिष्ठानमासीदिति भावः । वसन्ततिलकं वृत्तम् ।

भगवान् । यथायथं सर्वानेवाभिजनसमुदयं नमस्कारादिभिरनु-रञ्जयति ।

पुनः सत्वरं प्रविश्य

अद्वैतः । कः कोऽत्र भोः ? सर्वानेवाबालवृद्धवनिता-नाथाभ्यागतानांश्च यथोपजोषमावासभक्ष्यपेयादिभिरुप-चरन्तु (ल) भवन्तः ।

प्रविश्यापटीक्षेपेण ।

एकः । अयमयमहं तथा करोमि । इति निष्क्रान्तः ।

अद्वै । भगवन्तमुपसृत्य ।

सोऽहं त एते स भवान् स च मां
प्रेमा तवेयं करुणाऽपि सैव ।
सर्वं तदेवास्ति सुखैकहेतु-
रन्यादृशं रूपमतोषहेतुः ॥ (व)

विश्वस्य जगतः अनुपाधिप्रवत्सला अकैतववत्सलावती भवति इति अथ अस्माद्धेतोः भगवता ईश्वरेण शरीरिणी मूर्त्तिमती अस्माभि नूनं निश्चितं चक्रे. अतो भवत्याख्यागजनितो महदपराधो भवत्या क्षन्तव्य इति भावः । हरिणोऽहं न समरसक्तः मङ्गवेदैर्हृदयैर्हरिणी मतेति वचनात् ।

(ल) यथोपजोषं य...नम् ।

(व) सोऽहमिति । सः अहं तवानुग्रहपात्रमिति भावः ते एते श्रीवासादयः भवदनुचराः इति भावः, स भवान् अस्माकं परममित्रं प्रभुश्चेति भावः, स च एषां भवदनुचराणां प्रेमा त्वयि भक्तिरस इत्यर्थः सैव तव इदं करुणा कृपा अस्मास्विति शेषः । सर्वं तदेव सुखस्य एकहेतुः एकमात्रं कारणम् अस्ति, किन्तु अन्यादृशं रूपं भवतः

भगवान्। अद्वैत! अद्वैत! मैवम्।

श्यामामृतस्रोतसि पातितं वपु-
स्तस्यैव तुङ्गेन तरङ्गरंहसा।
यां यां दशामेति शुभाऽशुभाथवा
सा सैव मे प्रेम वशीकरोति ॥ (श)

तदेहि चिरदृष्टैरेभिः सहरसा उपविशाम। इति निष्क्रान्ताः सर्वे।

अद्वैतपुरविलासो नाम पञ्चमोऽङ्कः।

सव्यासिद्धरूपमित्यर्थः अतोषस्य असन्तोषस्य हेतुः कारणम्। इन्द्रवज्रावृत्तम्।

(श) श्यामामृतेति। श्यामः कृष्ण एव अमृतं तस्य स्रोतसि प्रवाहे पातितं निक्षिप्तं मयेति शेषः वपुः शरीरं तस्यैव स्रोतसः तुङ्गेन महता तरङ्गरंहसा ऊर्मिवेगेन यां यां दशाम् एति प्राप्नोति, सा सा एव दशा शुभा अशुभा वा मे मम प्रेम वशीकरोति पुनः पुनरतिशयेन करोति कृष्णप्रेमावाप्तये सव्यासमर्पणं कृतं न ततो निवर्त्तितुमिच्छामीति भावः। इन्द्रवंशावृत्तं वदन्ति वंशस्थविलं जतौ जरौ इति तदिन्द्रवंशा प्रथमाक्षरे गुराविति लक्षणात्।

(ष) चिरदृष्टैः चिरात् बहोः कालात् दृष्टैः एभिः श्रीवासादिभिः। सहरसाः समानप्रीतिमनुभवन्त इत्यर्थः।

# षष्ठोऽङ्कः ।

ततः प्रविशति रत्नाकरः । (क)

रत्नाकरः । अहो ! अद्य कथमकस्मात् प्रेयसी सुरसरि(ख)द्विमनस्केव दृष्टा तदस्या मनोदुःखकारणं प्रष्टव्यमस्ति । इति पुरोऽवलोक्य । कथमियं तदवस्थेव दृश्यते देवी तदुपसृत्य पृच्छामि । इति उपसर्पति ।

ततः प्रविशति यथानिर्दिष्टा गङ्गा ।

गङ्गा । हद्धी हद्धी ! जस्स पाअ-सेअ-सलिलत्तेण मह एदारिसं सोहग्गं तस्स पहुणो चिरआलं अङ्गसङ्गो ( ग ) लब्भिओ । अदोवरो को मे भाअधेओ । तह तं लब्भिअ पुणोवि ण लब्भणिज्जो विअ दीसइ अदोवरं वा किं मे असुहं । ता किं करेमि मन्दभाइणी (१) । इति चिन्तयती क्षणं तिष्ठति ।

---

(१) हा धिक् हा धिक् ! यस्य पाद-सेक-सलिलत्वेन मम एतादृशं सौभाग्यं तस्य प्रभोश्चिरकालमङ्गसङ्गो लब्धः । अतोऽपरः को मे भागधेयः । तथा तं लब्ध्वा पुनरपि न लभनीय इव दृश्यते । अतःपरं वा किं मे अशुभम् । तस्मात् किं करोमि मन्दभागिनी ।

---

(क) रत्नाकरः समुद्रः ।

(ख) सुरसरित् गङ्गा ।

(ग) पादसेकसलिलत्वेन विष्णुपादोद्भवा गङ्गा अस्य चैतन्यस्य विष्णववतारत्वादिति भावः । प्रभोः चैतन्यदेवस्य चिरकालमङ्गसङ्गः बहुकालं शरीरसंसर्गः ।

रत्ना। उपसृत्य। भागीरथि! कथं विमनायसे?

गङ्गा। अज्जउत्तो! अज्जउत्तो! किं पच्छसि मन्दभाइणी क्खु अहं (१)।

रत्ना। भागीरथि! कथमिव?

गङ्गा। संस्कृतेन।

यत्पादशौचजलमित्यलमस्मि विश्व-
विख्यातकीर्त्तिरसकौ रसकौतुकीशः।
नित्यावगाहकलया रसयाञ्चकार
मामद्य स त्यजति हा वत! तेन दूये॥ (च)

रत्ना। मा जानामि। स खलु मथुरागमनतः प्रत्याहृत्य सम्प्रत्यद्वैतालये समागतोऽस्तीति श्रुतं तत्कथं दूयसे?

गङ्गा। होदु एवमेदं। किन्तु पअहोअदो पाअदेसु सिरिवासपहुदिएसु बन्धुवग्गेसु अमस्सिं दिअहे सिरिसईटेईए पाइअं असं सव्वेहिं अप्पवग्गेहिं सह सरसहास-

(१) आर्य्यपुत्र! आर्य्यपुत्र! किं पृच्छसि मन्दभागिनी खलु अहम्।

---

(च) यदिति। यस्य पादयोश्चजलं चरणप्रक्षालनोदकमिति हेतोः अलम् अत्यर्थं विश्वविख्याता कीर्त्तिर्यस्याः तथाविधा अस्मि, असकौ रसकौतुकी प्रेमकौतुकवान् ईशः नित्यावगाहकलया प्रतिदिनावगाहनव्यापारेण रसयाञ्चकार रसवतीमकार्षीत् मामिति शेषः, सः अद्य मां त्यजति अन्यासाधनेन वृन्दावनगमनादिति भावः। हा वतेति खेदे, तेन तत्त्यागेन दूये दुःखिता भवामि।

विलासं भुञ्जिय तेहिंज्जेव सह उपविसिय भअवं किम्पि गदिदुं पउत्तो (१)।

रत्ना। किं तत्?

मकु। भो अद्वैतप्रभृतय इदं श्रूयतां यज्जनन्या
युष्माकञ्च प्रणयिसुहृदामाज्ञया न प्रयातम्।
विघ्नस्तेन व्यजनि मथुरां गन्तुमीशे न तस्मा-
दाज्ञां सर्वे ददतु कृपया हन्त! यायामिदानीम्॥(ङ)

रत्ना। ततस्ततः?

मकु। तदो अद्दइआचारिएण गदिदं (२)।
तव प्रीत्या याहीत्यभिलपति सर्वो यदि जन-
स्तदा सर्वस्यैव त्वदुपगमनात् पूर्वमसवः।

(१) भवति एवमिदम्। नवद्वीपत आगतेषु श्रीवासप्रभृतिकेषु बन्धुवर्गेषु अस्मिन् दिवसे श्रीशचीदेव्या पाचितमन्नं सर्वैरात्मवर्गैः सह भरसकासविलासं भुक्त्वा तैरेव सार्द्धम् उपविश्य भगवान् किमपि गदितु प्रवृत्तः।

(२) ततोऽद्वैताचार्य्येण गदितम्।

(ङ) भो इति। भो अद्वैतप्रभृतयः! इदं श्रूयताम्। जनन्या तातः युष्माकं प्रणयिनां सुहृदां बन्धूनाञ्च आज्ञया यत् न प्रयातं न गतं तेन विघ्नः व्यजनि जनितः, तस्मात् मथुरां गन्तुं न ईशे न प्रभवामि, हन्त इदानीं सर्वे भवन्तः आज्ञां ददतु, अहं यायां गच्छेयं मथुरामिति शेषः। मन्दाक्रान्तावृत्तम्।

(च) तवेति। यदि सर्वो जनः तव प्रीत्या याहीति अभिलपति वदति, तदा सर्वस्यैव अस्य जनस्य अमी असवः प्राणाः तव उपगमन-

न धिक्कारान् सोढुं बत भवति नः पाटवमिति
प्रयास्यन्त्येवामी प्रथममनुभूय व्यसनिताम् ॥ (च)

रत्ना। भद्रं भो अद्वैत ! भद्रम्। ततस्ततः ?

गङ्गा। तदो भअवदा सप्पणअं पुणोवि भणिदं (१)।
भो अद्वैतप्रभृतयः !

गृहीतोऽयं वेशो यदिह निजदेशस्य सविधे
तदा स्थातुं सार्द्धं प्रणयिभिरिदानीमनुचितम्।
बुधा यूयं विप्रा भवति जननी चास्य वपुषः
समाधानं कुर्वन्तु स्वयमहह ! किं वच्मि बहुलम् ॥ (छ)

रत्ना। भगवताऽपि समीचीन(ज)मुक्तम्। ततस्ततः ?

---

(१) ततो भगवता सप्रणयं पुनरपि भणितम्।

---

नात् प्रस्थानात् पूर्वं धिक्कारान् धिक् युष्मान् यदेताद्दशप्रियतमविरहोऽपि युष्माभिर्व्यलीकायितमिति सर्वेषां कृतनिकारान् सोढुं नः अस्माकं पाटवं सामर्थ्यं न भवतीति प्रथमं व्यसनितां विपदमनुभूय सम्भाव्य प्रयास्यन्त्येव। शिखरिणीवृत्तम्।

(छ) गृहीत इति। यत् यतः इह निजदेशस्य सविधे समीपे अयं वेशः भिक्षुवेशः गृहीतः, तदा इदानीं प्रणयिभिः बन्धुभिः सार्द्धं स्थातुम् अनुचितमयुक्तम्। यूयं बुधाः विद्वांसः, जननी माता च विप्रा विचक्षणा, अतः अस्य वपुषः सन्न्यासिशरीरस्य समाधानम् इतिकर्त्तव्यतां स्वयं कुर्वन्तु विवेचयन्तु इत्यर्थः भवन्त इति शेषः अहह इति खेदसूचकमव्ययं बहुलं किं वच्मि कथयामि बहुना कथनेनालमित्यर्थः। शिखरिणीवृत्तम्।

(ज) समीचीनं समुचितम्।

गङ्गा। तदो सव्वेहिं भअवदो बन्धुजनेहिं आचारिओजणणीए सईदेईए णिअडं गदुअ मन्तिदं (१)।

रत्ना। ततस्ततः?

गङ्गा। अस्सिं अत्थे जदो कस्सवि सम्मई ण होइ तदो जणणीए उत्तं। भो भो! जइ धम्मदोसो होइ तदो अप्पणो सुहकए तस्स खल-अण-किद किम्बदन्ती कधं करणिज्जा। अप्पणो जह तह होउ। तदो जअणाहच्छेत्तं ज्जेव जं गच्छदि तं ज्जेव भद्दं। कदाचि पउत्तीवि (झ) लहीअदित्ति आसा होदू (२)।

रत्ना। साधु मातः! साधु। अतिक्रान्ताऽसि भवत्या देवहूतिः (ञ)। ततस्ततः?

(१) ततः सर्वैर्भगवतो बन्धुजनैराचार्य्यजनन्याः शचीदेव्या निकटं गत्वा मन्त्रितम्।

(२) अस्मिन्नर्थे यदा कस्यापि सम्मतिर्न भवति तदा जनन्या उक्तम्। भो भो! यदि धर्मदोषो भवति तदा आत्मनः सुखकृते तस्य खल-जनकृता किंवदन्ती कथं करणीया। आत्मनो यथा तथा भवतु। ततो जगन्नाथक्षेत्रमेव यद् गच्छति तदेव भद्रम्! कदाचित् प्रवृत्तिरपि लभ्यते इति आशा भवति।

(झ) धर्मदोषः सन्न्यासग्रहणे कृते पुनस्तत्परित्यागात् अधर्म इत्यर्थः खलजनकृता दुर्जनकृता किंवदन्ती लोकापवादरूपा कथं केन प्रकारेण करणीया अङ्गनीया नैव सोढुं शक्यते इति भावः। यत् यदीत्यर्थः। प्रवृत्तिः वार्त्ता।

(ञ) अतिक्रान्ता निर्जिता। पुरा देवहूतिरपि महापुरुषं भगवदंशसम्भूतं पुत्रं कपिलं नेदृक् अनुशासितवतीति भावः।

गङ्गा। तदो सव्वे ज्जेव विवसा हुविअ पुणोवि गदि-दवन्तो (१)। "मातः! कथमिदमुक्तम्। अतः परमस्माभिरिदं श्रुतिप्रतिपादितमिव खण्डितुं न शक्यते भवद्वचः"। (ट)

रत्ना। ततस्ततः?

गङ्गा। तदो तए गदिदं। अम्हाणं जह तह होउ। अस्स दोसं जं खलजणो पेक्खिस्सदि तं क्खु दुस्सहं। जअणाहं जइ गच्छदि तदो मज्झे तुम्हे गन्तुं सक्कध। मए पउत्ती लहीअदि (२)।

रत्ना। ततस्ततः?

गङ्गा। तदो सव्वे भअवदो णिअडं आअदुअ देईए कधिदं णिअदिदवन्तो (३)

रत्ना। ततस्ततः?

गङ्गा। तदो भअवं सहरिसअं गदिदवं (४) यथाऽऽज्ञापयति विष्णुजननी तदाज्ञापयत गच्छामि।

---

(१) तदा सर्वे एव विवशा भूत्वा पुनरपि गदितवन्तः।

(२) तदा तया गदितम्। अस्माकं यथा तथा भवतु। अस्य दोषं यत् खलजनः प्रेक्षिष्यति तत् खलु दुःसहम्। जगन्नाथं यदि गच्छति तदा यूयं गन्तुं शक्नुत। मया प्रवृत्तिर्लभ्यते।

(३) तदा सर्वे भगवतो निकटमागत्य देव्या कथितं निगदितवन्तः।

(४) ततो भगवान् सहर्षं गदितवान्।

---

(ट) श्रुतिपादितमिति यथा श्रुतिप्रतिपादितं न कोऽपि व्यतिक्रमितुं शक्नोति तथा भवत्या वचोऽपीति भावः।

रत्ना। ततस्ततः?

गङ्गा। तदो सव्वेहिं गदिदं (१) देव! कियन्ति दिनानि स्थीयतां पश्यामस्ते चरणकमलमिति।

रत्ना। ततस्ततः?

गङ्गा। तदो जणणीए ताणं च पमोअत्थं तिस्स दिणाणि तत्थ ठाऊण पूव्वं विअ भअवदीए जणणीए अच्चुदाणन्दजणणीए अ पाइदं अस्स सव्वेहिं सह भुञ्जिअ ताणं अणुरञ्जिअ चउत्थे दिअहे गन्तुं पउत्ते सव्वेहिं मन्तिअ णित्याणन्द-जअदाणन्द-दामोदर-मुउन्दाओ सङ्गे दिस्साओ। तदो गदेसु णअद्दीअवासिसु तेहिं सद्धं देवे पत्थिदे अद्दइआचारिएण बहुदरं रोइदं। देवो तं अणामन्तिअ चलिदो (२)।

रत्ना। हन्त! इदानीं गौडाधिपतेर्यवनभूपालस्य गजपतिना (ठ) सह विरोधे गमनागमनमेव न वर्त्तते कथमयं चतुर्भिरेव परिजनैः सह गच्छति।

---

(१) ततः सर्वैर्गदितम्।

(२) ततो जनन्या तेषाञ्च प्रमोदार्थं त्रीणि दिनानि तत्र स्थित्वा पूर्वमिव भगवत्या जनन्या अच्युतानन्दजनन्या च पाचितमन्नं सर्वैः सह भुक्त्वाताननुरञ्ज्य चतुर्थे दिवसे गन्तुं प्रवृत्ते सर्वैर्मन्त्रित्वा नित्यानन्द-जगदानन्द-दामोदर-मुकुन्दाः सङ्गे दत्ताः। ततो गतेषु नवद्वीपवासिषु तैः सार्द्धं देवे प्रस्थिते अद्वैताचार्य्येण बहुतरं रोदितम्। देवस्तमनामन्त्र्य चलितः।

---

(ठ) गजपतिना उत्कलाधिपतिना।

मकुन्दः । संस्कृतमाश्रित्य । भार्य्यपुत्र ! नैतदाश्चर्य्यं पश्य पश्य ।

योऽन्तर्यामी भवति जगतां योऽयमव्याजबन्धु-
र्यस्य द्वेष्यो न जगति जनः कोऽपि के तं द्विषन्तु ।
द्वैराज्येऽस्मिन् पटुविकटयोः सेनयोरेव मध्या-
न्निष्प्रत्यूहं कलय चलितो बन्धुभिः पञ्चषैः सः ॥ (ड)

अपिच । ग्रामे ग्रामे पटुकपटिनो घट्टपाला य एते
येऽरण्यानीचरगिरिचरा वाटपाटच्चराश्च ।
शङ्काकाराः पथि विचलतां तं विलोक्यैव साक्षा-
दुद्यद्वाष्पाः स्खलितवपुषः क्षौणिपृष्ठे लुठन्ति ॥ (ढ)

रत्ना । भवति हि, भगवान् सहजाऽऽसुरभाव-भाविता-

(ड) य इति । यः जगताम् अन्तर्यामी भवति, यः अयम् अव्याजबन्धुः अकपटमित्रं जगतामिति शेषः, जगति यस्य द्वेष्यो जनः कोऽपि न अस्तीति शेषः के तं द्विषन्तु ? न कोऽपीत्यर्थः अस्मिन् द्वैराज्ये गौड़ोत्कलराज्यद्वयमध्ये इत्यर्थः पटुविकटयोः अतिदारुणयोः सेनयोरुभयोः मध्यात् सः देवः पञ्चषैः पञ्चषट्परिमितैः बन्धुभिः सह निष्प्रत्यूहं निर्विघ्नं चलितः कलय पश्य । मन्दाक्रान्तावृत्तम् ।

(ढ) ग्रामे इति । ग्रामे ग्रामे प्रतिग्रामं ये एते पटुकपटिनः निपुणाः कपटचारिणः घट्टपालाः जलावतारशुल्कग्रहीतारः, ये अरण्यानीचराः महारण्यवासिनः गिरिचराः पर्वतीयाश्च, ये च वाट-पाटच्चराः मार्गतस्कराः पथि विचलतां पान्थानां शङ्काकाराः भयप्रदाः तिष्ठन्ति, ते तं गौराङ्गं साक्षात् विलोक्यैव उद्यद्वाष्पाः आनन्दवाष्पवर्षिणः तथा स्खलितवपुषः पतितदेहाः सन्तः क्षौणीपृष्ठे पृथ्वीतले लुठन्ति दण्डवत् प्रणमन्तीत्यर्थः । मन्दाक्रान्तावृत्तम् ।

न्तःकरणानेव नानन्दयति तदितरान् परम-पामरानपि दृक्पातेन पवित्रयति चित्रयति (थ) च भक्तिरसेन।

रत्ना। ततस्ततः ?

गङ्गा। तदो णिरन्तर-सञ्चरन्त गअवद्द-महासामन्त-सन्तदि-महादन्तावल-तुङ्गतुरङ्ग-पत्तिसम्पत्ति-दुग्गमं (त) राअपहं उज्झिअ वणमग्गांज्जेव अग्गाहिअ चलिद-वन्तो (१)।

रत्ना। ततस्ततः ?

गङ्गा। संस्कृतेन। ततः,

आश्चर्यं प्रागहह! गहनं गाहमाने रघूणां
पत्यौ द्वौपिद्विरदमहिषा गण्डकाखण्डकायाः।

(१) ततो निरन्तर-सञ्चरद्गजपति-महासामन्त-सन्तति-महादन्तावल-तुङ्गतुरङ्ग-पत्तिसम्पत्तिदुर्गमं राजपथमुज्झित्वा वनमार्गमेव अवगाह्य चलितवान्।

(थ) भवति हि भयत्येव दर्शितेति शेषः। सहजेति सहजेन स्वाभाविकेन आसुरभावेन भावितं चिन्तितम् अन्तःकरणं येषां तान् असुरानित्यर्थः। तदितरान् तेभ्यः इतरान् व्यतिरिक्तान् परम-पामरान् अतिनीचान् अतिमूर्खान् वा। पवित्रयति शोधयति। चित्रयति चमत्करोति।

(त) निरन्तरेति निरन्तरं सञ्चरन्तो गच्छन्तो गजपतेः उत्कला-धिराजस्य महासामन्तानां सन्ततिः समूहः महादन्तावलानां महा-गजानां तुङ्गतुरङ्गाणाम् उन्नताश्वानां पत्तीनाञ्च या सम्पत्तिः समृद्धिः तया दुर्गमं दुःसञ्चरम्।

(द) आश्चर्यमिति। आश्चर्यम् अहह इति प्रेमातिशयव्यञ्जक-

तत्कोदण्डप्रतिभयहता दुद्रुवुर्ये त एते
तन्माधुर्य्यद्रवलवलभः स्तब्धतामेव दध्रुः॥ (च)

एव्वं कियन्ति दिणाणि वणे वणे चलन्तो विविह-तरु-लदा-सोहग्गमणुगेह्नन्तो (छ) पुणोवि राअ-पहं अङ्गीकिदवं (१)।

रत्ना। कुतः?

गङ्गा। संस्कृतेन।

रैमुणानगरमण्डलमूर्त्ति र्वेणुपाणिभगवत्प्रतिमूर्त्तिः।
प्राक्तनीति बहुमानत आसीद्वन्दनार्थमथ राजपथस्थः॥ (ध)

रत्ना। प्राक्तनीति कोऽर्थः?

---

(१) एवं कियन्ति दिनानि वने वने चलन् विविध-तरुलता-सौभाग्यमनुगृह्णन् पुनरपि राजपथम् अङ्गीकृतवान्।

---

अन्वयम्। प्राक् पूर्वं रघूणां पत्यौ रामे वनं गाहमाने प्रविशति सति ये चण्डकायाः [illegible]शरीराः द्वीपिद्विरदमहिषाः व्याघ्रगजलुलायाः गण्डकाः खड्गिनश्च तस्य रामस्य कोदण्डेन धनुषा प्रतिभयं भयङ्करं यथा तथा भयङ्करं प्रतिभयमित्यमरः। हताः ताड़िताः सन्तः दुद्रुवुः पलायितवन्तः, ते एते तस्य माधुर्य्यद्रवस्य मधुरिमरसस्य लवलभः कणमात्रभाज इत्यर्थः सन्तः स्तब्धतां निश्चलतामेव दध्रुः धारयन्ति स्म, तद्दर्शनेन प्रेमपूर्णा विस्मयाविष्टा सन्तीत्यर्थः। मन्दाक्रान्तावृत्तम्।

(छ) विविधेति विविधानां तरुलतानां सौभाग्यम् अनुगृह्णन् नवनवफलपुष्पपल्लवेन ताः सौभाग्यं नयन्नित्यर्थः।

(ध) रैमुणेति। अथ अनन्तरं रैमुणानगरे मण्डला वर्त्तुला मूर्त्तिर्यस्याः तादृशी प्राक्तनी अतिप्राचीना वेणुः पाणौ यस्यास्तथा-

गङ्गा। अअं क्खु देवो चउब्भुअ-रूवदोवि दुअ-भुअ-रूअ गोवीणाहंज्जेव्व भत्ते हिं भअणीअं त्ति भणन्ति केवि। केवि भणन्ति पुराअणी चउब्भुअ-मुत्तीज्जेव दीसइ सव्वत्थलेज्जेव ण क्खु दुअ-भुअ-रूआ गोवी-णाह-मुत्ती पुराअणीत्ति (१)।

रत्ना। ते भ्रान्ताः (न) कटकादौ साक्षिगोपाला-द्यीऽतिप्राचीना एव। ततः?

गङ्गा। संस्कृतेन।

दण्डवद्भुवि निपत्य ववन्दे तां स साऽपि तमपूजयदुच्चैः।
अस्य मूर्द्ध्नि पतताऽलमकस्माच्छेखरेण शिरसः स्खलितेन॥ (प

(१) अयं खलु देवश्चतुर्भुज-रूपतोऽपि द्विभुजरूपो गोपीनाथमेव भक्तैर्भजनीयमिति भणन्ति केऽपि। केऽपि भणन्ति पुरातनी चतु-र्भुजमूर्त्तिरेव दृश्यते सर्वस्थले एव न खलु द्विभुजरूपा गोपीनाथमूर्त्तिः पुरातनीति।

विधा भगवतः कृष्णस्य प्रतिमूर्त्तिः असीति शेषः इति हेतोः बहु-मानतः बहुसम्मानात् वन्दनार्थं तत्पूजनार्थं राजपथस्थः आसीत्।

(न) भ्रान्ताः अज्ञाः।

(प) दण्डवदिति। सः चैतन्यदेवः दण्डवत् भुवि निपत्य तां मूर्त्तिं ववन्दे प्रणनाम। सापि मूर्त्तिः अकस्मात् सहसा अस्य चैत-न्यस्य मूर्द्ध्नि शिरसि अलं सम्यक् पतता शिरसः स्वमस्तकात् स्खलि-तेन शेखरेण शिरोभूषणेन मुकुटेनेत्यर्थः तं चैतन्यदेवम् उच्चैः अति-शयेन अपूजयत् पूजितवती। स्वागतावृत्तं, स्वागता रनभगैर्गुरुणा चेति तल्लक्षणात्।

रङ्गा। ततस्ततः ?

गङ्गा। संकेतेन। ततो भगवता सप्रेम किञ्चिदुपश्लोकितम्। (फ)

तथाहि। न्यञ्चत्कफोणिनमदंसमुदञ्चदग्र-
तिर्य्यक्प्रकोष्ठकियदावृतपीनवक्षाः।
आरभ्यमानवलयो मुरलीमुखस्य
शोभां विभावयति कामपि वामबाहुः॥ (ब)

किञ्च। आकुञ्चनाकुलकफोणितलादिवाधो-
लब्धस्रुता मधुरिमाऽमृतधारयेव।
आप्लावयन् क्षितितलं मुरलीमुखस्य
लक्ष्मीं विलक्षयति दक्षिणबाहुरेषः॥ (भ)

(फ) उपश्लोकितं श्लोकेन कीर्त्तितम्।

(ब) न्यञ्चदिति। न्यञ्चता निम्नं तिष्ठता कफोणिना कूर्परेण स्यात् कफोणिस्तु कूर्पर इत्यमरः। नमन् अवनतीभवन् अंसः स्कन्धः यत्र तत् तथा उदञ्चत् उद्गच्छत् अग्रं यत्र तत् यथा तथा तिर्य्यग्वक्रीकृतेन प्रकोष्ठेन मणिबन्धोपरिभागेन कियत् किञ्चित् आवृतम् आच्छादितं पीनं विशालं वक्षः वक्षःस्थलं येन तादृशः, आरभ्यमानं शोभमानं वलयं यत्र तथाविधः, मुरलीमुखस्य गोपीनाथस्य वामबाहुः कामपि अनिर्वचनीयां शोभां विभावयति प्रकटयति। वसन्ततिलकं वृत्तम्।

(भ) आकुञ्चनेति। मुरलीमुखस्य गोपीनाथस्य एषः दक्षिणबाहुः आकुञ्चनेन आकुलं यत् कफोणितलं तस्मात् अधः लब्धस्रुतैव स्राविणैव इत्यर्थः मधुरिमा माधुर्य्यमेव अमृतधारा तयैव क्षितितलम् आप्लावयन् लक्ष्मीं शोभां विलक्षयति विशेषेण बिभर्त्ति। वसन्ततिलकं वृत्तम्।

रत्ना । ततस्ततः ?

गङ्गा । पुणोवि वणमग्गं लङ्घिअ पुणोवि साक्खिगोवालदंसणत्थं कडअ-णामधेयं राअधाणीं गओ (१) ।

रत्ना । दर्शनीय एवायम् । यः खलु प्रतिमाकार एव वस्तुतस्तु स्वयं भगवान् । यतः,

साक्षित्वेन वृतो द्विजेन स चलंस्तस्यैव पश्चाच्छनैः
श्रीमत्कोमलपादपद्मयुगलेनारावदन्नूपुरम् ।
दृष्टस्तेन विवृत्तकन्धरमहो माहेन्द्रदेशावधि
प्राप्यैव प्रतिमात्वमत्वरमनास्तत्रैव तस्थौ प्रभुः ॥ (म)

---

(१) पुनरपि वनमार्गं लङ्घित्वा पुनरपि साक्षिगोपालदर्शनार्थं कटक-नामधेयां राजधानीं गतः ।

---

(म) साक्षित्वेनेति । सः प्रभुः द्विजेन स्वसेवकेन साक्षित्वेन वृतः त्वं मम अस्मिन् विषये साक्षी भवेति अभ्यर्थितः तस्यैव द्विजस्य पश्चात् शनैः मन्दं मन्दं श्रीमता कोमलेन पादपद्मयुगलेन आरात् नदन्तौ क्वणन्तौ नूपुरौ यत्र तद् यथा तथा माहेन्द्रदेशावधि चलन् तेन द्विजेन विवृत्ता परावृत्ता कन्धरा ग्रीवा यस्मिन् तद् यथा तथा दृष्टः अवलोकितः सन् अहो आश्चर्यं तत्र एव अत्वरमनाः त्वरां परि-त्यज्य स्थैर्यः प्रतिमात्वं प्रतिमूर्त्तित्वं प्राप्यैव तस्थौ । पुरा किल कश्चित् द्विजः साराध्यं देवं गोपालमूर्त्तिं विष्णुं परिदृष्टं त्वं मे साक्षी भवेति प्रार्थितवान् । सोऽपि तथेति तमङ्गीकृत्य तत्पश्चात् महेन्द्र-पर्वताधित्यकादेशपर्यन्तं गच्छन् विप्रेणानेन परावृत्तकन्धरेणावलोकितः तत्रैव प्रतिमामूर्त्तिः साक्षिगोपालसंज्ञया तस्थौ इति प्रसिद्धिः । शार्दूलविक्रीडितं वृत्तम् ।

ततश्चिरेण गजपतिमहाराजेन पुरुषोत्तमदेवेनाय-मानीय स्वराजधान्यां (य) स्थापितः।

गङ्गा। एव्वमेदं (१)।

रत्ना। ततस्ततः?

गङ्गा। तदो तं आलोइअ अप्पणो हिअआदो णिक्क-मिअ पुरदो अवट्ठिदं विअ मण्णमाणो पुणोवि तत्थ सअं पविसन्तो विअ मुहुत्तं आसि (२)। संस्कृतेन। अथ किञ्चि-दुपश्लोकितञ्च।

शोणस्निग्धाङ्गुलिदलकुलं माद्यदाभीररामा-
वक्षोजानां घुसृणरचनाभङ्गरिङ्गत्परागम्।
चिन्माध्वीकं नखमणिमहःपुञ्जकिञ्जल्कमालं
जङ्घानालं चरणकमलं पातु नः पूतनारेः॥ (र)

(१) एवमिदम्।

(२) ततस्तमालोक्य आत्मनो हृदयतो निष्क्रम्य पुरतोऽवस्थित-मिव मन्यमानः पुनरपि तत्र स्वयं प्रविशन्निव मुहूर्त्तमासीत्।

---

(य) स्वराजधान्यां कटके इत्यर्थः।

(र) शोणेति। शोणाः रक्ताः स्निग्धाः अङ्गुलय एव दलकुलानि पत्राणीत्यर्थः यस्य तथोक्तं माद्यन्तीनां प्रेयःप्राप्त्या प्रहृष्यन्तीनाम् आभीररामाणां गोपनारीणां ये वक्षोजाः स्तनाः तेषां घुसृण-रचनायाः कुङ्कुमरचनायाः भङ्गेन तेषु चरणकमलन्यासादिति भावः रिङ्गन् स्खलन् परागः यस्मात् तथाविधं चित् ज्ञानमेव माध्वीकं मधु यत्र तादृशं नखा एव मणयः तेषां महःपुञ्जाः तेजोराशय एव किञ्जल्कमालाः केशरसमूहाः यस्य तथोक्तं जङ्घा एव नालं मृणालं

रत्ना। ततस्ततः ?

गङ्गा। तदो सव्वेहिं एव्वं ज्जेव दिट्ठं (१)।

रत्ना। कीदृशमिव ?

गङ्गा। संस्कृतेन।

वेणुवादनपरोऽपि स वेणुं स्वाधरात् क्षणमधो विनिधाय।
तेन सार्द्धमिव वर्द्धितशुद्धमोहितकथोऽयमलोकि ॥ (ल)

रत्ना। ततस्ततः ?

गङ्गा। तदो तं दिणं तत्थ ज्जेव ठाऊण अवरस्सिं दिणे सिरिपुण्डरीअ-णअणो दट्ठव्वोत्ति गुरुईए उक्कण्ठाए घोणन्त-हिअओ विअ तुरिअं पत्थिदो (२)।

रत्ना। ततस्ततः ?

गङ्गा। तदो कमलपुरणामं गामं लम्भिअ किअ-णई-सिणाणो भअवदि देवउलं पेक्खिदुं अग्गदो गच्छन्तम्मि देवे

(१) ततः सर्वैरेवमेव दृष्टः।

(२) ततस्तद्दिनं तत्रैव स्थित्वा अपरस्मिन् दिवसे श्रीपुण्डरीक-नयनो द्रष्टव्य इति गुर्व्या उत्कण्ठया घूर्णितहृदय इव त्वरितं प्रस्थितः।

यस्य तथाभूतं पूतनारेः गोपालस्य चरणकमलं नः अस्मान् पातु रक्षतु। मन्दाक्रान्ताद्वत्तम्।

(ल) वेणुवेति। वेणुवादनपरः वंशीवादननिरतः अपि सोऽयं साक्षिगोपालः क्षणं स्वात् अधरात् वेणुम् अधः विनिधाय स्थाप-यित्वा तेन चैतन्यदेवेन सार्द्धं सह वर्द्धिता शुद्धा पविता श्रद्धा यस्मिन् तत् यथा तथा ईहिता चेष्टिता कथा येन तथोक्त इव आलपन्निवे-त्यर्थः अलोकि दृष्टः सर्वैरिति शेषः। स्वागतावृत्तम्।

णिअ-करट्ठिअं देवस्स दण्डं णिच्चाणन्ददेएण किं एदेण अआलुवद्दवखण्डेण (ब) दण्डेणत्ति भञ्जिअ णई-मज्झम्मि णिक्खित्तो (१)।

रत्ना। ततस्ततः ?

गङ्गा। तदो मुउन्दो भअवदो अह्णाहस्स देवउलं पेक्खिअ भअवन्तं गदिदवं (२)। देव ! पस्स पस्स।

उत्क्षिप्तः किमयं भुवा दिनमणेराकर्षणार्थं भुजः
पातालात् किमु सत्यलोकमयितुं शेषः समभ्युत्थितः।
किंवा नागफणामणीन्द्रमहसां राशिर्जिहानो दिवं
दिव्यं देवकुलं प्रभोरिदमिदं भो देव ! विद्योतते ॥ (ग)

(१) ततः कमलपुरनामानं ग्रामं गत्वा श्रतनदीस्थाने भगवति देवकुलं प्रेक्षितुम् अयतो गच्छति देवे निजकरस्थितं देवस्य दण्डं, नित्यानन्ददेवेन किमेतेन अकाण्डोपप्लवखण्डेन दण्डेनेति भङ्क्त्वा नदीमध्ये निक्षिप्तः।

(२) ततो मुकुन्दो भगवतो जगन्नाथस्य देवकुलं प्रेक्ष्य भगवन्तं गदितवान्।

(ब) अकाण्डेति अकाण्डे सहसा यः उपप्लवः अस्माकं चैतन्यदेवकर्त्तृकत्यागः तेन खण्डयति विध्वंसयति अस्मद्बन्धुवर्गमनांसीनेनेति तथोक्तेन। दण्डग्रहणमेव बन्धुजनत्यागकारणमिति भावः।

(ग) उत्क्षिप्त इति। भो देव ! प्रभोर्जगन्नाथदेवस्य इदमिदं दिव्यं देवकुलं मन्दिरमित्यर्थः दिनमणेः सूर्य्यस्य आकर्षणार्थं भुवा पृथिव्या उत्क्षिप्तः उत्थापितः अयं भुजः बाहुः किम् ? पातालात् सत्यलोकम् अयितुं गन्तुं समभ्युत्थितः शेषः अनन्तनागः किम् ? वा अथवा दिवम् आकाशं स्वर्गं वा जिहानः उद्गच्छन् नागानां

रत्ना। देवि! सर्वमधिगतं कथमत्र विमनायते भवती मत्सौभाग्ये (घ) सौभाग्यवती भवती। पश्य पश्य।

यदर्थं बद्धोऽहं शिव! शिव! यदर्थञ्च मथित-
स्तदीयस्तातोऽसाविति न गणितं येन विभुना।
अहो! कीदृग् भाग्यं मम हि स हरिस्ताञ्च दयितां
परित्यज्यैवास्मत्तटवटकुटुम्बी समभवत्॥ (ङ)

तदेहि निकटं गत्वैव पश्याव।

गङ्गा। जहरुइदं अज्जउत्तस्स (१)। इति निष्क्रान्तौ।

प्रवेशकः।

ततः प्रविशति परमाविष्टो (च) भगवान् परितश्च नित्यानन्दादयः।

(१) यथारुचितमार्य्यपुत्रस्य।

• भुजङ्गानां ये फणामणीन्द्राः फणास्थितरत्नश्रेष्ठानि तेषां महसां तेजसां राशिः किम्? विद्योतते विराजते। शार्दूलविक्रीड़ितं वृत्तम्।

(घ) अधिगतं बुद्धम्। मत्सौभाग्ये इति पतिसुखेनैव नार्य्याः सुखोत्पत्तिर्जायते इति भावः।

(ङ) यदर्थमिति। शिवशिवेति खेदे। येन विभुना यदर्थं यस्याः दयितायाः सीताया इत्यर्थः कृते इत्यर्थः अहं बद्धः वृक्षपर्वतादिभिः नियमितः, यदर्थञ्च यस्याः दयितायाः लक्ष्म्याः कृते इत्यर्थः अहं मथितः देवासुरैरिति शेषः तस्याः लक्ष्म्याः अयं तदीयः तातः पिता असौ इति न गणितं न विचारितञ्च अहो आश्चर्यं मम कीदृक् भाग्यं, हि यतः स विभुः हरिः तां दयितां कान्तां लक्ष्मीं परित्यज्यैव अस्माकं तटे यः वटः वटतरुः तस्य कुटुम्बी परिजनः समभवत् जगन्नाथरूपेणावस्थित इत्यर्थः। शिखरिणीवृत्तम्।

(च) परमाविष्टः परं भगवत्प्रेमासक्त इत्यर्थः।

भगवान्। अभ्रंलिहोऽपि जगतां हृदयं प्रविष्टः

स्थूलोऽपि लोचनयुगान्तरमभ्युपेतः।

सिद्धः शिलाभिरपि यो रसवर्षशाली

प्रासाद एष पुरतः स्फुरतीश्वरस्य॥ (ख)

इति सोत्कण्ठं परिक्रामति।

सर्वे। अहो! मुहूर्त्तमात्रगम्योऽयं पन्था दीर्घातिदीर्घ इव जायते भगवतः किमत्र चिन्तयाम। भगवतो नीलाचलचन्द्रस्य विलोकनं परिचारकाणामेव सुलभं नान्येषाम्। विशेषतः पारदेशिकानामस्माकं (क) दुर्लभमेव। विना राजपुरुषसाहाय्येन सुलभं न भवति।

मुकुन्दः। अस्त्युपायः।

अन्ये। कस्तावदसौ?

मुकुन्दः। अस्त्यत्र विशारदस्य जामाता सार्वभौमस्या-

---

(ख) अभ्रंलिह इति। यः ईश्वरस्य देवस्य जगन्नाथस्य प्रासादः मन्दिरं प्रासादो देवभूभुजामित्यमरः। अभ्रंलिहोऽपि गगनस्पर्शी अपि जगतां जगन्निवासिनां हृदयं मनः प्रविष्टः स्थूलोऽपि विशालोऽपि लोचनयुगयोरन्तरम् अभ्युपेतः प्राप्तः प्रविष्ट इत्यर्थः शिलाभिः पाषाणैः सिद्धः निर्मितोऽपि रसवर्षशाली प्रेमरसवर्षीत्यर्थः स एषः पुरतः अग्रतः स्फुरति विराजते। विरोधालङ्कारः। तदुक्तं दर्पणे, जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः। क्रिया क्रियाद्रव्याभ्यां वा द्रव्यं द्रव्येण वा मिथः। विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिरिति। वसन्ततिलकं वृत्तम्।

(क) जायते प्रतिभाति। नीलाचलचन्द्रस्य जगन्नाथदेवस्य। परिचारकाणां सेवकानाम्। पारदेशिकानां विदेशिनाम्।

वुत्तो (ख) भगवतः परमाप्ततमो गोपीनाथाचार्य्यः। यः खलु भगवतो नवद्वीपविलासविशेषाभिज्ञो युष्मद्विध इव।

अन्ये। तेन किं स्यात्?

मुकुन्दः। तेन सार्वभौमद्वारा सर्व्वमेव कारयितुं शक्यते।

सर्व्वे। हर्षं नाटयित्वा। साधूक्तं तर्हि तन्निलयः प्रथमन्मन्वेष्टुमिष्टः। इति परिक्रामन्ति।

ततः प्रविशति गोपीनाथाचार्य्यः।

आचार्य्यः। स्वगतम्।

दक्षिणं स्फुरति मे विलोचनं
सुप्रसादविशदं मनो मम।
वेद्मि नोऽद्य जगदीशदर्शनं
कीदृशं सुखमुदीरयिष्यति॥ (ग)

इति जगन्नाथदर्शनार्थं परिक्रामति।

मुकुन्दः। अयमेष गोपीनाथाचार्य्यः।

नित्या। मुकुन्द! शीघ्रं गच्छ गच्छ यावदसौ सिंहद्वारं न प्रविशति।

---

(ख) आवुत्तः भगिनीपतिः भगिनीपतिरावुत्त इत्यमरः।

(ग) दक्षिणमिति। मे मम दक्षिणं विलोचनं नयनं स्फुरति, मम मनश्च सुप्रसादविशदं सुप्रसादेन अतिप्रसन्नतया विशदं निर्म्मलं विकस्वरमित्यर्थः अद्य जगदीशस्य जगन्नाथस्य दर्शनं कीदृशं सुखम् उदीरयिष्यति जनयिष्यति नो वेद्मि न जानामि। रथोद्धतावृत्तम्, रान्नराविह रथोद्धता लगाविति वचनात्।

मुकुन्दः । तथा करोति ।

गोपी । अग्रतोऽवलोक्य । अये ! कोऽयम् ? अपि कश्चिद्गौडीयो भविष्यति ? निभाल्य । अये नावद्वीपः । पुनर्निभाल्य । अये ! भगवतो विश्वम्भरस्य प्रियसेवको मुकुन्द एव । ततः फलितं शकुनेन ( घ )। उपसृत्य । हंहो ! मुकुन्दोऽसि ।

मुकुन्दः । आचार्य्य ! वन्दे ।

गोपी । अपि कुशलं भगवतः ?

मुकुन्दः । इहैवागताः प्रभुचरणाः ।

गोपी । सानन्दम् । किं वदसि । क्व क्व । इति पुनस्तमाविष्कृति ।

मुकुन्दः । तमादाय प्रत्यावर्त्तते ।

गोपी । अग्रतोऽवलोक्य । मुकुन्द ! कोऽयं यतीन्द्रः ?

मुकुन्दः । सर्वं कथयति ।

गोपी । साश्चर्य्यम् ।

य: केवलं प्रेमरसस्तदाऽऽसीत्
स एव वैराग्यरसेन मिश्रः ।
स्वादस्तथाप्येष दृशोस्तथैव
चित्तस्य नोऽयं मधुराम्लरूपः ॥ ( ङ )

---

(घ) गौडीयः गौड़देशवासी । नावद्वीपः नवद्वीपवासी । शकुनेन शुभसूचकनिमित्तेन ।

(ङ) य इति । यः तदा तस्मिन् काले केवलं प्रेमरसः अतिप्रेमिकः आसीत् स एव वैराग्यरसेन निर्वेदभावेन मिश्रः समागतः । तथापि एषः दृशोः नेत्रयोः तथैव स्वादः तादृश एव आनन्दः, एवं स्पृहत्वं दृष्टा पूर्वं यथा मे नयनं प्रफुल्लमासीत् अद्य सन्यासिनमाखो-

मुकुन्दः। उपसृत्य। भो! देव श्रीजगन्नाथदेवेनैव भगवन्तमभ्यागमयितुं प्रतिनिधिरिव प्रहितो गोपीनाथाचार्य्यः।

भगवान्। वहिर्वृत्तिं नाटयन् (च)। क्वासौ क्वासौ?

गोपी। अयमस्मि। इति चरणयोः पतति।

भग। आलिङ्गति।

गोपी। नित्यानन्दं प्रणम्य जगतानन्द-दामोदरौ प्रणमति।

मुकु। आचार्य्य! कथमबाधं यथाकाममेव भगवतो जगन्नाथस्य दर्शनं सम्पद्यते।

गोपी। सार्वभौमस्य तथा सौभाग्योदयश्चेद् भवति। (छ)

सर्वे। तर्हि विज्ञाप्यतां स्वयमेव देवः।

गोपी। स्वामिन्! विना सार्वभौमसम्भाषणं श्रीजगन्नाथदर्शनं न सुलभमिति मन्यामहे, भगवतो वा कीदृगिच्छा?

भग। भवदिच्छैव ममेच्छा।

---

क्वापि तथैव प्रफुल्लतीति भावः। अयं चित्तस्य मधुराम्लरूपः स्वादः मे भवतीति शेषः एवं दृष्ट्वा चित्तं पूर्वं यथैव प्रसीदति न तु विकृतिमापद्यते इति भावः। उपजातिवृत्तम्।

(च) वहिर्वृत्तिं वाह्येन्द्रियव्यापारम्। नाटयन् अभिनयन्।

(छ) सौभाग्योदय इति यदि सार्वभौमः तथा चेष्टते तदैव सम्पद्यते, सा च चेष्टा तस्य सौभाग्यमपेक्षते भगवत्कृपाकार्य्यं बहुपुण्यसाध्यमिति भावः।

गोपी। तर्हि फलितं सार्वभौमस्य सुकृतद्रुमेण (ञ)। देव! तदित इतः पदानि धारयन्तु भगवन्तः।

भग। आदिश मार्गम्।

गोपी। इत इतः। इति सर्वे परिक्रामन्ति।

ततः प्रविशति अध्यापयन् सशिष्यः सार्वभौमभट्टाचार्य्यः।

भट्टाचार्य्यः। कः कोऽत्र भो! जानीत श्रीजगन्नाथस्य मध्याह्नधूपः संवृत्तो न वेति।

गोपी। अयमयं भट्टाचार्य्यस्याध्यापनोपरमः संवृत्तः। सम्प्रत्यभ्यन्तरं यास्यति तत् त्वरितमेवोपसर्पामि। इति विचार्य्य। भगवन्निहैव क्षणं विश्रमितुमर्हति यावदहमागच्छामि। इति सत्वरमुपसृत्य। भट्टाचार्य्य! कोऽपि महानुभावः सम्प्राप्तोऽस्ति तदभिगम्य समानीयतामिति।

सार्व। कियद्दूरेऽसौ।

गोपी। अभ्यर्णे (झ) एव।

सार्व। उत्थायाभिगच्छति। शिष्याश्चानुगच्छन्ति।

नित्या। अहो! अयमयं भट्टाचार्य्यः सार्वभौमः। यदयं स्वयमागतस्तर्हि साधीयानेव (ञ) भवति।

भट्टा। उपसृत्य। नमो नारायणाय। इति प्रणमति।

भग। कृष्णे रतिः कृष्णे मतिः।

(ञ) सुकृतद्रुमेण पुण्यतरुणा।

(झ) अभ्यर्णः सन्निहितः।

(ञ) साधीयान् अतिसाधुः।

सार्व। स्वगतम्। अहो! अपूर्वमिदमाशंसनं (ट) तदयं पूर्वाश्रमे वैष्णवो वा भविष्यति।

शिष्याः स्मयन्ते।

सार्व। स्वामिन्नितः। इति भगवन्तमादाय यथास्थानमुपवेश्य स्वयमप्युपविशति। सर्वे उपवेशं नाटयन्ति।

सार्व। आचार्य्य! अयं पूर्वाश्रमे (ठ) गौड़ीयो वा।

गोपी। भट्टाचार्य्य! पूर्वाश्रमे नवद्वीपवर्त्तिनो नीलाम्बरचक्रवर्त्तिनो दौहित्रो जगन्नाथमिश्रपुरन्दरस्य (ड) तनुजः।

सार्व। सस्नेहादरम्। अहो! नीलाम्बरचक्रवर्त्तिनो हि मत्तातसतीर्थाः (ढ)। मिश्रपुरन्दरश्च मत्तातपादानामतिमान्यः।

गोपी। श्रीजगन्नाथदर्शनसौलभ्यमेषामुद्देश्यमस्ति।

सार्व। सर्वथैव तद्भावि। कः कोऽत्र भो आहूयतां चन्दनेश्वरः (ण)।

प्रविश्य सत्वरं चन्दनेश्वरो भगवन्तं प्रणम्य पितरं प्रणमति।

सार्व। चन्दनेश्वर! श्रीपादस्यानुपदं (त) गच्छ। यथाऽयं सुखेन प्रत्यहं यथाकामं श्रीमुखं पश्यति तथा सर्वैरेव

(ट) आशंसनं वचनम्।

(ठ) पूर्वाश्रमे गार्हस्थ्यदशायाम्।

(ड) जगन्नाथमिश्रपुरन्दरस्य मिश्रवंशेन्द्रस्य जगन्नाथस्येत्यर्थः

(ढ) मत्तातसतीर्थाः मम पितुः सहाध्यायिनः।

(ण) चन्दनेश्वरः सार्वभौमस्य पुत्रः।

(त) श्रीपादस्य चैतन्यदेवस्य।

विधेयं यथा केनापि बाधा न क्रियते। अयं मदीयो मान्यतम इति।

चन्द्र। यथाऽऽज्ञापयन्ति श्रीचरणाः।

सार्व। स्वामिन्नुत्थीयताम्।

भग। नित्यानन्दादिभिः सह चन्द्रनेश्वरमादाय निष्क्रान्तः।

सार्व। आचार्य्य! स्थीयताम्।

गोपी। अहं निष्क्रान्त एव मुकुन्दं हस्तेनाकृष्य प्रत्याहृत्य उपविशति।

सार्व। आचार्य्य! अमुमालोक्य स्नेहशोकतारल्यं (य) जातम्।

नीलाम्बरचक्रवर्त्तिसम्बन्धादयमतीव स्नेहास्पदं नः।
अल्पीयसि वयसि तुरीयाश्रमो गृहीतः कथमनेन॥
कस्तावदस्य महावाक्योपदेष्टा। (द)

गोपी। केशवभारती।

सार्व। हन्त! कथमयं भारतीसम्प्रदाये प्रवर्त्तितवान् वा।

गोपी। नास्य तथा वाह्यापेक्षा केवलं त्याग एवादरः। (ध)

(य) स्नेहशोकेति स्नेहशोकयोः तारल्यं चापल्यं स्नेहः शोकश्च जायते इत्यर्थः।

(द) तुरीयाश्रमः चतुर्थाश्रमः सन्न्यास इत्यर्थः। महावाक्येति महावाक्यस्य महामन्त्रस्य।

(ध) वाह्यापेक्षा वहिराडम्बराभिलाषः। त्यागे सर्वस्य इति शेषः आदरः अभिलाषः।

सार्व। किं त्वयत् वाक्यम्।

गोपी। सम्प्रदायोत्कर्षादि। (न)

सार्व। समीचीनं नोच्यते। आश्रमौज्ज्वल्यं न वाक्यम्।

गोपी। केवलं गौरवायेति (प) वाक्यमेतत्।

सार्व। गौरवेण किमपराद्धं तन्मयैवं भण्यते भद्रतर-साम्प्रदायिकभिक्षोः पुनर्योगपट्टं ग्राहयित्वा वेदान्तश्रवण-मायं संस्करणीयः। (फ)

गोपी। सास्रूयमिव। भट्टाचार्य्य! न ज्ञायतेऽस्य महिमा भवद्भिः। मया तु यद्यदृष्टमस्ति तेनानुमितमयमीश्वर एव इति।

मुकुन्द। स्वगतम्। साधु भो आचार्य्य! साधु। दग्धं मे जीवितं (ब) निर्वापितमस्ति भवता।

शिष्याः। केन प्रमाणेन ईश्वरोऽयमिति ज्ञातं भवता।

गोपी। भगवदनुग्रहजन्यज्ञानविशेषेण ह्यलौकिकेन प्रमाणेन। भगवत्तत्त्वं लौकिकेन प्रमाणेन प्रमातुं (भ) न शक्यते अलौकिकत्वात्।

(न) सम्प्रदायोत्कर्षादि। येन सम्प्रदायस्य स्वाश्रमस्य उत्कर्षः साध्यते तदेव करणीयमित्येवं रूपाभिलाषोऽस्य न वर्त्तते इति भावः।

(प्र) गौरवाय आश्रमौज्ज्वल्यमिति शेषः। न तु परमार्थसाधना-येति भावः।

(फ) योगपट्टं योगिधार्य्यः पट्टसूत्रविशेषः। अयं चैतन्यदेवः संस्करणीयः शोधनीयः।

(ब) दग्धं ज्वालितं सार्वभौमवचनेनेति शेषः।

(भ) प्रमातुं ज्ञातुम्।

शिष्याः। नायं शास्त्रार्थः। अनुमानेन न कथमीश्वरः साध्यते।

गोपी। ईश्वरस्तेन साध्यतां नाम। न खलु तत्तत्त्वं साधयितुं शक्यते। तत्तु तदनुग्रहजन्यज्ञानेनैव तस्य प्रमाकरणत्वात्। (म)

शिष्याः। क्व दृष्टं तस्य (य) प्रमाकरणत्वम्।

गोपी। पुराणवाक्य एव।

शिष्याः। पठ्यताम्।

गोपी। अथापि ते देव! पदाम्बुजद्वय-
प्रसादलेशानुगृहीत एव हि।
जानाति तत्त्वं भगवन्महिम्नो-
न चान्य एकोऽपि चिरं विचिन्वन्॥ (र)

विचिन्वन् इति शास्त्रादिवर्त्मसु।

(म) तत्तत्त्वम् ईश्वरतत्त्वम्। तदनुग्रहेति तस्य ईश्वरस्य अनुग्रहजन्येन ज्ञानेनैव नान्येनेति भावः तत् ईश्वरतत्त्वं साधयितुं शक्यते इति शेषः। तस्य तत्त्वस्य प्रमा अभ्रान्तं ज्ञानमेव करणं साधकतमं यस्य तथात्वात् करणं साधकतममित्यमरः।

(य) क्वेति। क्व कुत्र शास्त्रे इति शेषः तस्य तत्त्वस्य।

(र) अथेति। हे देव! अथापि यद्यपि ते तव पदाम्बुजद्वयस्य चरणकमलयुगलस्य प्रसादलेशेन अनुगृहीतः स्यात् जन इति शेषः। स एव हि निश्चितं भगवतो महिम्नः माहात्म्यस्य तत्त्वं जानाति, अन्य एकोऽपि कोऽपि चिरं विचिन्वन् शास्त्राण्यालोचयन्नपि न च जानातीत्यनेन सम्बन्धः। भगवत्प्रसादलभ्यमेव तत्तत्त्वज्ञानं नान्यथा लभ्यमपीति फलितार्थः।

शिष्याः। तर्हि शास्त्रैः किं तदनुग्रहो न भवति?।

गोपी। अथ किम्?। कथमन्यथा विपश्चिन्नित्युक्तम्।

शिष्याः। विहस्य। तत्कथमेतावन्ति दिनानि वृथैव भवता पठितम्।

गोपी। शिल्पविशेष (ख) एव तत्।

सार्व। विहस्य। भवति तदनुग्रहोऽस्ति जात(ग)स्तत्-स्वन्तु भवता ज्ञायत एव किञ्चित् कथ्यताम्।

गोपी। तत्कथाविषयो (घ) न भवति अनुभववेद्यमेव भवति चेदस्यानुग्रहस्त्वयि तदा भवतैवानुभाव्यम्।

शिष्याः। स्वगतम्। कथमयमसाध्वसमेवानेन सह व्यधि-करणं (ङ) किञ्चिज्जल्पति अथ वा आदृतोऽयमिति किञ्चित् परिहसतीव।

गोपी। भट्टाचार्य्य! भवता यदेनमीश्वरमुद्दिश्य किञ्चि-द्व्यधिकरणमुक्तं तेनासहिष्णुतया किञ्चिन्मयोक्तं न ताव-दतिगभीरैर्भवद्भिरेवमभिलपितुं (च) युज्यते। अथ वा नैष वो दोषः।

(ख) शिल्पविशेष इति। तत् शास्त्रं शिल्पविशेषः रचनाचातुर्य्य-मात्रमिति भावः।

(ग) भवतीति। भवति त्वयि तदनुग्रहः तस्य भगवतः अनुग्रहः जातः अस्ति।

(घ) तत् तत्त्वं कथाविषयः वचनीयमित्यर्थः।

(ङ) कथमयमिति। अयं गोपीनाथः असाध्वसं निर्भयम् अनेन भट्टाचार्य्येण सार्वभौमेन अधिकरणं विरुद्धम्।

(च) अभिलपितुं वक्तुम्।

यच्छक्तयो वदतां वादिनां वै
विवादसंवादभुवो भवन्ति।
कुर्वन्ति चैषां मुहुरात्ममोहं
तस्मै नमोऽनन्तगुणाय भूम्ने ॥ (ङ)

सार्व। विदग्ध ज्ञातं वैष्णवोऽसि।

गोपी। सप्रश्रयम्। यद्यस्य कृपा स्यात्तदा त्वमपि (च) भविष्यसि।

सार्व। अलं पल्लवेन। भवान् गच्छतु भगवद्दर्शनानन्तरं मातृस्वसुरावासे तवेश्वरः सगणो वास्यतां (क) मयाऽप्य भगवत्प्रसादेन निमन्त्रयितव्यश्च।

गोपी। यथाऽऽज्ञापयसि।

सार्व। तदहमपि माध्यन्दिनकर्मणे प्रयामि। इति सशिष्यो निष्क्रान्तः।

गोपी। मुकुन्द एह्येहि। इति परिक्रम्य। भो मुकुन्द! भट्टाचार्य्यवाग्वज्रमद्यापि मे हृदयं कृन्तति यदि परम-

(ङ) यदिति। यस्य भगवतः शक्तयः वदतां जल्पतां वादिनां विवादसंवादस्य भुवः स्थानानि भवन्ति याः शक्तीरुद्दिश्य वादिनः परस्परं विवदन्ते इति भावः। मुहुः पुनः पुनः [illegible]षां वादिनाम् आत्ममोहं स्वमोहजनकं तम इत्यर्थः कुर्वन्ति जनयन्ति तस्मै अनन्तगुणाय अशेषगुणशालिने भूम्ने महिम्ने परमात्मने इति भावः नमः।

(च) अस्य भगवतः। त्वमपि वैष्णव इति शेषः।

(क) पल्लवेन विस्तरेण। वास्यताम् अवस्थाप्यताम्।

कारुणिकेन भगवता तदुह्यते तदेव मे मनो निर्वाति। (ख)

सुक। किमश्चर्य्यं तस्य भगवतः।

गोपी। तदेहि श्रीजगन्नाथदर्शनार्थं प्रयातं भगवन्त-मनुसराव। इति निष्क्रान्ते। नेपथ्ये। अहो अद्भुतम्।

तुङ्गभृङ्गयुवसङ्गतफुल्लत्-
पुण्डरीकवरलोचनलक्ष्मि।
हिङ्गुलस्नपितशुक्लचतुर्थी-
श्वेतदीधितिकलाधरबिम्बम्॥

अपिच, चारुकारुणिकमारुचिराङ्गं
ब्रह्मदारुमयमेतदुदेति।
आहतोऽस्य रुचिकन्दलवृन्दै-
रिन्द्रनीलमणिदर्पणदर्पः॥ (ग)

(ख) भट्टाचार्य्येति। भट्टाचार्य्यस्य सार्वभौमस्य वाक्यं वचन-कुलिशम्। तत् कुलिशम्। निर्वाति निर्वृतिं लभते।

(ग) तुङ्गेति। तुङ्गौ महान्तौ भृङ्गयुवभ्यां भ्रमराभ्यामित्यर्थः सङ्ग-तयोर्युक्तयोः फुल्लतोर्विकसतोः पुण्डरीकवरयोः सिताम्भोजश्रेष्ठयोरिव लोचनयोर्नयनयोः लक्ष्मीः श्रीः यस्य तादृशं तथा हिङ्गुलेन स्नपिता अनुलिप्ता या शुक्लचतुर्थीश्वेतदीधितिकला शुक्लचतुर्थ्यामुदितचन्द्रकला तद्वत् अधरबिम्बम् अधररूपं बिम्बफलं यस्य तथाविधं चारु मनोज्ञं कारुणिकं करुणामयम् आरुचिराणि मनोहराणि अङ्गानि यस्य तथोक्तम् एतत् दारुमयं काष्ठमयं ब्रह्म परमात्मा उदेति विराजते। अस्य दारुमयस्य ब्रह्मणः रुचिकन्दलवृन्दैः प्रभापटलैः इन्द्रमणिदर्पणस्य

गोपी। अये! श्रीमुखदर्शनं जातमिव यदमौ नित्यानन्दादयो मिथो निर्देशयन्ति। पुनस्तत्रैव।

अन्योन्येक्षणरागरञ्जिततया द्वौ निर्निमेषेक्षणौ
राजेते जगतः पती उभयतो निस्पन्दसर्वाङ्गकौ।
दारुब्रह्मणि लीयते किमु नरब्रह्मैतदाहो नर-
ब्रह्मण्येव हि लीयते शिव शिव ब्रह्मैव वा दारवम्॥ (घ)

गोपी। भद्रं भो भद्रम् एक एव भगवानास्वाद्यास्वादकभावेन द्विधाभूत इव (ङ)। पुनस्तत्रैव।

इन्द्रकान्तरत्नस्य दर्पः अहङ्कारः आहतः नाशितः। इन्द्रनीलदर्पणतोऽपि अधिकं शोभते इति भावः।

(घ) अन्योन्येति। उभयतः परस्परसम्मुखतः स्थितावित्यर्थः द्वौ जगतः पती नररूपदारुरूपाविति भावः। अन्योन्यस्य परस्परस्य ईक्षणे अवलोकने यः रागः अनुरागः अभिनिवेश इत्यर्थः तेन रञ्जिततया आविष्टतया निर्निमेषेक्षणौ अनिमिषनयनौ तथा निस्पन्दानि सर्वाणि अङ्गानि ययोः तथाभूतौ सन्तौ राजेते शोभेते। एतत् नरब्रह्म मानवाकृतिः परमात्मा चैतन्यदेव इत्यर्थः दारुब्रह्मणि काष्ठमये परमात्मनि जगन्नाथदेवे इत्यर्थः लीयते किम्? लीनो भवति किम्? शिवशिवेति आनन्दजनकमव्ययम्। आहो अथवा दारवं दारुमयं ब्रह्मैव जगन्नाथ एव नरब्रह्मणि चैतन्यदेवे लीयते वा लीनो भवति किम्? शार्दूलविक्रीडितं वृत्तम्।

(ङ) आस्वाद्येति। आस्वाद्यः आस्वादविषयः साभिनिवेशं दर्शनीयः, आस्वादकः आस्वादकः आस्वादनकर्त्ता साभिनिवेशं द्रष्टेत्यर्थः तयोर्भावः तेन नररूपेण भगवता दारुमयो भगवान् आस्वाद्यते दारुमयेन च भगवता नररूपो भगवानास्वाद्यते इति भावः।

द्वावेव पूर्णकरुणौ जगदुद्दिधीर्षू
द्वावेव लोचनपथं जगतो जिहानौ।
अन्तःस्थनन्दतनयोऽन्तरवर्त्तिदारु-
ब्रह्मेति केवलमियानुभयोर्हि भेदः॥ (च)

गोपी। साधु भो नित्यानन्ददेव! साधु तत्त्वज्ञोऽसि भगवतो गौरचन्द्रस्य। तन्मन्ये भगवद्दर्शनं कृत्वा प्रत्यावर्त्तन्त एव सर्वे। तदावामपि भगवन्तं श्रीजगन्नाथं दृष्ट्वा त्वरितमेव पुनरेतावनुसराव। इति निष्क्रान्तौ।

ततः प्रविशति पुण्डरीकाक्षदर्शनानन्दनिःस्पन्दो भगवान् नित्यानन्दादयश्चन्दनेश्वरश्च।

चन्द। हंहो! महान्तः! सम्पन्नं यथासुखमेव भवतां भगवद्दर्शनम्।

नित्यानन्दादयः। यथा मनोरथमेव सुसम्पन्नम्।

चन्द। स्वगतम् अहो! कथमसौ विलम्बते गोपीनाथाचार्य्यः। किमिदानीमहं करोमि न किमपि निगदितं तातचरणैः। मन्ये तस्मै एव सर्वं कथितमस्ति तत्कथमयमद्यापि नायातः। इति परितोऽवलोकयति।

ततः प्रविशति त्वरां नाटयन् मुकुन्देन सहाचार्य्यः।

(च) द्वावेवेति। द्वावेव चैतन्यजगन्नाथौ पूर्णकरुणौ कृपानिधी, जगताम् उद्दिधीर्षू उद्धर्त्तुमिच्छू। तथा द्वावेव जगतो लोचनपथं नयनविषयं जिहानौ गतावित्यर्थः। उभयोः केवलम् इयान् भेदः विशेषः हि निश्चितः यदेकः अन्तःस्थः नन्दतनयः श्रीकृष्णः यस्य तादृशः, अपरः अन्तरवर्त्तिदारु दार्वन्तरवर्त्तीत्यर्थः ब्रह्मेति। वसन्ततिलकं वृत्तम्।

आचा। एहि मुकुन्द! एतेऽमी गच्छन्ति तदुभयमेव संवृत्तम् नीलाचलचन्द्रोऽपि दृष्टो हेमाचलगौरोऽपि (छ) दृश्यते। इति सत्वरमुपसृत्य। चन्दनेश्वर! त्वमितो गृहं गच्छ अतः परं मयैव सर्वं समाधास्यते।

चन्द। यथाह भवान्। इति भगवन्तं प्रणम्य निष्क्रान्तः।

गोपी। उपसृत्य देवं प्रणमति।

दामो। भगवन्नयमाचार्य्यः प्रणमति।

भगवान्। बहिर्दृष्टिं नाटयित्वा। एह्येहि। इति तमालिङ्गति।

गोपी। देव! भट्टाचार्य्येण (ज) सानुचर एव निमन्त्रितोऽसि। तदित एवागच्छन्तु। इति पूर्वोद्दिष्टाऽऽवासं प्रापय्य भगवतः पादधावनादिकं दन्तधावनावसानं सकलमेव परिचरणं कृत्वा भिक्षोत्तरं सुखनिविष्टे सति तस्मिन् सर्वमनस्यम्। देव! भट्टाचार्य्येणान्यदपि निमन्त्रितमस्ति।

भग। किं तत्?।

गोपी। साम्प्रदायिकसन्न्यासिनः सकाशाद्योगपट्टं (झ) ग्राहयित्वा वेदान्तं श्रावयिष्यति।

भग। अनुगृहीतोऽस्मि तेन भवत्वेवं करिष्यामि।

मुकु। देव! आचार्य्येण तदवधि तेन वाक्स्फुलिङ्ग-

(छ) नीलाचलचन्द्रः जगन्नाथः। हेमाचलगौरः चैतन्यदेवः।

(ज) भट्टाचार्य्येण सार्वभौमेन।

(झ) साम्प्रदायिकसन्न्यासिनः भवत इत्यर्थः सकाशात् सन्निधिं लब्ध्वा तं प्राप्येत्यर्थः।

भिकरेण दन्दह्यमानहृदयेन स्वीयते महाप्रसादोऽपि नाद्य स्वीकृतोऽस्ति। (ञ)

भग। आचार्य्य! बालकोऽस्मि। यदयं मां प्रति स्निह्यति तेनैवेदमवादीत्। कथमत्र दूयसे?

गोपी। भगवन्! श्रीचरणैरिदं मे शल्यं हृदयादुद्ध्रियते चेत्तदा जीवितं धारयिष्ये। इति रोदिति।

भग। पुण्डरीकाक्षस्ते मनोरथं पूरयिष्यति। दामोदर! भवताऽयं निमन्त्र्यताम्। (ट)

दामो। यथाऽऽज्ञापयसि। इति तमादाय निष्क्रामति।

भग। जगदानन्द! भगवतः पुण्डरीकाक्षस्य रजनीशेषशयनोत्थापनलीला (ठ) यथा दृश्यते तथा यतनीयम्।

प्रविश्याचार्य्येण सह।

दामो। भगवन्! यथाऽऽज्ञम् महाप्रसादेन भोजितोऽयमत्रैव शिशयिषुरस्ति। (ड)

भग। साधु साधु। इति सर्वे प्रियमङ्गलकथया मुहूर्त्तान् गमयन्ति नेपथ्ये पाणिशङ्खध्वनिः। (ढ)

---

(ञ) आचार्य्येण गोपीनाथेन। वाक्स्फुलिङ्गनिकरेण वचनाग्निकणचयेन। महाप्रसादः भगवत्प्रसादीकृतमन्नादिद्रव्यम्। स्वीकृतः गृहीतः।

(ट) अयं गोपीनाथाचार्य्यः निमन्त्र्यतां भोजनार्थम् आहूयताम्।

(ठ) रजनीति। रजन्याः शेषे अवसाने शयनात् यत् उत्थापनं तदेव लीला व्यापारविशेषः।

(ड) शिशयिषुः शयितुमिच्छुः।

(ढ) पाणिशङ्खध्वनिः हस्तस्थितशङ्खालङ्कारशब्दः पाणिस्थितस्य

सर्वे सचमत्कारम्। अहो! यामशेषेव त्रियामा। यदयम्।

पूर्देव्याः शयनोत्थिताविव चलत्सर्वाङ्गभूषाक्वणः
किं वा देवकुलस्य वारणपतेरुद्बृंहितं बृंहितम्।
आयातेति कृपानिधेः किमु कृपादेवी जगत्प्राणिना-
माह्वानध्वनिरभ्युपैति मधुरः श्रीपाणिशङ्खध्वनिः॥ (च)

भग। तदहो! अवितथमेव (त) गतेयं रजनी। आचार्य्य! एहि सहैव पुण्डरीकाक्षस्य शयनोत्थानाव-कार्यं (थ) पश्याम।

गोपी। यथाऽऽज्ञापयसि। इति समयोचितं कर्म कर्त्तुं निष्क्रान्तः। प्रविश्य सत्वरः कश्चित्। कः कोऽत्र भो गोपीनाथाचार्य्यः क्व वर्त्तते तत्त्वं तज्जानासि। आकाशे लक्ष्यं बद्धा। किं ब्रवीषि। आचार्य्यः श्रीकृष्णचैतन्यदेवस्य निकटे।

---

शङ्खस्य वादित्रभेदस्य ध्वनिः। यामशेषा प्रहरमात्रावशिष्टा।

(च) पूर्देव्या इति। पूर्देव्याः नगरीदेव्याः शयनात् उत्थितौ उत्थाने चलन्तीनां सर्वाङ्गभूषाणां सर्वगात्रालङ्काराणां क्वण इव निनादः किम्? वा अथवा देवकुलस्य देवमन्दिरस्य वारणपतेः गजेन्द्रस्य उद्बृंहितम् उच्चतरं बृंहितं बृंहणं किम्? कृपानिधेर्जगन्नाथस्य कृपादेवी आयाता उपस्थिता इति हेतोः जगत्प्राणिनाम् आह्वानध्वनिः किम्? मधुरः श्रीपाणिशङ्खध्वनिः प्रिया सञ्चाराः पाणिस्थितस्य शङ्खस्य अलङ्कारविशेषस्य ध्वनिः अभ्युपैति उद्गच्छति। शार्दूलविक्रीडितं वृत्तम्।

(त) अवितथमेव सत्यमेव।

(थ) सहैव मिलित्वैव। शयनेति शयनात् शय्याया उत्थानाय-कार्यम् उत्थानव्यापारम्।

इति। भवतु तत्रैव यामि। इति कतिचित्पदानि गत्वा पुरोऽवलोक्य। अहो! अयमेष आचार्य्यो भविष्यति। इत्युपसर्पति।

ततः प्रविशत्याचार्य्यः।

आचा। अहो! जातप्रायोऽयं समयः शयनोत्थानस्य तदहं त्वरयामि भगवन्तम्।

पुरुषः। उपसृत्य। आचार्य्य! भट्टाचार्य्यो विज्ञापयति श्रीकृष्णचैतन्यदेवो यथा भगवतो जगन्नाथदेवस्य शय्योत्थानं पश्यति तथा त्वयैव सङ्गे कृत्वा यतनीयम्।

गोपी। यथाऽऽज्ञं करवाणि। इति श्रीकृष्णचैतन्यदेवं त्वरयितुमुपसर्पति ततः प्रविशति सानुचरो देवः।

देवः। मुकुन्द! विलोक्यतां को विलम्ब आचार्य्यस्य।

गोपी। एषोऽहं भगवन्तं भगवन्तं प्रतीक्षमाणो वर्त्ते।

भग। तदग्रे गम्यताम्।

आचा। तथा कृत्वा। भगवन्नित इतः। इति प्रवेशं नाटयित्वा जगन्मोहनमासाद्य। देव! पश्य।

तत्कालीनकवाटवाटनिविडोद्घाटे विनिष्क्रामता<br>
गर्भागारगरिष्ठसौरभभरेणामोदमभ्युद्वमन्।<br>
निद्राभङ्गजृम्भतालसो मुखमिव व्यादाय शेषे निशो<br>
जृम्भारम्भमिवातनोति समये प्रासाद एष प्रभोः॥ (द)

(द) तत्कालीनेति। निशः शेषे समये एषः प्रभोः प्रासादः तत्कालीनः निशावसानकालीनः कवाटवाटनिविडस्य कवाटरूपदृढावरणस्य य उद्घाटः उद्घाटनं तस्मिन् विनिष्क्रामता विनिर्गच्छता गर्भागारस्य अन्तर्गृहस्य गरिष्ठेन अतिमहता सौरभभरेण आमोदविस्तरेण आमोदं हर्षं मनःप्रसादमित्यर्थः उद्वमन् जनयन् निद्राभङ्गेन

अपिच, देव ! आश्चर्यमाश्चर्यम् ।

दीपाभावघनान्धकारगहने गम्भीरगम्भीरिका
कुक्षौ तल्पत उत्थितस्य जयतो लक्ष्मीपतेर्लोचने ।
कालिन्दीसलिलोदरे विजयिनी वातेन घूर्णायिते
प्रोन्मत्तभ्रमरावलीढजठरे सत्पुण्डरीके इव ॥ ( ध )

भग । गरुड़स्तम्भस्य पश्चादवस्थाय सम्भूर्द्ध पश्यति ।

मुकु । आचार्य्य ! पश्य पश्य ।

क्षणात् प्रदीपावलयः समन्ता-
द्गम्भीरिकायाः कुहरे ज्वलन्त्यः ।
विलोचनोत्थारिभिरस्त्रपूरै-
र्न्यग्भूतभासो लिखिता इवाऽऽसन् ॥ ( न )

---

भूतं जनितम् अलसं जाड्यं यस्य तथाभूतो जन इव मुखं व्यादाय जृम्भारम्भमिव आतनोति विस्तारयति । शार्दूलविक्रीड़ितं वृत्तम् ।

( ध ) दीपाभावेति । दीपानाम् अभावेन घनैर्निविड़ैरन्धकारैः गहने आच्छन्ने इत्यर्थः गम्भीरा या गम्भीरिका तदाख्यं देवमन्दिरं तस्याः कुक्षौ अभ्यन्तरे तल्पतः शयनात् उत्थितस्य जयतः सर्वोत्कर्षिणः लक्ष्मीपतेः जगन्नाथस्य लोचने नयने कालिन्द्याः यमुनायाः सलिलोदरे जलमध्ये विजयिनी उत्कर्षशालिनी वातेन घूर्णायिते प्रोन्मत्ताभ्यां तरलाभ्यां भ्रमराभ्याम् अवलीढम् आक्रान्तं जठरं ययोः तादृशे सती सुन्दरे पुण्डरीके इव सिताम्भोरुहे इव राजेते इति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ।

(न) क्षणादिति । क्षणात् क्षणमात्रेण गम्भीरिकायाः देवमन्दिरस्य कुहरे मध्ये समन्तात् ज्वलन्त्यः प्रदीपानामावलयः विलोचनाभ्याम् उत्थारिभिः प्रतोद्भः अस्त्रपूरैः आनन्दाश्रुप्रवाहैः देवस्य चैतन्यस्येति

गोपी । पश्य पश्य ।

अनुवदनप्रक्षालनमभ्यङ्गस्नानभूषणाद्यमथ ।
अनु बालभोगलीला हरिवल्लभभोग एष तत्पश्चात् ॥ (प)
दृश्यतामधुना प्रातर्धूपाख्यः पूजाविशेषः ।

भग । आनन्दस्तिमित एव सपुलकाश्रु पश्यत्येव ।

आचा । भो भो ! जगदानन्दादयः ! पश्यत पश्यत । प्रातर्धूपस्य प्रसादान्नं कियदञ्जलौ कृत्वा कश्चित् मालाञ्च करयोः कृत्वा कश्चिद्युगपदेव समागच्छतः । किमेतौ ? महाप्रभवे श्रीकृष्णचैतन्याय दास्यतः । केन वा प्रेरिता-वेतौ । अथ वा श्रीजगन्नाथेनैव । प्रविश्य पार्षदौ श्रीकृष्णचैतन्य-समीपमुपसर्पतः ।

भग । उपसृत्य मूर्द्धानमवनमयति । एकः मालां प्रयच्छति ।

भग । बहिर्वासोऽञ्चलं प्रसारयति ।

अपरः । प्रसादान्नं प्रयच्छति ।

भग । अञ्चले कृत्वा श्रीजगन्नाथं प्रणम्यैव सिंहवत्त्वरितगतिर्नि-ष्क्रान्तः ।

सर्वे । अहो ! किमिदम् । कथमकस्मादेव देवो नि-ष्क्रान्तः । तदागच्छत क्वायं गच्छति विलोकयाम । इति

भावः व्यग्रभूताः तिरस्कृताः भासो यासां तथाविधाः सत्यः लिखिता इव चित्रिता इव निर्भास इत्यर्थः आसन् । उपजातिवृत्तम् ।

(प) अनुवदनेति । अनुवदनप्रक्षालनं मुखप्रक्षालनात् परमित्यर्थः देवस्येति शेषः । अथ अनन्तरम् अभ्यङ्गस्नानं तैलमर्दनपुरःसरं स्नानं भूषणाद्यम् अलङ्कारवसनादिपरिधानञ्चेत्यर्थः । अनु पश्चात् बाल-भोगलीला बाल्यभोजनव्यापारः, तत्पश्चात् एष हरिवल्लभयोगः तदाख्यः सेवाविशेषः ।

पुरान्निष्क्रम्य कतिचित्पदानि गत्वा पुरतो विलोक्य। अहो! भगवान् स्वावासवर्त्म त्यक्तवान्।

गोपी। निभाल्य। अये! दामोदरादयः सार्वभौमालयं प्रति देवः प्रस्थितवान्। तत् फलितं भट्टाचार्य्यस्य सुकृतद्रुमेण। तद्दामोदरजगदानन्दौ भगवत्सङ्गे प्रयातं, मुकुन्देन सार्द्धमहमासवस्थल एव तिष्ठामि।

उभौ। यथारुचितं भवते। इति निष्क्रान्तौ।

गोपी। एहि मुकुन्द! सार्वभौमस्य द्वितीयकक्षायां तिष्ठाव। इति तथा कृत्वा पुरोऽवलोक्य। अये! एतौ सार्वभौमभृत्यौ सविस्मयमितएवोपसर्पतः। तदपवार्य्य तिष्ठाव।

इति द्वारोपान्ते तिष्ठतः। ततः प्रविशतो भृत्यौ।

एकः। अले! एसे सण्णासी कंपि मोहणमन्तं जाणादि। अदो भट्टाचालिए इमिणा गहग्गत्थे विश्र किदे (१)।

अन्यः। अले! किलिसे किदे (२)।

प्रथमः। अले ण आणासि सेज्जाए पज्जुत्थिदेज्जेव भट्टाचालिए एसे पश्रम्हादो सश्रणघरदुआले गदे तदो वहुएण कहिअं। भट्टाचालिश्र! भट्टाचालिश्र! उत्थेहि उत्थेहि से सण्णासी आअदोत्ति। तदो ससम्भिम्र भट्टाचालिए उत्थिअ इमस्स चलणे पडिए। तदो इमिणा जहण्णाहस्स पसाश्रभत्तं हत्थे कदुअ भुञ्जत्ति गदिदं। तदो अम्हाणं

(१) अरे! एष सन्न्यासी किमपि मोहनमन्त्रं जानाति। यतो भट्टाचार्य्योऽनेन ग्रहग्रस्त इव कृतः।

(२) अरे! कीदृशः कृतः।

ईसले उम्मत्ते विश्र अकिश्र विचाले तक्खणमेत्तेण तं भत्तं गिलिश्र वत्ते अकिद-सिणाणेज्जेव अकिश्र-मुह-पक्खालणेज्जेव। गिलिऊण उम्मत्ते विश्र कण्टइद-सम्रलङ्गे णत्रण-जल त्थिमिद-वसणे घग्घल-कण्ठसद्दे अवम्हाल-रोष-विवसे (फ) विश्र भविश्र महीदले लुठदि किं हुविस्सदि ण आणीम्ह (१)।

गोपी। आकर्ण्य। मुकुन्द! श्रुतम्।

मुकु। तवानुतापेनैव देवेनेदमध्यवसितम्।

भत्यौ। आअच्छ अम्हे गोपीणाहाचालिअं मग्गेम (२)।

इति निष्क्रान्तौ।

गोपी। भद्रं भो! भद्रम्। यदाभ्यामहं न दृष्टः।

(१) अरे! न जानासि प्रथ्यातोऽनुत्थिते एव भट्टाचार्य्ये सति एषोऽकस्मात् शयनकक्षद्वारे गतस्ततो वटुकेन कथितम्। भट्टाचार्य्य! भट्टाचार्य्य! उत्तिष्ठ उत्तिष्ठ स सन्न्यासी आगत इति। तदा धस्-धसितिशब्दं कृत्वा भट्टाचार्य्य उत्थाय तस्य चरणे पतितः। ततोऽनेन जगन्नाथस्य प्रसादभक्तं हस्ते कृत्वा भुङ्क्ष्वेति गदितम्। तदा अस्मा-कमीश उन्मत्त इव अकृतविचारस्तत्क्षणमात्रेण तद्भक्तं गिलितवान् अकृतस्नान एव अकृतमुखप्रक्षालन एव। गिलित्वा उन्मत्त इव कण्ट-कितसर्वाङ्गो नयनजलस्तिमितसर्वाङ्गो घर्घर-कण्ठशब्दोऽपस्मार-रोग-विवश इव भूत्वा महीतले लुठति किं भविष्यति न जानीमः।

(२) आगच्छ आवां गोपीनाथाचार्य्यं मार्गयाव।

(फ) ईशः स्वामी। अपस्मारेति अपगतः स्मारः स्मरणं यस्मात् तादृशो यो रोगः मृगीति ख्यातः तेन विवश इव विचेतन इव।

तदितः स्थित्वा दामोदरजगदानन्दौ प्रतिपालयाव । इति तथा कुरुतः ।

ततः प्रविशति विस्मयं नाटयन् दामोदरः ।

दामो । विना वारीं बद्धो वनमदकरीन्द्रो भगवता
विना सेकं स्वेषां शमित इव हृत्तापदहनः ।
यदृच्छायोगेन व्यरचि यदिदं पण्डितपतेः
कठोरं वज्रादप्यमृतमिव चेतोऽस्य सरसम् ॥ (ब)

गोपी । उपसृत्य । दामोदर ! किन्तत् ।

दामो । अस्ति रहस्यं (भ) कथयिष्यामः । किन्तु मया भवदर्थमित आगतम् । द्वारान्तरेण निष्क्रम्य लब्धाऽऽवासं भगवन्तमनुसराम । इति त्रयः कतिचित्पदानि परिक्रामन्ति ।

दामो । विना वारीमित्यादि पठित्वा सर्वमेव कथयति ।

गोपी । श्रुतमेव सर्वं मिथः कथयतोस्तद्भृत्ययोः प्रमुखतः ।

(ब) विनेति । भगवता चैतन्यदेवेन वारीं गजबन्धनयन्त्रं वारी तु गजबन्धनीत्यमरः । विना वनमदकरीन्द्रः वन्यो मत्तहस्ती बद्धः, सेकं जलादिनिक्षेपं विना स्वेषां स्वयगोष्ठाम् अस्मद्विधानामित्यर्थः हृत्तापदहनः हृदयस्यसन्तापाग्निः शमित इव निर्वापित इव । यत् यतः यदृच्छायोगेन सहसा अस्य पण्डितपतेः सार्वभौमस्य वज्रादपि कठोरम् इदं चेतः चित्तम् अमृतमिव सरसं सुकोमलं सुमधुरं वा व्यरचि कृतम् । अत्र सार्वभौममनसः सरसीकरणं वनकरीन्द्रस्य विना वारीं बन्धनमिवेति बिम्बप्रतिबिम्बतापर्य्यवसानात् निदर्शनालङ्कारः तदुक्तं दर्पणे । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति । शिखरिणीवृत्तम् ।

(भ) रहस्यं गूढम् ।

दामो। तवैव प्रसादादिदं तस्य सौभाग्यं तदेहि शीघ्रं भगवत्समीपमनुसराम। यदयं भट्टाचार्य्योऽपि कृताह्निकस्तत्रागतप्राय एव इदानीमस्याश्रयो गम्यः। तदिदानीं वाक्प्रयोग एव नाभूत् (म)। इति परिक्रामन्ति।

ततः प्रविशति कृतासनपरिग्रहो भगवान् नित्यानन्दो जगदानन्दश्च।

भग। जगदानन्द! क्वासौ गोपीनाथाचार्य्यः।

जगदा। अयमयं दामोदरमुकुन्दाभ्यां त्वरमाण आचार्य्यः।

गोपी। उपसृत्य। जयति जयति परमकारुणिकः।

जगदा। अहो! कथमयमश्रुतपूर्व्वस्ते व्यवहारविलासः। (य)

गोपी। स खलु भवतामेव वेद्यः। इत्युपसृत्य प्रणमति।

नेपथ्ये। स्वामिन्! नायं पन्थाः श्रीजगन्नाथालयोपसर्पणाय।

भगवान्। आःकर्ण्य आकर्ण्य। ज्ञायतामाचार्य्य! किमेतत्?

गोपी। नेपथ्याभिमुखमवलोक्य। ज्ञातं ज्ञातं अयमयं भट्टाचार्य्यः। श्रीजगन्नाथमदृष्ट्वैव भगवच्चरणोपसर्पणार्थमागच्छति।

दामो। पुरैव ज्ञातमस्ति। इति सर्व्वे तन्मुखमीक्षमाणास्तिष्ठन्ति।

(म) प्रसादात् अनुग्रहात्। वाक्प्रयोगः कथाप्रयोगः कथोपकथनं नाभूत् न बभूव।

(य) व्यवहारविलासः उक्तिवैचित्र्यम्।

ततः प्रविशति विस्मयोत्फुल्लमनाः सार्वभौमः ।

सार्व । स्वगतम् । अहो ! अवितथमेवाह गोपीनाथाचार्य्यः । अस्माकमपि चेतो यदीदृशमजनि तदयमीश्वर एव । इति सोत्कण्ठं परिक्रम्य । अहो ! इदमस्मन्मातृष्वसुः पुरं तद्यावत् प्रविशामि । इति प्रवेशं नाटयति ।

आचा । उत्थायाभिगच्छति ।

सार्व । अग्रेऽवलोक्य । आचार्य्य ! किं कुर्वन्ति स्वामिनः ?

आचा । द्रुत द्रुत आगच्छन्तु भवन्तः ।

सार्व । उपसृत्य भगवन्तं दण्डवत्प्रणम्याञ्जलिं बद्ध्वा ।

नानालीलारसवशतया कुर्वतो लोकलीलां
साक्षात्कारेऽपि च भगवतो नैव तत्त्वावबोधः ।
ज्ञातुं शक्नोत्यहह ! न पुमान् दर्शनात् स्पर्शरत्नं
यावत् स्पर्शाज्जनयतितरां लोहमात्रं न हेम ॥ (र)

अपि च सुजनहृदयसद्मा नाथ ! पद्माधिनाथो
भुवि चरसि यतीन्द्रच्छद्मना पद्मनाभः ।
कथमिह पशुकल्पास्त्वामनल्पानुभावं
प्रकटमनुभवामो हन्त ! वामो विधिर्नः ॥ (ल)

(र) नानेति । नाना विविधा या लीला तस्यां रसः अनुरागः तस्य वशतया अधीनतया लोकलीलां लोकवत् लीलां कुर्वतः भगवतः साक्षात्कारेऽपि समक्षदर्शनेऽपि तत्त्वावबोधः तत्त्वज्ञानं नैव जातः ममेति शेषः । अहह ! आश्चर्य्यं स्पर्शरत्नं यावत् स्पर्शात् स्पर्शमात्रेण लोहं हेम न जनयतितरां तावत् पुमान् दर्शनात् दर्शनमात्रेण स्पर्शरत्नं ज्ञातुं न शक्नोति । मन्दाक्रान्ताछन्दम् । दृष्टान्तालङ्कारः ।

(ल) सुजनेति । हे नाथ ! सुजनानां भक्तानां हृदयमेव सद्म

भगवान् । कर्णौ पिधाय । भट्टाचार्य्य ! भवद्वाक्यपात्र-मेवास्मि तत्किमिदमुच्यते । स्वगतम् । अहो ! इदानीम-स्याशयः परीक्षणीयः ।

प्रकाशम् । हंहो महाशय ! निरुच्यतां (व) कस्तावत् शास्त्रार्थः ।

भट्टा । अञ्जलिं दत्त्वा । भगवन् !

शास्त्रं नानामतमपि तथा कल्पितं स्वस्वरुच्या
नो चेत्तेषां कथमिव मिथः खण्डने पण्डितत्वम् ।
तत्रोद्देश्यं किमपि परमं भक्तियोगो मुरारे-
र्निष्कामो यः स हि भगवतोऽनुग्रहेणैव लभ्यः ॥ (श)

आशयो यस्य तथोक्तः पद्मायाः लक्ष्म्याः अधिनाथः पतिः पद्मं नाभौ यस्य तथाभूतः नारायण इत्यर्थः त्वं यत् ग्लेच्छरूपेण रुद्मविवेषेन भुवि चरसि, इह जगति पशुकल्पाः पशुवत् अज्ञा इत्यर्थः वयम् अन-ल्पानुभावं महाप्रभावं त्वां कथं प्रकटम् आविर्भूतम् अनुभवामः, हन्त खेदे नः अस्माकं विधिः दैवं वामः प्रतिकूलः । चतुर्थपादस्यो-त्तरभागस्य हेतुत्वेन कीर्त्तनात् काव्यलिङ्गमलङ्कारः । मालिनीवृत्तम् ।

(व) निरुच्यतां निरूप्यतां निःशेषेण प्रकाश्यतामित्यर्थः ।

(श) शास्त्रमिति । शास्त्रं तथा स्वस्वरुच्या निजनिजाशयानु-सारेण कल्पितं रचितम् अतः नानामतमपि विभिन्नमतम् अपित्वा-वधारणार्थः । नो चेत् तेषां मिथः परस्परं खण्डने कथं पण्डितत्वं पाण्डित्यं ख्यायते इति शेषः । तत्र तेषु शास्त्रेषु किमपि अनिर्वचनीयं वा दुर्ज्ञेयं परमम् उद्देश्यम् अस्तीति शेषः, परं मुरारेः नारायणस्य यः निष्कामो भक्तियोगः, स हि भगवतः नारायणस्य अनुग्रहेणैव लभ्यः प्राप्यः । न खलु स केनापि शास्त्रेण अभ्यन्तरीकरणीय इति भावः । मन्दाक्रान्तावृत्तम् ।

अपिच, वेदाः पुराणानि च भारतञ्च
तन्त्राणि मन्त्रा अपि सर्व एव।
ब्रह्मैव वस्तु प्रतिपादयन्ति
तत्त्वेऽस्य विभ्राम्यति सर्व एव॥ (ष)

यतः। यस्मिन् बृहत्त्वादथबृंहणत्वा-
न्मुख्यार्थवत्त्वे सविशेषतायाम्।
ये निर्विशेषत्वमुदीरयन्ति
तेनैव तत्साधयितुं समर्थाः॥ (स)

तथाहि, हयशीर्षपञ्चरात्रम्।
या या श्रुतिर्जल्पति निर्विशेषं
सा साऽभिधत्ते सविशेषमेव।

(ष) वेदा इति। वेदाः श्रुतयः ऋग्यजुः सामाथर्वाख्याः, पुराणानि ब्राह्मादीनि भारतं महाभारतं भारतस्य पुराणान्तर्गतत्वेऽपि प्राधान्येन गोवलीवर्दन्यायेन निर्देशः तन्त्राणि शैवानि तथा सर्व एव मन्त्राः ब्रह्मैव वस्तु प्रतिपादयन्ति कीर्त्तयन्ति, किन्तु सर्व एव अस्य ब्रह्मणः तत्त्वे विभ्राम्यति एव विशेषेण भ्रान्तिमृच्छति। इन्द्रवज्रावृत्तम्।

(स) यस्मिन्निति। यस्मिन् ब्रह्मणि बृहत्त्वात् महत्त्वात् अथ किंवा बृंहणत्वात् वर्द्धकत्वात् दृहिवर्द्धे इत्यस्मात् मन् प्रत्ययेन ब्रह्मशब्दनिष्पत्तिरिति बोध्यम्। मुख्यार्थवत्त्वे योगार्थविशिष्टत्वे सति सविशेषतां सम्बन्धावगाहितायामिति भावः तस्याम् अपिरत्नाध्याहार्य्यः ये शास्त्रकारा इति शेषः निर्विशेषत्वम् उदासीनत्वमित्यर्थः ब्रह्मण इति शेषः उदीरयन्ति कीर्त्तयन्ति, ते तत् निर्विशेषत्वं साधयितुं प्रतिपादयितुं नैव समर्थाः नैव शक्नुवन्तीत्यर्थः। इन्द्रवज्रावृत्तम्।

विचारयोगे सति हन्त ! तासां
प्रायो बलीयः सविशेषमेव ॥ (छ)

तथाहि। "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देनैव जातानि जीवन्ति आनन्दं प्रयन्ति अभिसंविशन्ति" इत्यादिकया श्रुत्या अपादानकरणकर्मादिकारकत्वेन विशेषवत्त्वापत्तेः। एवं "यतो वा इमानि भूतानि जायन्ते" इत्यादिकया "स ऐक्षत" इत्यादौ सोऽकामयत इत्यादौ च ईक्षणं पर्यालोचनं कामः सङ्कल्पः। इत्याभ्यामपि विशेषवत्त्वाच्च तावन्निर्विशेषत्वमुपपन्नं भवति। आयाते च विशेषे रूपस्यापि विशेषादायातत्वं न तु तद्रूपं प्राकृतं ज्योतिश्चरणाभिधानादिति। ज्योतिषोऽप्राकृतत्वं यथा साध्यते तथा तस्य रूपस्यापीति। केवलनिर्विशेषत्वे शून्यवादावसरः प्रसज्येत। तेन ब्रह्मशब्दो मुख्य एव मुख्यत्वेन भगवान् ब्रह्मेत्यवशिष्टम्। तथा च "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते"। स्वपक्षरक्षणशिथिलास्तु मुख्यार्थाभावाभावेऽपि लक्षणया निरूपयितुमशक्यमपि निर्विशेषत्वं (ज) ये प्रतिपादयन्ति तेषां दुराग्रहमात्रम्। वस्तुतस्तु।

(छ) येति। या या श्रुतिः निर्विशेषम् उदासीनं ब्रह्मेति शेषः जल्पति कथयति, सा सा एव सविशेषं सम्बन्धावगाहि अभिधत्ते वदति श्रुतिषु ब्रह्मणः निर्विशेषत्वं सविशेषत्वञ्च कथमिति भावः। हन्त तासां श्रुतीनां विचारयोगे सति विशेषविवेचनायां सत्यां सविशेषमेव प्रायः बाहुल्येन बलीयः प्रबलं भवति। उपजातिवृत्तम्।

(ज) आनन्दादिति। आनन्दात् आनन्दमयात् ब्रह्मण इति भावः

आनन्दो द्विविधः प्रोक्तो मूर्त्तामूर्त्तप्रभेदतः ।
अमूर्त्तस्याश्रयो मूर्त्ती मूर्त्तानन्दोऽच्युतो मतः ॥ क)

भूतानि प्राणिनः । प्रयन्ति लभन्ते । अभिसंविशन्ति आनन्दे एव लीना भवन्तीत्यर्थः । अपादानेति आनन्दादित्यपादानम् । आदन्देनेति करणम् । आनन्दमिति कर्म । आदिपदेन अभिसंविशन्तीत्यस्य आनन्दे इति अधिकरणं लभ्यते । विशेषवत्त्वापत्तेः सविशेषत्वप्रतिपादनादित्यर्थः । न हि उदासीनात् किमपि कार्य्यमुत्पद्यते इति भावः । यत इति यतः यस्मात् ब्रह्मणः । स ऐक्षत इति स परमात्मा ऐक्षत अपश्यत् । सः अकामयत इच्छेष । निर्विशेषत्वम् असम्बन्धावगाहित्वं ब्रह्मण इति शेषः उपपन्नं सिद्धम् । आयाते सिद्धिं गते । रूपस्य आकारस्यापि । तद्रूपं तस्य ब्रह्मणः रूपम् । प्राकृतं लौकिकम् । ज्योतिश्चरणाभिधानात् ज्योतिषां तेजसां यश्चरणः शाखाविशेषः तत्राभिधानात् कथनात् यथा ज्योतिषः अप्राकृतत्वम् अलौकिकत्वं रूपस्येति शेषः तथा तस्य ब्रह्मणः रूपस्य अलौकिकत्वमित्यर्थः । केवलनिर्विशेषत्वे सम्यक् निरवच्छिन्नत्वे ब्रह्मण इति शेषः शून्यवादस्य ब्रह्मशून्यं तस्य वादः नास्तीति वाद इत्यर्थः तस्य अवसरः अवकाशः प्रसज्येत प्रसक्तो भवति । तेनेति । तेन हेतुना ब्रह्मशब्दः मुख्य एव अभिधेयः अभिधेयार्थस्य षड्गुणैश्वर्यत्वधर्मावच्छिन्नस्य प्रतिपादनात् । मुख्यत्वेन उक्तरूपमसम्बन्धावगाहिरूपार्थवत्त्वेन भगवान् अणिमादिषडैश्वर्यवान् ब्रह्म इति अवशिष्टं प्रतिपन्नम् । ब्रह्मेति शब्द्यते कीर्त्यते । स्वपक्षेति स्वस्य पक्षः सिद्धान्तः तस्य रक्षणे यः पक्षः आग्रहः तदुपहिताः तद्राविष्टाः मुख्यार्थस्य अभिधेयार्थस्य अभावः विरहः तस्य अभावेऽपि मुख्यार्थसत्त्वेऽपीत्यर्थः लक्षणया मुख्यार्थबोधविपर्ययया वृत्त्या तदुक्तं दर्पणकारेण । मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते । रूढेः प्रयोजनाद्वापि लक्षणा शक्तिरर्पितेति । निर्विशेषत्वं निरवच्छिन्नत्वम् ।

(क) आनन्द इति । मूर्त्तामूर्त्तप्रभेदतः आनन्दः द्विविधः प्रोक्तः

अमूर्त्तः परमात्मा च ज्ञानरूपश्च निर्गुणः।
स्वस्वरूपश्च कूटस्थो ब्रह्म चेति सतां मतम्॥ (ख)
अमूर्त्तमूर्त्तयोर्भेदो नास्ति तत्त्वविचारतः।
भेदस्तु कल्पितो वेदैर्मणितत्तेजसोरिव॥ (ग)

इति हयशीर्षपञ्चरात्रम्। तथा कपिलपञ्चरात्रेऽपि अगस्त्यं प्रति कपिलवाक्यम्।

द्वे ब्रह्मणी तु विज्ञेये मूर्त्तञ्चामूर्त्तमेव च।
मूर्त्तामूर्त्तस्वभावोऽयं ध्येयो नारायणो विभुः॥ (घ)

इति पाञ्चरात्रिकमतमेव निर्मलतरम्। केवलनिर्विशेषब्रह्मवादिनस्तु अमूर्त्तानन्दमेव ब्रह्मेति निरूपयन्तः स्ववासनापारुष्यमेव प्रकटयन्ति नतु ते निर्विशेषत्वं स्थापयितुं शक्नुवन्ति। पाञ्चरात्रिकमतस्वीकारे तु "आनन्द"

---

कथितः मूर्त्तः अमूर्त्तश्चेति द्विप्रकार आनन्द इत्यर्थः। मूर्त्तः आनन्दः अमूर्त्तस्य आनन्दस्य आश्रयः, अच्युतस्तु मूर्त्तानन्दः मूर्त्तिमान् आनन्दो मतः कथितः।

(ख) अमूर्त्त इति। अमूर्त्तादिसप्तकम् एक एव पदार्थ इति सतां विदुषां मतम्।

(ग) अमूर्त्तेति। तत्त्वविचारतः तत्त्वस्य विचारे सतीत्यर्थः अमूर्त्तमूर्त्तयोः ब्रह्मणः अमूर्त्तत्वमूर्त्तत्वयोरित्यर्थः भेदः विशेषः नास्ति। भेदस्तु वेदैः श्रुतिभिः मणितत्तेजसोरिव रत्न तत्प्रभयोरिव। कल्पितः रचितः। यथा मणितत्तेजसोर्भिन्नत्वं तथा आधाराधारभावेनेति भावः तथा मूर्त्तानन्दामूर्त्तानन्दयोरिति तात्पर्य्यम्।

(घ) द्वे इति। द्वे ब्रह्मणी विज्ञेये, मूर्त्तम् अमूर्त्तञ्च। अयं मूर्त्तामूर्त्तस्वरूपः विभु परमात्मा नारायणः ध्येयः चिन्तनीयः।

ब्रह्मणो रूपम्" एकमेवाद्वितीयं ब्रह्म" इत्यादि च सिध्यति। रूपत्वेन मूर्त्तत्वं मणितत्तेजसोरिवेत्युक्तेना-द्वितीयत्वं तेन भगवानेव ब्रह्मेति सर्वशास्त्रमतम्। वासनावैशिष्ट्यादेव मूर्त्तानन्दे भगवति लीलाविग्रहमिति मन्वाना अमूर्त्तानन्दमेव ब्रह्मेति केचिदाहुः। पाञ्चरात्रिकास्त्वविगीतशिष्टा भगवदुपासकत्वात् तेन तदाचरितेनैव वेदार्था (ङ) अनुमीयन्ते। तथाच,

शाखाः सहस्रं निगमद्रुमस्य
प्रत्यक्षसिद्धो न समग्र एषः।
पुराणवाक्यैरविगीतशिष्टा-
चारैश्च तस्यावयवोऽनुमेयः॥ (च)

तत्र पुराणवचनानि। यथा

यस्मिन् परमानन्दं पूर्णं ब्रह्म सनातनमित्यादि। पूर्णं रूपवत्त्वेन निर्विशेषन्तु ब्रह्म अपूर्णं नीरूपमित्यर्थः। शिष्टास्तु सात्वतास्तेषां मतम्। "वासुदेवपरा देवता

(ङ) निर्मत्सरं निर्विरोधम्। स्ववासनाया निजसंस्कारस्य पारुष्यं मालिन्यमित्यर्थः। वासनावैशिष्ट्यात् संस्कारस्य वैलक्षण्यात्। अविगीतशिष्टाः अनिन्दितसाधवः तदाचरितेनैव तेषामाचरणेनैव वेदार्थाः श्रुत्यर्थाः। महाजनो येन गतः स पन्था इति भावः।

(च) शाखा इति। निगमद्रुमस्य वेदतरोः सहस्रं शाखाः, समग्रः ताः सर्वाः शाखा इत्यर्थः न प्रत्यक्षसिद्धः न केनापि सम्यक् दृष्ट इत्यर्थः। पुराणवाक्यैः अविगीतशिष्टाचारैश्च तस्य निगमद्रुमस्य अवयवः अंशः अनुमेयः।

वासुदेवपरात्परमात्मनः सङ्कर्षणो जीव" इत्यादि। जीवयति जीवं करोतीति जीवः। न तु स्वयं जीवः। स चात्मा शब्दब्रह्म परब्रह्म। "ममोभे शाश्वती तनू" (क) इति तदुक्तेः। तस्मादेव जीवसृष्टिरित्यर्थः। अतो मूर्त्तानन्द एव कृष्ण इति शास्त्रार्थः।

भगवान्। साधु साधु तदिदानीं पुण्डरीकाक्षदर्शनाय साधय।

भट्टा। यथाऽऽज्ञापयति देवः। इति दामोदर-जगदानन्दौ गृहीत्वा निष्क्रान्तः।

सुक्त। कथमयमेतौ गृहीत्वा गतः।

गोपी। अस्ति निगूढ़म्। किन्तु देव! स एवायं भट्टाचार्य्यः।

भगवान्। महाभागवतस्य भवतः सङ्गादन्यथैव जातः।

गोपी। विहस्य। एवमेव।

ततः प्रविशतोऽपटीक्षेपेण दामोदर- जगदानन्दौ।

दामोदर-जगदानन्दौ। देव! भट्टाचार्य्येण पत्रद्वयं भैक्ष्यभवस्य भगवज्जगन्नाथभुक्तावशिष्टं प्रहितमस्ति।

भगवान्। अनुगृहीतोऽस्मि।

सुक्त। पत्रद्वयं पश्यामि। इति तत्करात् पत्रिकामादाय वाचयति।

---

(क) वच्चितमिति। यस्य मितम्। वासुदेवेति। वासुदेवः कृष्णः परं वार्या ता देवताः देवानामधीश्वरो वासुदेव इत्यर्थः। वासुदेवात् परमात्मनः श्रमणः सङ्कर्षणः बलभद्रः। ममेति मम उभे शाश्वती चिरस्थायी तनू शरीरे मूर्त्तामूर्त्तत्वभेदेनेतिभावः।

वैराग्यविद्यानिजभक्तियोग-
शिक्षार्थमेकः पुरुषः पुराणः ।
श्रीकृष्णचैतन्यशरीरधारी
कृपाम्बुधिर्यस्तमहं प्रपद्ये ॥

कालान्नष्टं भक्तियोगं निजं यः
प्रादुष्कर्तुं कृष्णचैतन्यनामा ।
आविर्भूतस्तस्य पादारविन्दे
गाढं गाढं लीयतां चित्तभृङ्गः ॥ (आ)

इति वाचयित्वा भित्तौ विलिख्य देवहस्ते ददाति ।

भगवान् । आलोक्य विदारयति ।

गोपी । देव ! मध्याह्नो जातस्तदुत्तरकरणीयाय सज्जीभवन्तु श्रीचरणाः ।

सर्वे । एवमेव । इति निष्क्रान्ताः ।

सार्वभौमानुग्रहो नाम षष्ठोऽङ्कः ।

---

(अ) वैराग्येति । यः एकः अद्वितीयः पुराणः पुरुषः परमात्मस्वरूपः वैराग्यस्य विद्याया निजभक्तियोगस्य च शिक्षार्थं लोकानामुपदेशार्थं कृपानिधिः श्रीकृष्णचैतन्यरूपधारी गौराङ्गदेहं प्राप्तवान् अहं तं प्रपद्ये शरणं व्रजामीत्यर्थः । उपजातिवृत्तम् ।

(आ) यः कालात् कालक्रमात् नष्टं विलुप्तं निजं भक्तियोगं प्रादुष्कर्तुं प्रकटयितुं कृष्णचैतन्यनामा गौराङ्गमूर्त्तिः आविर्भूतः तस्य चैतन्यदेवस्य पादारविन्दचरणकमले चित्तभृङ्गः ममेति शेषः गाढं गाढम् अत्यर्थमित्यर्थः लीयतां तिष्ठतु । वातोर्मीवृत्तं वातोर्मीयं गदिताम्भौ तगौ ग इति लक्षणात् ।

## सप्तमोऽङ्कः।

——००——

ततः प्रविशति सार्वभौमः।

सार्व। अहो! कथमद्यासमय एव गजपतिना समाहूतोऽस्मि तदुचितमुपसर्पितुम्। इत्युपसर्पति।

ततः प्रविशति राजा अभितश्च परीवाराः।

राजा। कः कोऽत्र भोः! समाहूयतां भट्टाचार्य्यः।

उपसृत्य। भट्टा। एषोऽहमनाह्वानेनैवागतः।

राजा। प्रणम्य। इदमासनमास्यताम्।

भट्टा। आशिषं प्रयुज्यासनमध्यास्ते।

राजा। भट्टाचार्य्य! श्रुतं मया कोऽपि महाप्रभावः परमकारुणिको यतीन्द्रः सम्प्रति गौड़ादागतोऽस्ति।

भट्टा। अथ किम्?

राजा। कथं? मया तस्य चरणवन्दनं क्रियते।

भट्टा। इदं त्वतिदुर्घटम्। विरलप्रचाराणां तेषां निष्किञ्चनेनैव (क) दर्शनं लभ्यते। तत्रापि दिनकतिपयाभ्यन्तर दक्षिणस्यां दिशि चलिताः सन्ति।

राजा। किमिति? जगन्नाथमहाप्रभोः समीपं विहाय चलितवन्तः।

---

(क) विरलेति। विरलः अल्पः प्रचारो येषां तादृशानां प्रायशस्तेषां प्रचारो न दृश्यते इति भावः। निष्किञ्चनेन किञ्चनरहितेन विरागिणैवेत्यर्थः।

भट्टा। "तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता" इति सामान्यानामेव महतामयं निसर्गः (ख)। अयन्तु भगवानेव स्वयम्।

राजा। सविस्मयम्। भट्टाचार्य्य! भवन्तश्चेदिदं ब्रुवन्ति तत्सत्यमेवैतत्। तदा किमिति? यत्पुरस्सरं भवताऽत्र नारब्धि।

भट्टा। महाराज!

ब्रह्मादयो लोकपाला यद्भ्रूभङ्गतरङ्गिणः।
विना स्वकरुणादेवीं पारतन्त्र्यं न सोऽर्हति॥ (ग)

तथापि, कति न विहितं स्तोत्रं काकुः कतीह न कल्पिता
कति न रचितं प्राणत्यागादिकं भयदर्शनम्।
कति न रुदितं धृत्वा पादौ तथाऽपि स जग्मिवान्
प्रकृतिमहतां तुल्यौ स्यातामनुग्रहनिग्रहौ॥ (घ)

---

(ख) तीर्थीकुर्वन्तीति। स्वान्तस्थेन अन्तःकरणवर्त्तिना गदाभृता नारायणेन विशेषणे तृतीया येषाम् अन्तरात्मनि गदाधरस्तिष्ठति ते तीर्थानि पुण्यक्षेत्राणि तीर्थीकुर्वन्ति पुण्यतरीकुर्वन्तीत्यर्थः। निसर्गः स्वभावः।

(ग) ब्रह्मादय इति। ब्रह्मादयः लोकपालाः यस्य भ्रूभङ्गेन तरङ्गिनः चपलाः कम्पमाना इत्यर्थः भवन्ति सः स्वस्य करुणादेवीं विना पारतन्त्र्यं परायत्ततां न अर्हति न कस्यापि वशे तिष्ठतीत्यर्थः।

(घ) कतीति। कति स्तोत्रं न विहितं न कृतम्? इह अस्मिन् जगन्नाथक्षेत्रे कति काकुः कातरोक्तिविशेषः न कल्पिता न कृता? प्राणत्यागादिकं कति भयदर्शनं भयप्रदर्शनं न रचितं न कृतम्? यदि भगवान् अस्मान् त्यक्त्वा यास्यति तदा वयं प्राणान्

राजा । सोत्कण्ठम् पुनरत्राऽऽगमिष्यन्ति ।

भट्टा । अथ किम् ? । सङ्गिनस्त्वत्र वर्त्तन्ते ।

राजा । कथमेकाकी चलितः ? ।

भट्टा । तादृशः कथमेकाकी ? । तथापि मया समीचीना विप्राः सङ्गे नियुक्ताः सन्ति ।

राजा । कियद्दूरं तावत् ।

भट्टा । गोदावरीं यावत् ते यास्यन्ति भगवांस्तु सेतुबन्धपर्य्यन्तं गमिष्यतीत्यनुमीयते ।

राजा । ब्राह्मणास्तावद्दूरं किमु न प्रेषिताः ? ।

भट्टा । तस्याननुमतेः । गोदावरीपर्य्यन्तन्तु रामानन्दानुरोधात्तेषां सङ्गोऽङ्गीकृतः ।

राजा । कस्तावत्तस्यानुरोधः ।

भट्टा । गन्तव्यमिति निश्चये कृते मयोक्तं गोदावरीतीरे रामानन्दो वर्त्तते सोऽवश्यमेवानुग्राह्यः ।

राजा । कथं तस्येदं सौभाग्यम् ।

भट्टा । महाराज ! स खलु सहजवैष्णवो भवति । पूर्वमयमस्माकमुपहासपात्रमासीत् सम्प्रति भगवदनुग्रहे जाते तन्महिमज्ञता नो जाता ।

राजा । श्रुतोऽस्ति मया त्वयि यादृशस्तस्यानुग्रहो जातः ।

त्यक्ष्याम इति पुनः पुनः कथितमित्यर्थः, मादृशो भृत्वा कति न हृदितम् ? तथापि स भगवान् जग्मिवान् प्रस्थितः । प्रकृतिमहतां महाप्रकृतीनाम् अनुग्रहनिग्रहौ प्रसादावसन्तोषौ तथ्यौ स्यातां न खलु तैरमयनुरुध्यन्ते इति भावः ।

भट्टा । भगवत्प्रभावो हि स्वतः प्रकाशो ।

प्रविश्य । दौवारिकः । भट्टाचार्य्य ! भवत्प्रेषिता विप्रा गोदावरीतो निवर्त्तिता भवन्तं प्रतीक्षन्ते ।

भट्टा । उत्कण्ठते राजा प्रवेशयन्तामिहैव ।

दौवा । यथाऽऽज्ञापयसि । इति पुनस्तानादाय प्रविशति ।

भट्टा । अहो ! आगच्छतागच्छत ।

विप्राः । उपसृत्य राजानमाशीर्भिरभ्यर्च्य सार्वभौमं प्रणमन्ति ।

राजा । उपविश्यामूलं कथयत । सर्वे उपविशन्ति ।

भट्टा । एकतम एव कथयतु ।

एकः । इतस्तावदालालनाथदेवमवलोक्य सुत्वा महामत्तकरीन्द्रवदनङ्कुश-कुशलगतिकुशलस्त्वरया रयातिशयैरप्यस्माभिरनुगन्तुं दुःशकः शकलमिव सुमेरोरौदीच्येन प्रबलतरमरुता विभज्य चलितं निरवधि भगवन्नामसङ्कीर्त्तनविकस्वर-स्वरपरभागाधरीकृत-धाराधर-घोरघोष-धीरध्वनिरध्वनि वर्त्तमानोऽभिवीक्ष्यमाणो जनैर्लघीयसा (ङ) कालेनैव कूर्मक्षेत्रमुत्तीर्णवान् ।

(ङ) आलालेति । आलालनाथो नाम आलालदेशाधिष्ठितेश्वरविग्रहः तं देवम् । अनङ्कुशेति अनङ्कुशा निर्बाधा कुशला या गतिः तत्र कुशलः निपुणः । दुःशकः अशक्यः । शकलमिव खण्डमिव कूर्मक्षेत्रमित्यस्य विशेषणम् । औदीच्येन उत्तरदिग्भवेन प्रबलमरुता मह्मावात्यया विभज्य विशेषेण भङ्क्त्वा चालितं स्थानान्तरं नीतम् । निरवधिना निरन्तरेण भगवतो हरेः नामसङ्कीर्त्तनेन विकस्वरः विकाशं गतः यः स्वरपरभागः स्वरोत्कर्षः तेन अधरीकृतः तिरस्कृतः धाराधराणां मेघानां घोरघोषः परम्परायाः समूहस्य तर्षः धीरध्वनिर्येन तादृशः

सार्व । एतदभ्यन्तरे भिक्षा नाभूत् ।

विप्रः । नाभूदेव ।

भक्ता । भवद्भिः किं कृतम् ? ।

विप्रः । अस्माभिस्तु यथालाभं किञ्चिदशित्वा (च) दृश्यमान एवायमनुगम्यते। ततस्तत्रैव कूर्मक्षेत्रे कूर्मदेवं प्रणम्य स्तुत्वा कूर्मनाम्नो द्विजवरस्य गृहमुत्तीर्णवान्। समनन्तरं तेनैव निमन्त्रितः कृतभिक्षश्च यदन्यत् कृतवान् तदप्यद्भुतम्।

भक्ता । किं तत् ? ।

विप्र । तत्रैव कश्चित् वासुदेवनामा विप्रो गलत्कुष्ठः कुष्ठकृमिनिकर-करम्बित-बहुल-रुधिर-वसापूयक्लिन्नसर्वाङ्गः कदाचित् पतीपत्यमानान् कृमीनुत्थाप्य तत्रैव निवेशयन्ननुद्विग्नो भगवच्चग्नमना इव केनाप्यकथितोऽपि स्वयमेव भगवताऽप्रापि। अनन्तरमविलम्बेनैव चिरकाललब्धपरमसुहृदिव गाढतरमायताभ्यां भुजाभ्यामयं तथाविध एव पर्य्यरम्भि समनन्तरं तेन विग्रहेण। (छ)

अतिगम्भीरस्तन इत्यर्थः अध्वनि पथि, यत विस्मयसूचकमव्ययमेतत्। एकमनसा ऐकाग्र्येणेत्यर्थः जनैः अभिवीक्ष्यमाणः अवलोक्यमानः। लघीयसा अतिलघुना।

(च) अशित्वा भुक्त्वा।

(छ) कुष्ठेति। कुष्ठकृमिनिकरेण कुष्ठगतक्षुद्रकीटनिचयेन करम्बितैः आक्रान्तैः बहुलैः रुधिरैः वसाभिः मेदोभिः पूयैश्च क्लिन्नं व्याप्तं सर्वम् अङ्गं यस्य तादृशः। पतीपत्यमानान् पुनः पुनः पततः। तत्रैव क्षतदेशेषु। भगवदिति भगवति हरौ मग्नं मनो यस्य तथाभूत

(ञ) क्वाहं दरिद्रः पापीयान् क्व कृष्णः श्रीनिकेतनः।

ब्रह्मबन्धुरितिस्माहं बाहुभ्यां परिरम्भितः॥

इति पठन्नेव सद्योऽतिद्योतिप्रकृतसुन्दराङ्गः समजनि (झ)। तदनु पुनस्तेनोक्तम्।

भगवन्! कथमयमीदृशो मे निग्रहः कृतः। तथाविधेन मया चामयाविना विना दुःखं निरुद्वेगेन स्थितं सम्प्रति सम्प्रतिपद्यमान-मानतया सर्वा एव मनोवृत्तय (ञ) उच्छिष्ठेयुः। भगवतोक्तम्। ब्रह्मन्नपुनस्ते भगवदनुस्मरणमन्तरेण मनसो बाह्यव्यापारा भविष्यन्ति तदलमुद्वेगेनेति।

राजा। भट्टाचार्य्य! सत्यमेवायमीश्वरः। अन्यथा ईदृक्करुणा जीवस्य न घटते। कुष्ठहारित्वन्तु योगीन्द्रस्यापि

इव। पर्य्यरम्भि परिरब्धः आलिङ्गित इत्यर्थः। विग्रहेण देहेन गलत्कुष्ठेनेत्यर्थः।

(ञ) क्वेति। पापीयान् अतिपापात्मा दरिद्रः अहं क? श्रीनिकेतनः श्रीनिवासः कृष्णः क? अहं ब्रह्मबन्धुः ब्राह्मणाधम इति हेतोः अहं बाहुभ्यां परिरम्भितः आलिङ्गितः स्मेति अव्ययं पादपूरणार्थं बोध्यम्।

(झ) सद्य इति। सद्यः तत्क्षणात् अतिद्योति अतिशोभमानं प्रकृतं सुन्दरम् अङ्गं यस्य तादृशः। समजनि सम्भूतः।

(ञ) आमयाविना रोगिणा। सम्प्रति इदानीं नैरुज्ये इत्यर्थः सम्प्रतिपद्यमानः सम्यक् उद्यन् मानो गर्वः यस्य तत्तया। मनोवृत्तयः मानसव्यापाराः।

सार्व। ततस्ततः?।

विप्रः। ततश्च नृसिंहदेवमुपगम्यागम्यानुभावो (ट) भगवन्तं नृसिंहं दृष्ट्वा स्तुत्वा प्रणम्य प्रदक्षिणीकृत्य प्रतस्थे।

काञ्चनाचलमरीचिवीचिभि-
र्गौरयन् किमपि दक्षिणां दिशम्।
दर्शनेन करुणातरङ्गिणा
द्रावयन् जनमनांसि सर्वतः॥

अपिच, कृष्ण कृष्ण जय कृष्ण कृष्ण हे
कृष्ण कृष्ण जय कृष्ण कृष्ण हे।
कृष्ण कृष्ण जय कृष्ण कृष्ण हे
कृष्ण कृष्ण जय कृष्ण पाहि नः॥

इत्यमन्बुदविकस्वरस्वर-
स्निग्धमुग्धवचनामृतद्रवैः।
प्लादयन् श्रुतिमतां श्रुतिद्वयं
चित्तमप्यपहरन् स भक्तिमान्॥ (ठ)

---

(ट) अगम्यानुभावः दुरवबोधमहिमा।

(ठ) त्रिभिर्दक्षिणां दिशं प्रति देवस्य गमनं वर्णयति, काञ्चनेत्यादि। काञ्चनाचलः सुमेरुः तस्येव याः मरीचयः स्वस्य देहप्रभाः तासां वीचिभिः तरङ्गैः किमपि अनिर्वचनीयं यथा तथा दक्षिणां दिशं गौरयन् सुवर्णप्रभां कुर्वन्। तथा करुणातरङ्गिणा कृपातरलेन दर्शनेन सर्वतः समन्तात् जनानां मनांसि द्रावयन् द्रवीकुर्वन्। कृष्णेत्यादि सम्बोधनं नः अस्मान् पाहि रक्ष। इत्थम् एवंप्रकारेण अम्बुदस्य मेघस्येव विकस्वरः यः स्वरः तेन स्निग्धानि सौम्यानि मुग्धानि मनोज्ञानि यानि वचनान्येव अमृतानि तेषां द्रवैः श्रुतिमतां श्रोत्रेन्द्रिय-

सार्वं। सत्यमेवास्य तस्यैवमेव प्रकृतिः।

विप्रः। ततो गोदावरीतीरमासाद्य विहितविश्रामे सज्जनमनोभिरामे निरुपमरूपाभिरामे प्रेमसौभगवति भगवति कनक-केतकोपवन इव परिमलाऽऽमोदितदिग्वलये सकलगुणनिलये स्वयम्प्रकाशिकया तत्प्रथया कोऽयं कोऽयमिति कृतसमूहः समूहः क्षोणिसुराणां तत्र मिलितवान्। निमन्त्रितश्च केनापि। समनन्तरमनन्तरहस्ये सर्वतः सञ्चरति जनचयश्रवणकान्ते तदुदन्ते मन्त्राकृष्ट इव ग्रहगृहीत इव विस्मयचमत्कार-विकारविसंष्ठुल इव (छ) रामानन्दरायः समुपेयिवान्।

राजा। रामानन्द! धन्योऽसि धन्योऽसि। यस्य ते नयनविषयीभूतास्ते श्रीचरणाः।

यतो श्रुतिद्वयं कर्णयुगलं ह्लादयन् तर्पयन् तथा चित्तमपि हरन् सन् स भगवान् अभिवान् प्रस्थितः।

(छ) विहितविश्रामे कृतश्रमनिवृत्तौ। जगज्जनानां मनोभिरामे मनोमोहने प्रेमसौभगवति प्रेमसौभाग्यशालिनि। कनककेतकानां काञ्चनकेतकतरूणाम् उपवने इव आरामे इव परिमलेन सौरभेण आमोदितं दिग्वलयं दिङ्मण्डलं येन तादृशे। स्वयं प्रकाशते इति स्वयं प्रकाशिका तया तत्प्रथया तदागमनख्यात्या कृतसमूहः कृतवितर्कः जातकौतूहल इत्यर्थः। क्षोणिसुराणां भूदेवानां ब्राह्मणानामित्यर्थः। अनन्तरहस्ये अनन्तम् अशेषं रहस्यं गोप्यं वस्तु यस्मिन् तादृशे सर्वतः समन्तात् सञ्चरति प्रचरति। जनचयानां लोकसमूहानां श्रवणकान्ते श्रुतिसुखप्रदे तदुदन्ते तस्य वृत्तान्ते। विस्मयेति विस्मयः आश्चर्यवृत्तिः चमत्कारः चित्तविकारः तयोर्विकारेण उद्वेगेण विसंष्ठुल इव विवश इव।

विप्रः। समनन्तरमागत्यैव चरणकमलपरिसरे सरेरीय-माणाश्रु निपतति स्म स्वयमेव। भये! त्वमेव रामानन्दो-ऽसीति भगवता सानुग्रहमुक्ते चथ किमिति च प्रत्यूचे। तदनु भगवताऽपि सार्वभौमानुरोधेन भवदालोकनमभीष्टं ममेति मयाऽत्र चणमवस्थितं तत् सुविहितमेव विहितं भवता यत् स्वयमेव समुपसेदे तदुच्यतां किञ्चिदित्यभाणि। ततो यद्यपि रामानन्दो हि कोऽयं किन्नामा किं महिमा किमाशयः किं तत्त्व इति किमपि भगवद्विषयकज्ञान-विशेषानभिज्ञस्तथापि चिरकालकलित-सतत-सख्यसुख-सुभगम्भावुक इव निःसाध्वस (ढ) एव किमपि पठितु-मुपचक्रमे।

मनो यदि न निर्जितं किममुना तपस्यादिना
कथं स मनसो जयो यदि न चिन्त्यते माधवः।
किमस्य च विचिन्तनं यदि न हन्त चेतोद्रवः
स वा कथमहो भवेद्यदि न वासनाक्षालनम्॥ (ण)

(ढ) सरेरीयमाणं पुनः पुनः सरत् अश्रु यत्र तद् यथा तथा। समुपसेदे समुपस्थितः। चिरकालेति चिरकालं कलितेन सञ्चितेन सततेन अविच्छिन्नेन सख्यसुखेन मैत्रप्रेमरसेन सुभगम्भावुक इव अति-प्रेमवानिव निःसाध्वसः निर्भीकः।

(ण) मन इति। यदि मनः न निर्जितं वशीकृतं तदा अमुना तपस्यादिना किम्? विफलं तपस्यादिकमित्यर्थः। स मनसः चित्तस्य जयः वशीकरणं कथं कीदृश इत्यर्थः यदि माधवः हरिः न चिन्त्यते न स्मर्यते हरिस्मरणं विना चित्तजयो दुर्भेद्य इत्यर्थः। अस्य हरेर्विचिन्तनं विशेषेण ध्यानं किं यदि चेतसः चित्तस्य द्रवः आर्द्रीभावः न भवतीति

भगवान् । बाढ़मेतत् । का विद्या—

रामा । हरिभक्तिरेव न पुनर्वेदादिनिष्णातता, ( त )

भग । कीर्त्तिः का—

रामा । भगवत्परोऽयमिति या ख्यातिर्न दाना-दिजा । ( थ )

भग । का श्रीः—

रामा । तत्प्रियता न धनजनग्रामादिभूयिष्ठता, (द)

भग । किं दुःखं—

रामा । भगवत्प्रियस्य विरहो नो हृद्व्रणादिव्यथा ॥ (ध)

भग । भद्रम् । के मुक्ताः । ( न )

रामा । प्रत्यासत्तिर्हरिचरणयोः सानुरागे न रागी

प्रीतिः प्रेमातिशयिनि हरेर्भक्तियोगे न योगे ।

शेषः चित्तद्रवं विना हरिचिन्तनं दृथेत्यर्थः हन्तेति खेदसूचकमव्ययम् । स या चित्तद्रवः कथं भवेत् यदि वासनायाः संस्कारस्य चालनं शोधनं न स्यादिति शेषः संस्कारशुद्धिं विना चित्तद्रवो न स्यादिति भावः । पृष्ठीदृतं जघी जसवजा वसुग्रहयतिश्च पृथ्वी गुरुरिति तल्लक्षणात् ।

(त) वेदादीति । वेदादिषु निष्णातता अभिज्ञता ।

(थ) भगवत्पर इति । अयं भगवत्परः हरिपरायणः । दाना-दिजा आदिपदेन अध्ययनयजनादीनां ग्रहणम् ।

(द) तत्प्रियता हरिप्रेम इत्यर्थः धनजनादीति ऐश्वर्यबाहुल्यं न श्रीरित्यर्थः ।

(ध) भगवत्प्रियस्य हरिभक्तस्य विरहः विच्छेदः ।

(न) मुक्ताः बन्धमोचा इत्यर्थः ।

(प) प्रत्यासत्तिरिति । येषां हरिचरणयोः प्रत्यासत्तिः हरि-चरणसेवायाम् अनुरक्तिरित्यर्थः सानुरागइति रागे विषयवासनायां

आस्था तस्य प्रणयरभसस्योपदेशे न देहे
येषां ते हि प्रकृतिसरसा हन्त ! मुक्ता न मुक्ताः ॥ (प)

भग । भवतु । किं गेयं—

रामा ।—व्रजकेलिकर्म—( फ )

भग ।—किमिह श्रेयः—

रामा ।—सतां सङ्गतिः,

भग ।—किं स्मर्त्तव्य—

रामा ।—अघारिनाम—( ब )

भग ।—किमनुध्येयं—

रामा ।—मुरारेः पदम् ।

भग । क्व स्थेयं—

रामा ।—व्रज एव—( भ )

न प्रत्यावृत्तिरिति शेषः तथा प्रेमातिशयिनि अत्यन्तप्रेमवति हरेर्भक्तियोगे प्रीतिः आनन्दः, योगे सन्धिमन् उपाये योगः सन्नहनोपायध्यानसङ्गतियुक्तिष्वित्यमरः । न प्रीतिरिति शेषः तथा तस्य हरेः प्रणयरभसस्य प्रेमजनितहर्षस्य रभसो वेगहर्षयोरित्यमरः । उपदेशे आस्वादने आस्था यत्नः, देहे शरीरे न आस्थेति शेषः ते प्रकृतिसरसा स्वभावप्रेमिकाः मुक्ता हि बन्धमोक्षा एव, न मुक्ताः मुक्तिपथोपदेशकशास्त्रानुसारिणः न मुक्तिं प्राप्ता इत्यर्थः । अत्र प्रश्नपूर्वककथितात् वस्तुनः तादृशान्यव्यपोहनात् एकावल्यलङ्कारः । तदुक्तं दर्पणे । प्रश्नादप्रश्नतो वापि कथिताद् वस्तुनो भवेत् । तादृगन्यव्यपोहश्चेत् शाब्दआर्थोऽथवा द्विधेति । मन्दाक्रान्तावृत्तम् ।

(फ) व्रजकेलिकर्म भगवतो व्रजलीलाव्यापारः ।

(ब) अघारिनाम अघासुरहन्तुः वा पापारेः हरेर्नाम

(भ) व्रजे एव वृन्दावने एव ।

भग।—किं श्रवणयोरामन्त्रि

रामा।—वृन्दावन–क्रीड़ैका

भग।—किमुपास्यमत्र—

रामा।—महसी (म) श्रीकृष्णराधाभिधे॥

भग। भद्रम्। उच्यतामुच्यताम्।

रामा। स्वगतम्। इतःपरं किं वक्तव्यं प्रश्नानुरूपमुदितमेव अधुना यद्वक्तव्यं तेनास्य सुखं भवति न वेति न जानामि।

इति क्षणमभिचिन्त्य प्रकाशम्।

निर्वाणनिम्बफलमेव रसानभिज्ञा-
श्चूषन्तु नाम रसतत्त्वविदो वयन्तु।
श्यामामृतं मदनमन्थरगोपरामा-
नेत्राञ्जलीचुलुकितावसितं पिबामः॥ (य)

भगवान्। पुनरन्यदुच्यतां समानार्थकमेतत्।

रामा। इतः परं प्रतिपाद्यमेव (र) नास्ति किमन्यद्वक्तव्यम्।

---

(म) महसी तेजसी।

(य) निर्वाणेति। रसानभिज्ञा भगवत्प्रेमरहिता इत्यर्थः जनाः निर्वाणं मुक्तिः तदेव निम्बफलम् अतितिक्तमिति भावः चूषन्तु नाम, तु किन्तु रसतत्त्वविदः भगवत्प्रेमतत्त्वाभिज्ञाः वयं मदनमन्थराणां कामार्त्तानां गोपरामाणां गोपाङ्गनानां नेत्राञ्जलीभिः चुलुकितात् पीतात् अवसितम् अवशिष्टं श्यामामृतं कृष्णरूपामृतं पिबामः। वसन्ततिलकं वृत्तम्।

(र) प्रतिपाद्यं वाच्यम्।

इति मनसि विचार्य । प्रकाशम् ।

नीचानेव पथश्चकोरयुवतीयूथेन याः कुर्वते
सद्यः स्फाटिकयन्ति रत्नघटितां याः पादपीठावलीम् ।
याः प्रक्षालितमृष्टयोर्जललवप्रस्यन्दशङ्काकृत-
स्ताः कृष्णस्य पदाब्जयोर्नखमणिज्योत्स्नाश्चिरं पान्तु नः ॥ (ख)

भगवान् । काव्यमेवैतत् पुनरुच्यताम् ।

रामा । स्वयं विचिन्त्य ।

श्रीवत्सस्य च कौस्तुभस्य च रमादेव्याश्च गर्ह्याकरो
राधापादसरोजयावकरसो वक्षःस्थलस्थो हरेः ।
बालार्कद्युतिमण्डलीव तिमिरैश्छन्देन वन्दीकृता
कालिन्द्याः पयसीव पीवविकचं शोणोत्पलं पातु नः ॥ (ग)

---

(ख) नीचानेवेति । याः चकोरयुवतीनां चकोरीणां यूथेन वृन्देन सह स्त्रीत्वनिर्देशो मुग्धत्वातिशयद्योतनार्थः । नीचान् निम्नगतानेव पथः मार्गान् कुर्वते, नखकिरणानां निम्नगामित्वादिति भावः याः रत्नघटितां मणिमयीमित्यर्थः पादपीठावलीं सद्यः स्फाटिकयन्ति स्फटिकमयीमिव कुर्वन्ति, याः जललवानां जलबिन्दूनां प्रस्यन्दस्य प्रक्षरणस्य शङ्कां कुर्वन्तीति तथोक्ताः ताः प्रक्षालिते मृष्टे च परिष्कृते च तयोः कृष्णस्य पदाब्जयोः चरणकमलयोः नखा एव मणयः तेषां ज्योत्स्नाः प्रभा इत्यर्थः नः अस्मान् चिरं पान्तु पालयन्तु इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ग) श्रीवत्सेति । श्रीवत्सस्य हरिवक्षःस्थलचिह्नविशेषस्य च कौस्तुभस्य रत्नविशेषस्य च रमादेव्याः लक्ष्म्याश्च गर्ह्याकरः निन्दास्पदमित्यर्थः हरेः कृष्णस्य वक्षःस्थलस्थः राधायाः पादसरोजस्य चरणकमलस्य यावकरसः अलक्तकद्रवः तिमिरैः तमोभिः छन्देन कौशलेन वन्दीकृता आक्रान्ता बालार्कस्य नवोदितसूर्यस्य द्युतिमण्डलीव प्रभामण्डलमिव

भगवान्। इदमपि तथा। (थ)

रामा। चरणौ धृत्वा।

सखि! न स रमणो नाहं रमणीति भिदावयोरास्ते।
प्रेमरसेनोभयमन इव मदनो निष्पिपेष बलात्॥ (ध)

अथवा। अहं कान्ता कान्तस्त्वमिति न तदानीं मतिरभू-
न्मनोवृत्तिर्लुप्ता त्वमहमिति नौ धीरपि हता।
भवान् भर्त्ता भार्य्याऽहमिति यदिदानीं व्यवसिति-
स्तथापि प्राणानां स्थितिरिति विचित्रं किमपरम्॥(स)

सार्व्व। ततो भगवता किमुदितम्।

तथा कालिन्द्याः यमुनायाः पयसि सलिले पीतपिकचं स्फुटत्फुल्लं
शोणोत्पलमिव रक्तोत्पलमिव नः अस्मान् पातु। उपमालङ्कारः।
शार्दूलविक्रीड़ितं वृत्तम्।

(थ) तथा काव्यमेवेत्यर्थः।

(ध) सखीति। हे सखि! आवयोः राधाकृष्णयोरिति भावः
मध्ये सः कृष्णः रमणः कान्त इति भिदा भेदो न आस्ते, अहं रमणी
इति च भिदा न आस्ते। मदनः कामः प्रेमरसेन उभयोः आवयोः
मनः बलात् निष्पिपेष इव।

(स) अहमिति। अहं कान्ता त्वं कान्तः इति तदानीम् अवि-
रहे इत्यर्थः मतिः बोधः नौ आवयोः न अभूत्, त्वम् अहम् इति
मनोवृत्तिः लुप्ता विनष्टा, धीरपि बुद्धिरपि हता नष्टा। किन्तु
इदानीं भवान् भर्त्ता अहं भार्य्या इति यत् व्यवसितिः पर्य्यवसानं बोध
इत्यर्थः आसीत्, तथापि प्राणानां स्थितिः प्राणधारणं क्रियते इति
शेषः इति अस्मात् अपरं किं विचित्रम् आश्चर्यं तादृगभिन्नत्वेऽपि
यदिदानीं भेदबुद्धिः तेन प्राणधारणं न युज्यते इति भावः। कृष्ण-
विरहिण्या राधाया उक्तिरियमिति बोध्यम्।

विप्रः । तदा यदवलोकितं तदाकलय । (ङ)

धृतफण इव भोगी गारुडीयस्य गानं
तदुदितमतिरत्याकर्णयन् सावधानम् ।
व्यधिकरणतया वाऽऽनन्दवैवश्यतो वा
प्रभुरथ करपद्मेनास्यमस्याप्यधत्त ॥ (च)

राजा । भट्टाचार्य्य ! कोऽयं सन्दर्भः । (छ)

भट्टा । महाराज ! निरुपाधि हि प्रेम कथञ्चिदप्युपाधिं न सहते इति गर्भितं भगवतोः कृष्णराधयोरनुपाधि प्रेम श्रुत्वा तदेव पुरुषार्थीकृतं भगवता मुखपिधानस्यास्य तद्रहस्यत्वप्रकाशकम् । (ज)

(ङ) आकलय अवधारय ।

(च) धृतफण इति । अथ प्रभुः श्रीकृष्णचैतन्यः गारुडीयस्य गरुड़मन्त्रस्य गानमाकर्णयन्निति शेषः धृतफणः फणधारी भोगी भुजङ्ग इव उदिता उपस्थिता मतिः राधाप्रेमविषयिणीति भावः यस्य तथोक्तः तत् पूर्वोक्तं वाक्यं सावधानं यथा तथा आकर्णयन् शृण्वन् व्यधिकरणतया भिन्नदेशवर्त्तितया यत्र राधा वर्त्तते तत्र स्वस्यानुपस्थितयेति यावत् वा आनन्दवैवश्यतः तत्कारणजनितानन्दवशीभूततया वा करपद्मेन अस्य रामानन्दस्यापि आस्यं मुखम् अधत्त धृतवान् रुरोधेत्यर्थः । मालिनीवृत्तम् । उपमालङ्कारः ।

(छ) सन्दर्भः रामानन्दवाक्यचैतन्यकर्त्तृकमुखपिधानवाक्यपर्य्यन्तः प्रबन्धः कोऽयं किमभिप्रायोऽयमित्यर्थः ।

(ज) निरुपधि अकपटं भेदाभिन्नत्वबुद्धिरिति भावः । उपधिं छलं विभेदबुद्धिमित्यर्थः राधायाः कृष्णविरहेण क्लेशा आतत्वादिति भावः । तदेव निरुपधि प्रेमैव पुरुषार्थीकृतं पुरुषप्रयोजनतया स्वीकृतमित्यर्थः । मुखपिधानं मुखाच्छादनम् अस्य रामानन्दस्य । तद्रहस्येति तस्य प्रेम्णः

विप्रः। तदा चिकुरकलापं (ग) द्विधा कृत्वा तेनैव तच्चरणयुगं वेष्टयित्वा निपत्य गदितम्।

महारसिकशेखरः सरसनाट्यलीलागुरुः
स एव हृदयेश्वरस्त्वमसि मे किमु त्वां स्तुमः।
तवैतदपि साहजं विविधभूमिकास्वीकृति-
र्न तेन यतिभूमिका भवति नोऽतिविस्मापनी॥ (घ)

इति चिरं चरणकमलं धृत्वा रुदन्नासीत् मध्ये मध्ये किञ्चिद्वदति च।

आकस्मिको नु विधिना निधिरभ्यनायि
भग्नः किमिन्दुरमृतस्य यदेष पातः।
आनन्दभूरुहफलं सुचिराच्च पक्वं
दृष्टं यदेव तव देव! पदारविन्दम्॥ (ङ)

रहस्यत्वस्य अतिगुरुत्वस्य प्रकाशकं सूचकं स्वस्य राधाया निरुपधि प्रेमवशवर्त्तित्वं मा प्रकटीभवत्वित्यभिप्रायकमिति यावत्।

(ग) चिकुरकलापं केशचयम्।

(घ) महारसिकेति। महारसिकानां शेखरः चूड़ामणिः तथा सरसं यत् नाट्यम् अभिनेयकाव्यं तस्य लीलायां प्रणयने गुरुः उपदेष्टा त्वं मे मम स एव हृदयेश्वरः जीवनाराध्य इति भावः असि, त्वां किमु स्तुमः गुणकीर्त्तनेन किं सन्तोषयामः? विविधानां विचित्राणां भूमिकां वेशानां स्वीकृतिः धारणम् एतत् तव साहजं स्वाभाविकम्। तेन हेतुना यतिभूमिका सन्न्यासिवेशः इयमिति शेषः नः अस्माकम् अतिविस्मापनी अतिविस्मयजननी न भवति। पृथ्वीवृत्तम्।

(ङ) आकस्मिक इति। विधिना दैवेन आकस्मिकः अतर्कितः अभ्यनायि नु आनीतः किम्? इन्दुः चन्द्रः भग्नः किम्? यत् यतः एषः अमृतस्य पातः प्रवर्षणं भवतीति शेषः, तथा आनन्दभूरुहफलम्

भगवन्! यथैवाद्य मया स्वप्ने दृष्टं तथैव साक्षादपि।

इति पुनरपि पादौ धृत्वा रोदिति।

भगवान् गाढं परिष्वजते। अतः परं निमन्त्रयित्वा (च) विप्रवरेण समागत्य देवापराज्ञो जात इत्युक्तो भगवान् माध्यन्दिनकर्मणि चलितवान् वयमपि तच्चरणारविन्दं प्रणम्य तदहरेव प्रत्याजिगमिषवः स्मः।

सार्व। तदधुना विश्राम्यतां भवद्भिः।

विप्राः। यथाऽऽज्ञापयति भवान्।

राजा। पारितोषिकं ददाति।

विप्राः। सादरमादाय निष्क्रान्ताः।

ततः प्रविशति दौवारिकः।

दौवारिकः। देव! कर्णाटपतिना महाराजेन प्रेषित-मुपायनमादाय तदमात्यो मल्लभट्टनाम पण्डितराजो द्वार-मध्यास्ते।

सार्व। श्रूयतेऽसौ महापण्डितो भवति।

राजा। प्रवेश्यताम्।

दौवा। यथाऽऽज्ञापयति देवः। इति निष्क्रम्य तमादाय प्रविशति।

सार्व। आगच्छन्तु भट्टाः। इत्युत्थानं नाटयति।

मल्लभट्टः। राजानमाशीर्भिरभ्यर्च्य। भट्टाचार्य्य! किमिदं क्रियते नाहं तवाभ्युत्थानीयः। अथवा

आमन्त्रतरुफलं सुचिरात् पक्व किम्? देव। यद्देव यत एव तव पदारविन्दं दृष्टं भवेति शेषः। वसन्तति[illegible] वृत्तम्।

(च) निमन्त्रयित्वा निमन्त्रणकारि

सदैव तुङ्गः किल काञ्चनाचलः
सदैव गम्भीरतमाः पयोधराः ।
सदैव धीरा विनयैकभूषणा
लक्ष्मीः प्रकृत्यैव जनैः समीयते ॥ (छ)

राजा । इदमासनम् ।

मल्ल । यथाऽऽज्ञमुपविशामि । इत्युपविशति।

राजा । अपि कुशलं कर्णाटपतेः ।

मल्ल । यस्य भवद्विधाः सुहृदस्तस्य सततमेव तत् । किन्तु साम्प्रतमधिकमपि । (ज)

राजा । कीदृशं तत् ।

मल्ल । महाराज ! एतस्माज्जनपदतः सत्तीर्थयात्राव्याजेन द्रुतकनकद्युतिर्यतीन्द्रः कोऽप्येको यदवधि हन्त दक्षिणाशां सम्प्राप्तस्तदवधि सोऽपि निर्वृतात्मा । (झ)

---

(छ) सदैवेति । काञ्चनाचलः सुमेरुः सदैव सततमेव तुङ्गः किल उन्नत एव । पयोधराः मेघाः सदैव गम्भीरतमाः अतिगम्भीराः । धीराः विद्वांसः सदैव विनय एकम् अद्वितीयं भूषणं येषां तादृशाः । जनैः लोकैः लक्ष्मीः श्रीः प्रकृत्यैव स्वभावेनैव समीयते श्रियते. विदुषां विनीतस्वभावत्वात् भवता मां प्रति शिष्टाचारः प्रदर्श्यते इति न चित्रमिति भावः ।

(ज) अधिकमपि कुशलमिति शेषः ।

(झ) सत्तीर्थयात्रेति । सताम् उत्कृष्टानां तीर्थानां यात्रा एव व्याजः छलं तेन । द्रुतेति । द्रुतस्य अग्निसन्तापेन गलितस्य कनकस्य द्युतिरिव द्युतिर्यस्य तथोक्तः उज्ज्वलत्काञ्चनप्रभः इत्यर्थः । सोऽपि राजा निर्वृतात्मा सुखितचित्तः ।

शार्व। सोत्कण्ठम्। भट्टाः! कथय नु कथयन्तु

राजा। कथमिव।

मल्ल। यथोत्तरमेव दक्षिणस्यां दिशि कियन्तः कर्मनिष्ठाः कतिचिदेव ज्ञाननिष्ठा विरला एव सात्वताः प्रचुरतराः पाशुपताः प्रचुरतमाः पाषण्डिनः। तेन तेषामन्योन्यवादविसंष्ठुलानामुच्चावचनिर्वचनचातुर्य्यधुर्य्याणां स्वस्वमताचार्य्यवर्य्याणां। (अ) प्रसङ्गेन प्रायशो बहुलोद्वेग एव नो महीपालः।

राजा। ततः।

मल्ल। तत आकस्मिकप्रवेशमात्रेणैव तस्य यतिपतेर्दिशि विदिशि सानन्दचमत्कारं समूढेषु आबालवृद्धतरुणेषु लोकेषु दिदृक्षयोपनतेषु पण्डितमण्डलेष्वपि परमनयनसुभगया वपुर्लक्ष्म्यैव प्रकटीकृतं महिमानमनुभूय विनोपदेशेनापि कृतार्थं स्याम इति तत्कालसमुदितरवासमाविशेषेण जातपुलकास्तवः सर्व एव स्वस्वमतप्रच्यावेन तत्पथप्रविष्टा बभूवुः। तस्य परम्पराश्रवणेन लब्धपरमानन्दोऽ

(अ) यथोत्तरमेव यथाप्रधानमेव कर्मनिष्ठाः यज्ञादिकर्मपराः यज्ञादिकर्मैव पुरुषार्थसाधनमिति मन्यमाना इत्यर्थः, ज्ञाननिष्ठाः ज्ञानेनैव ईश्वरपरा इत्यर्थः। सात्वता अविगीतवैष्णवाचारवर्त्तिनस्तु विरलाः अल्पाः। प्रचुरतरा अतिबहवः पाशुपताः शैवाः। प्रचुरतमाः ततोऽप्यधिकतमाः पाषण्डिनः नास्तिका इत्यर्थः। अन्योन्यं परस्परं वादे तर्के वितण्डायां वा विसंष्ठुलाः व्यग्राः तेषाम्। उच्चावचेति उच्चावचं बहुविधं यत् निर्वचनं विचारः तस्य चातुर्य्यं नैपुण्ये धुर्य्याः अग्रण्यः तेषाम्। स्वं स्वं मतं तत्र आचार्य्यवर्य्याणाम् उपदेष्टृवराणाम्।

अपरलोकपालस्तद्विशेषचरितमवगन्तुं गूढवेशेन आप्र-यान् प्रस्थित्य यावत् सेतुबन्धं ततः प्रत्यागमनावधि च तस्यालौकिकचमत्कारं तत्तन्मुखादनुभवन् भव-दव-दहन-ज्वालामेव ( ट ) विस्मृतवान् ।

राजा । अमात्य ! धन्योऽसौ युष्मदीयो महीपालः ।

सार्व । किं किं श्रुतं किञ्चित् कथ्यताम् ।

राजा । अमात्य ! कथ्यताम् ।

मन्त्री । एकस्मिन्नहनि निजसुखावेशेन विगलद्विलोचन-जलसकल-धौत-कलधौतशरीरं रोमाञ्चसञ्चयेन मुकुलाऽऽ-कुलायमान-कदम्बभूरुहाकारं भगवन्नामसङ्कीर्त्तन-सगद्गद-स्वरं स्वरंहसा स्वानन्दवैवश्येन वर्त्मपरिचयाभावतोऽपि यथावर्त्मैव चलन्तं भगवन्तमालोक्य पाषण्डिनो वैष्णवोऽयं भवति भिक्षुर्भगवत्-प्रसादनान्नेदं ग्रहीष्यति तदेतदन्नमेन-माशयाम इति स्वभोजनयोग्य ( ठ ) मशुचितरान्नं स्वस्थां

(ट) समूढेषु संवहत्सु । उपनतेषु उपस्थितेषु । परमनयन-सुभगतया अत्यन्तमेव प्रीतिकरत्वेन वपुषः शरीरस्य अच्छया कान्त्या एव । चित्तोपदेशेन खल एवेति भावः कर्हिचित् कदा एवं हरिपरायणा इति भावः श्वासः श्वासः । तत्काले तस्मिन् काले समुद्रितवरेण सत्य-गुद्यच्छता वासनाविशेषेण अभिलाषेण जातानि निःसृतानि पुलका-ङ्कुराणि रोमाञ्चनयनजलानि येषां तथाभूताः । स्वस्वमतेति निजं निजं मतं परित्यज्यैवेत्यर्थः । तत्पथप्रविष्टाः भगवन्मार्गवर्त्तिनः । परम्पराश्रवणेन परम्परया आकर्णनेन । भवेति भवः संसार एव दव-दहनः दावाग्निः तस्य ज्वालां क्लेशम् ।

(ठ) विगलदिति । विगलता विलोचनजलेन सकलं सम्यक् धौतं

निधाय पुरो गत्वा स्वामिन् भगवत्प्रसादमिमं गृहाणेति श्रावयित्वा समूचिरे चिरेण।

भगवान्! सर्वज्ञोऽपि भगवत्प्रसादनाम्ना तस्यागमसहमान एव पाणौ गृहीत्वा तल्लक्षितमेव पाणिमुद्यम्य चलितवान्। समनन्तरमेव महता केनापि विहगेन (ड) चञ्चुपुटे कृत्वा तदन्नं भगवत्करतलतः समादाय समुड्डीनम्।

सार्व। अहो! मोहस्य महिमैषां।

यन्मायया मूढ़धियो भ्रमन्ति भुवनेश्वराः।

तमपीह भ्रमयितुं क्षुद्राणामयमुद्यमः॥ (ढ)

मल्ल। अन्येद्युरन्यत्र कुत्रापि ब्राह्मणगृहे यदृच्छयोपगतस्तं ब्राह्मणं केवलं रामरामेति नाममात्रजपपरायणं दृष्ट्वा गतवान्। प्रत्यागमनसमये पुनस्तमालोकयितुं तत्रैव समुत्तीर्णः। तमेव कृष्ण कृष्ण कृष्णेत्येवं जपन्तं दृष्ट्वा पृष्ट-

---

चालितं कलधौतं काञ्चनं तदिव शरीरं यस्य तथोक्तम्। मुकुलेति मुकुलैः व्याकुलायमान आवृत इत्यर्थः यः कदम्बभूरुहः तस्य आकार इव आकारो यस्य तादृशम्। भगवदिति। भगवतो हरेर्नामसङ्कीर्त्तनेन सगद्गदः स्वरो यस्य तथाभूतम्। स्वरंहसा निजवेगेन स्वानन्दवैवश्येन निजानन्दानुभवजनितविवशतया। वर्त्मनः पथः परिचयाभावतोऽपि ज्ञानाभावादपि। यथावर्त्म यथामार्गं मार्गानुसारेणैवेत्यर्थः। आशयाम भोजयाम स्वभोजनयोग्यं कुक्कुराहारोचितम्।

(ड) विहगेन पक्षिणा।

(ढ) यदिति। भुवनेश्वराः लोकपालाः यस्य मायया मूढ़ा धीर्येषां तथोक्ताः सन्तः भ्रमन्ति तमपि परमात्मानमपि भ्रमयितुं भ्रान्तं कर्तुं क्षुद्राणां पापिष्ठानाम् अयम् उद्यमः आग्रहः।

वान् । आश्चर्य ! कथं गमनसमये राम राम रामेत्येवं जपन् भवनानालोकि । अधुना कृष्ण कृष्ण कृष्णेत्येवेव जपन्नालोक्यते तत्कथयास्य तत्त्वमिति । तदा स ऊचे । भगवन् ! तवैव प्रभावोऽयं यतः शैशवावधि रामनाममात्रजपपरायणोऽहं भवद्दर्शनमात्रेण कृष्ण कृष्ण कृष्णेत्येव मे वदनान्निःसरति । बलादप्यहमेतन्निवर्त्तयितुं न शक्नोमीति तवैव दर्शनदोषोऽयं न ममेति ।

राजा । भट्टाचार्य्य ! कोऽत्र सन्दर्भः ।

भट्ट । महाराज ! यद्यपि समानार्थमुभयमेव ।

रमन्ते योगिनोऽनन्ते सत्यानन्दचिदात्मनि ।

इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ (ण)

यथा । कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।

तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ (त)

इति परब्रह्मार्थत्वे समानमेव तथाऽपि रतिमतां राम इत्युक्ते रघुनाथस्फूर्त्तिः कृष्ण इत्युक्ते व्रजराजकुमारस्फूर्त्तिरिति । श्रीकृष्णचैतन्यदेवस्य कृष्णात्मकत्वात्तद्दर्शने कृष्णस्फूर्त्तिरेव स्फुरतीति रहस्यम् । (थ)

(ण) रमन्ते इति । योगिनः सत्यानन्दचिदात्मनि सच्चिदानन्दरूपे अनन्ते रमन्ते विहरन्ति इति व्युत्पत्तिशालिना इति भावः रामपदेन असौ रामः परं ब्रह्म अभिधीयते प्रतिपाद्यते ।

(त) कृषिरिति । कृषिः शब्दः भूवाचकः पृथिव्यर्थः णश्च निर्वृतिवाचकः सुखार्थः । तयोः कृषिणयोः ऐक्यं परं ब्रह्म कृष्ण इति अभिधीयते प्रतिपाद्यते ।

(थ) रतिमताम् अनुरागिणाम् । रहस्यं निगूढम् ।

अपिच, सहस्रनामभिस्तुल्यं रामनाम वरानने ! ।

सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत् फलम् ॥

एकावृत्त्या तु कृष्णस्य नामैकं तत् प्रयच्छति । ( द )

इति रामनामतः कृष्णनाम श्रेयः ।

मन्त्र । सत्यमेतत् अस्माभिरपि भूपालस्य सदसीदमेव निरणायि ( ध )। एवं दक्षिणस्यां दिशि ये ये विष्णुभक्तास्ते किल रघुनाथभक्तिद्वारैव वनवासे पञ्चवट्यादिषु रघुनाथचरितचारुस्थलदर्शनात्तत्रैवानुरक्तिस्तेषां स्वाभाविकी सम्प्रति यतीन्द्रमेनमालोक्य कृष्णपक्षपाता एव बभूवुः। एवं क्वचन स्थले कमपि ब्राह्मणमतिमूर्खतया शब्दार्थावबोधविरहेण शुद्धिवर्जितं भगवद्गीतां पठन्तं प्रायशः सर्वैरेव विहस्यमानमथ च यावत् पाठं तावदेव पुलकाश्रुविवशं विलोक्य अहो ! अयमुत्तमोऽधिकारीति भगवान् तमवादीत्। ब्रह्मन् ! यत् पठ्यते तस्य कोऽर्थं इति स प्रत्यूचे। स्वामिन्नाहमर्थं किमपि वेद्मि अपि तु पार्थरथस्थं तोत्रपाणिं ( न ) तमालश्यामं श्रीकृष्णं यावत् पठामि तावदेव विलोकयामीति। तदा भगवतोक्तम्।

---

(द) सहस्रेति। पार्वतीं प्रति हरस्योक्तिः। हे वरानने सुमुखि ! रामनाम सहस्रनामभिः पुण्यैरिति शेषः तुल्यम् एकं रामनाम सहस्रपुण्यनामसदृशमित्यर्थः। पुण्यानां सहस्रनाम्नां त्रिरावृत्त्या त्रैगुण्येन निःसंख्ययेत्यर्थः यत्तु फलं कृष्णस्य एकं नाम एकावृत्त्या तु तत्फलं प्रयच्छति।

(ध) सदसि सभायां निरणायि निर्णीतम्।

(न) पार्थरथस्थम् अर्जुनसारथिं तोत्रपाणिं कशाभृतम्।

उत्तमोऽधिकारी भवान् गीतापाठस्येति तमालिलिङ्ग । तदनु स खलु गीतापाठजादानन्दादपि प्रचुरतरमानन्दमासाद्य स्वामिन् ! स एव त्वमिति भूमौ निपत्य प्रणमन्तिमयविह्वलो बभूव ।

सार्व । उचितमेवास्य तथा ज्ञानं निरन्तरभगवत्स्फूर्त्तिनिर्म्मलहृदयत्वेन यथार्थस्फूर्त्तिरेव भवति ।

मन्त्री । एवमेवास्माभिरपि विचारितमस्ति । एवमनन्तैव विचित्रा कथा तैस्तैर्गूढ़पुरुषैः कथिता कति कथनीया भवति ।

सार्व । एवमेतत् ।

राजा । सोत्कण्ठम् हन्त ! कदा भगवान् वीक्षितव्यः ।

नेपथ्ये । हन्त ! वीक्षणसमयोऽयं तदलं विलम्बेन

राजा । सहर्षम् । भट्टाचार्य्य ! यथाऽयं यथा प्रस्तावमेव जगन्नाथदर्शनसमयं प्रस्तौति तथा मन्ये । श्रीकृष्णचैतन्योऽप्यागतप्रायः ।

भट्टा । भट्टारक ! एवमेव ।

राजा । भट्टाचार्य्य ! अयं पुरुषोत्तमः पुरुषोत्तमचैतन्यस्य बीजभूतं किमपि भविष्यति । यस्मात् किल बहव एवानन्दाङ्कुरा जायेरन् । नीलाचलचन्द्रस्य सेवा सौभाग्यविशेषोऽपि भविष्यति ।

सार्व । सत्यमेतत् पुण्यात्मानो हि नरदेवा देवांशभूता।(प)

(प) नरदेवाः राजानः देवांशभूताः इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीरिति मनुवचनात् ।

इव तेन भवता मनसि यदुन्मीलति तदेव सत्यम्।

नेपथ्ये कृष्ण ! भोः ! सत्यं सत्यम्।

राजा। सहर्षम्। अद्यापि तथैव वाक् अकुनम् तत्पश्य ज्ञायतां कोऽयम्।

भट्टा। तैर्थिकस्तैर्थिकान्तरेण सह जगन्नाथदर्शनोत्कण्ठां प्रपञ्चयति (फ)।

प्रविश्य दौवारिकः। देव! अतिसत्वरं धावमानाः कतिचित्पुरुषाः समायान्ति।

राजा। ज्ञायतां निरस्त्राः सास्त्रा (ब) वा तेऽमी।

दौवा। निष्क्रम्य पुनः प्रविश्य च। देव! निरस्त्रा एव सर्वे

सार्वं। नूनं प्रत्यावर्त्तते स एव देवः।

पुनर्नेपथ्ये। सम्भूय हरिं वद हरिं वदेति कोलाहलः।

सार्वं। अवितथमेव भगवान् प्रत्यावृत्तः।

नेपथ्ये। तीर्थेष्वमीषु सकलेषु तथा न तृप्ति-
जीताऽस्य सत्वरमतः पुरुषोत्तमे यः।
प्रत्याययौ कलय जङ्गमरत्नसानू
रत्नाकरस्य सविधे सुमहो विधिर्नः॥ (भ)

(फ) तैर्थिकः तीर्थवासी तीर्थपर्य्यटको वा। प्रपञ्चयति प्रकटयति।

(ब) निरस्त्राः अस्त्ररहिताः। सास्त्राः अस्त्रधारिणः।

(भ) तीर्थेष्विति। सकलेषु अमीषु तीर्थेषु सेतुबन्धादिषु अस्य देवस्य तथा तादृशी तृप्तिः न जाता, अतः अस्मात् हेतोः सः जङ्गम-रत्नसानुः जङ्गमः गतिमान् रत्नसानुः रत्नमयाचलरूप इत्यर्थः प्रभुः श्रीकृष्णचैतन्यः रत्नाकरस्य समुद्रस्य सविधे समीपवर्त्तिनीत्यर्थः पुरुषोत्तमे

सार्व। महाराज! यदयं गोपीनाथाचार्य्यः सहर्ष-मालपति तदयमागत एव भगवान् तदहमुपसर्पामि।

राजा। त्वरतां त्वरताम् मल्लभट्ट! त्वमप्यधुना विश्रामं कुरु। वयमपि कार्य्यविशेषाय गच्छाम। इति निष्क्रान्ताः सर्व्वे।

तीर्थाटनो नाम सप्तमोऽङ्कः।

# अष्टमोऽङ्कः।

—*—

ततः प्रविशति सार्व्वभौमादिभिर्दामोदर-जगदानन्दादिभिश्चानु-गम्यमानः श्रीकृष्णचैतन्यः।

श्रीकृष्ण। सार्व्वभौम! एतावद्दूरं पर्य्यटितं भवत् सदृशः कोऽपि न दृष्टः केवलमेव रामानन्दरायः। स त्वलौकिक एव भवति।

सार्व। देव! अतएव निवेदितं सोऽवश्यमेव द्रष्टव्य इति।

श्रीकृष्ण। कियन्त एव वैष्णवा दृष्टास्तेऽपि नारायणो-पासका एव। अपरे तत्त्ववादिनस्ते तथाविधा एव।

---

अकिन्नु चौर्य्ये सततं प्रत्यायये प्रत्याहृतः। कथय पथ्य नः अथाकं विधिः दैवं सुमुखः अनुकूलः। वसन्ततिलकं वृत्तम्।

निरवद्य' (क) न भवति तेषां मतम्। अपरे तु प्रैवा एव बहवः। पा षण्डास्तु महाप्रबलभूयांस एव। किन्तु भट्टाचार्य्य ! रामानन्दमतमेव मे रुचितम्।

सार्व। भवन्मत एव प्रविष्टोऽसौ न तस्य मतकर्त्ता (ख)। स्वामिन्नतःपरमस्माकमप्येतदेव मतं बहुमतं सर्वशास्त्रप्रतिपाद्यञ्चैतदिति।

गोपीनाथाचार्य्यः। भट्टाचार्य्य ! भगवतोऽवस्थानस्थानं चिन्तितमस्ति।

भट्टा। अपवार्य्य। राज्ञैव चिन्तितम्।

गोपी। जनान्तिकम् (ग)। कीदृशं तत्।

भट्टा। काशीमिश्रस्यालयः।

गोपी। साधु साधु सिंहद्वारनिकटवर्त्ती भवति। यतः सकाशात् सुखेनैव जगन्नाथदर्शनं भविष्यति। इति समुद्रकूलात् पुरुषोत्तमग्रामं विशन्ति।

ततः प्रविशन्ति भगवज्जगन्नाथप्रसादमालापाणयो जगन्नाथदेवपशुपालकाः काशीमिश्रः परीक्षामहापात्रश्च (घ)।

सार्व। अयमयं श्रीकृष्णचैतन्यः स्वामी। इति सोत्कण्ठमुपसर्पन्ति।

सार्व। भगवन् ! एते भगवतः पशुपालाः। एष काशी-

(क) निरवद्यम् अनिन्द्यम्।

(ख) मतकर्त्तृका स्वयं मतप्रवर्त्तको नाभावित्यर्थः।

(ग) जनान्तिकम्। त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकमित्युक्तलक्षणम्।

(घ) परीक्षामहापात्रं परीक्षायां सदसद्विचारे महामन्त्रीत्यर्थः।

मिश्रनामा। एष सर्वाधिकारी प्राड्विवाको (क) भगवतः।

काशीमिश्रपरीक्षामहापात्रे। उपसृत्य दण्डवन्निपततः।

पशुपालकाः। मालां कण्ठे दत्त्वा प्रणमन्ति।

भगवान्। अहो! किमेतत् भगवत्पार्षदा भवन्तो महाराध्या एव कथमयोग्यमेतत् क्रियते। इति सर्वान् प्रणम्यालिङ्गति।

पशुपालाः। सार्वभौम! भगवतो दिवास्नपनसमयः सम्प्रति-जातः किमिदानीं तत्रैव गत्वा स्वामिना स्नातव्यं किं वा विश्रम्य स्नानादि कृत्वा समागन्तव्यम्।

सार्व। स्नात्वा देवदर्शनं कर्त्तव्यम्।

काशीमिश्रः। तदित एवागच्छन्तु। इति स्नानयमुपसर्पति।

सार्व। भगवन्निदं खलु मस्यैव मिश्रस्य पुरं श्रीचरणानां कृते शोधयित्वा स्थापितमस्ति तदत्रैव प्रविशन्तु भगवन्तः। इति प्रवेशं नाटयन्ति। पशुपालादयः प्रणम्य निष्क्रान्ताः। ततः प्रविशन्ति बहव एवोत्कलवासिनो महाशयाः। केचित्।

तदानीमस्माकं समजनि न तादृक् सुभगता
गतास्तेनास्माकं परमकरुणा नेत्रपथम्।
इदानीं नो भाग्यं समघटत यज्जङ्गममिमं
स्वयं नीलाद्रीशं वत नयनपातैर्विचिनुमः॥ (ख)

इत्युपसर्पन्ति।

---

(क) पशुपालाः गोरक्षका इत्यर्थः। प्राड्विवाकः विचारपतिः।

(ख) तदानीमिति। तदानीं भगवतः प्रथमोपस्थितावित्यर्थः अस्माकं तादृक् सुभगता सौभाग्यं न अजनि न जातं, तेन हेतुना

सार्व। भगवन्! अयं भगवतोऽनवसरकालाङ्गसेवकोऽन्तरङ्गो जनार्दननामा। अयं स्वर्णवेत्रधारी पार्षदः कृष्णदासनामा। अयं लेखनाधिकारी शिखिमाहाती भ्रातरौ चास्येतौ। अयं दासमहासोयारनामा महानसाधिकारी। एते निसर्गभक्ताः श्रीजगन्नाथस्य। इमे चन्द्रेश्वरमुरारिसिंहेश्वरा ब्राह्मणोत्तमा राजमहापात्राणि स्वभाववैष्णवाः। अयं प्रहरराजमहापात्रं (छ) परमो भगवद्भक्तः। अयं प्रद्युम्नमिश्रः। अयं विष्णुदासः। इमे रामानन्दरायसहोदराः। तन्मध्ये अयं वाणीनाथपट्टनायकः। अयं तस्य जनको भवानन्दरायः। इमे चान्ये गौडोत्कलवासिनः सर्वे त्वच्चित्तास्त्वद्गतप्राणा दण्डवत् प्रणमन्ति। एतानात्मीयत्वेनानुगृह्णीतुमर्हन्ति।

भगवान्। आत्मान एवामी कथमेषामात्मीयत्वं (ज) विशेषतो जगन्नाथसेवकाः।

परमकरुणाः परमकृपानिधयः भगवन्त इत्यर्थः अस्माकम् ईक्षणपथं दृष्टिगोचरं न गताः वयं न भगवन्तं दृष्टवन्त इत्यर्थः। इदानीं नः अस्माकं भाग्यं समघटत सञ्जातं, यत् यतः स्वयं साक्षात् इमं जङ्गमं लीलाद्रीशं लीलाचलेश्वरं जगन्नाथं नयनपातैः विचिनुमः पश्यामः वतेति हर्षसूचकमव्ययम्। शिखरिणीवृत्तम्।

(छ) अनवसरकालाङ्गसेवकः सततदेहपरिचारक इत्यर्थः अन्तरङ्गः प्रियः। राजमहापात्राणि राज्ञो महामन्त्रिणः। प्रहरराजमहापात्रं राज्ञः प्रहरमहामन्त्री।

(ज) आत्मीयत्वम् आत्मन अमी इति आत्मीयाः तेषां भावः तत्त्वम् आत्मात्मीयोर्भिन्नत्वादिति भावः।

सार्व। भगवन्! जगन्नाथस्य भवतश्च ब्रह्मचैतन्यत्वम-विशिष्टमेव तथाप्यस्ति कश्चिद्भेदः। असौ दारुब्रह्म भवान् नरब्रह्म।

भगवान्। कर्णौ पिधाय।

अत्युक्तिरेषा तव सार्वभौम
तनोति कामं श्रवसोः कटुत्वम्।
तीक्ष्णो हि गौड़स्य रसस्य पाक-
स्तिक्तत्वमायाति न चैति बद्धम्॥ (भ)

सार्व। भगवान्! गौड़देशस्य रसस्य पाकः सुरस एव यथाविरासीद्भगवान्।

श्रीकृष्णचै विरम विरम अतः परं श्रीपुण्डरीकाक्षदर्शनस्य समयो जातः।

सार्व। एवमेव तदुपसर्पन्तु भगवन्तः। इति भगवन्तमग्रे कृत्वा परिक्रामन्ति। नेपथ्ये।

अयमेव दृशोः रसायनं परमानन्दपुरीश्वरः पुरस्तात्।
दमनार्थमघौघकारिणां धृतदण्डः समये समुज्जिहीते (ञ)

(भ) अत्युक्तिरिति। हे सार्वभौम! तव एषा अत्युक्तिः आरोपितव्याहारः श्रवसोः कर्णयोः कटुत्वं कामं तनोति विस्तारयति न खलु श्रोत्रसुखमिति भावः। हि तथाहि गौड़स्य गुड़सम्बन्धिनो रसस्य तीक्ष्णः पाकः तिक्तत्वम् आयाति प्राप्नोति, नच बद्धम् एति सारतां न प्रतिपद्यते इत्यर्थः। उपजातिश्छन्दः।

(ञ) अयमिति। अयम् एषः दृशोः नेत्रयोः रसायनम् आसेचनकमित्यर्थः परमानन्दपुरीश्वरः अघौघकारिणां पापनिवहकारिणां

सार्वं। आकर्ण्य। अहो! अवसरः संवृत्त एव देवस्य यदयं प्रस्तौति।

श्रीकृष्णचैतन्यः। स्वगतम्। अहो! परमानन्दपुरीश्वरस्तावन् मुनीन्द्रमाधवपुरीश्वरस्य शिष्यः। यत्र खलु अग्रजस्य (ट) विश्वरूपस्य समग्रमैश्वरं तेजः प्रविष्टं स एव वा समागतः। भवतु देवं विलोक्य तत्त्वमस्य ज्ञेयम्।

सार्वं। इयं पुरो भगवतः परमानन्दपुरी तदेनां प्रविशन्त।

इति सर्वे भगवता सह श्रीजगन्नाथदर्शनार्थं निष्क्रान्ताः।

ततः प्रविशति परमानन्दपुरी।

पुरी। सोत्कण्ठम्।

कदाऽसौ द्रष्टव्यः स खलु भगवान् भक्ततनुमा-
निति प्रौढ़ोत्कण्ठाविलुलितमहो मानसमिदम्।
चिरादद्य प्राप्तः स खलु फलकालो मम पुन-
र्न जाने कीदृक्षं जनयति फलं भाग्यविटपी॥ (ठ)

दमनार्थं समये धृतदण्डः दण्डधर इत्यर्थः पुरस्तात् अग्रतः समुज्जीम्भिते समुदेति। पुष्पिताग्रावृत्तम्।

(ट) अत्र परमानन्दपुरीश्वरे। अग्रजस्य मज्ज्येष्ठभ्रातुः।

(ठ) कदेति। असौ भक्ततनुमान् भक्तशरीरधारी स खलु भगवान् कदा द्रष्टव्यः साक्षात् करणीयः इति इत्थं प्रौढ़या महत्या उत्कण्ठया विलुलितं विलोड़ितम् इदं मानसं ममेति शेषः। अद्य चिरात् मम पुनः स फलकालः मनोरथपूर्त्तिसमयः प्राप्तः उपस्थितः। न जाने न वेद्मि, भाग्यविटपी अदृष्टतरुः कीदृशं कीदृशं फलं जनयति उत्पादयति। शिखरिणीवृत्तम्।

इति परिक्रामन्। भगवन् श्रीजगन्नाथ! क्षम्यतां त्वामनालोक्य यदग्रे तमुपसर्पामि (ड) तत्ताहग्गीमुत्कण्ठां सर्वज्ञ जानन्त्येव। पुरोऽवलोक्य। अहो! इहैव भवितव्यं भगवता तेन। यतः।

जगन्नाथद्वारादपि बहुलकोलाहलकृतो
स मूहो लोकानामिह सरति नैवापसरति।
अतो मन्ये धन्ये! धरणि! तव पुण्येन मिलितः
स एवायं देवः कनकरुचिरत्नैव भविता (ढ)
तदहमुपसर्पामि। इत्युपसर्पति।

ततः प्रविशति परिजनैः सार्द्धं श्रीजगन्नाथदर्शनानन्द-निस्पन्दः श्रीकृष्णचैतन्यः।

श्रीकृष्ण। स्फुरितमभिनीय। अहो! परमानन्दपुरीश्वरः साम्प्रतमागमिष्यतीव लक्ष्यते। यतः।

भगवद्दर्शनसुखमनुसुखान्तरं किमपि साम्प्रतं भावि।
आसन्नप्रसंशंसी प्रसाद आकस्मिको मनसः॥ (ण)

इति सोत्कण्ठं तिष्ठति।

---

(ड) तं भक्तसुमन्तं भगवन्तम्।

(ढ) जगन्नाथेति। इह अस्मिन् क्षेत्रे बहुलकोलाहलकृतां महाकलरवकारिणामित्यर्थः लोकानां समूहः जगन्नाथद्वारात् जगन्नाथस्य द्वारदेशात् सरति गच्छति नैव अपसरति स्थानान्तरं न गच्छतीत्यर्थः। अतः कारणात् मन्ये तर्कयामि, हे धन्ये! पुण्यवति धरणि! तव पुण्येन मिलितः आविर्भूतः स एवायं कनकरुचिः हेमप्रभः देवः श्रीकृष्णचैतन्यः अत्रैव जगन्नाथपुण्यामिव भविता स्थास्यति। शिखरिणीवृत्तम्।

(ण) भगवदिति। भगवतः जगन्नाथस्य यत् दर्शनसुखं तदनु

पुरी। अग्रतोऽवलोक्य। अहो! अयमसौ।

जयति कलितनीलशैलचन्द्र-
रसरसचर्वणरङ्गनिस्तरङ्गः।
कनकमणिशिलाविलासवक्षः-
स्थलगलदस्रमजस्ररोमहर्षः॥ (त)

श्रीचै। अग्रतोऽवलोक्य। अयमेवासौ(थ) यदिदमाकस्मिक-
मागमनमिहैतस्य इत्युत्थाय प्रणम्य। स्वामिन्! पुरीश्वरोऽसि।

पुरी। ससम्भ्रमम्। भगवन्! त्वद्दर्शनार्थमेवायमहमुत्-
कण्ठितो वाराणसीत आगच्छन्नस्मि।

श्रीचै। अनुगृहीतोऽस्मि।

उपसृत्य जगदानन्दः। स्वामिन्! इत इतः। इति विश्रामयति।

सार्व। भोः! स्वामिन्निदमतिचित्रम्।

तत्पश्चात् किमपि अनिर्वचनीयं सुखान्तरं परमानन्दपुरीश्वरदर्शनज-मिति भावः साम्प्रतं भावि भविष्यति। यतः नयनः आकस्मिकः सहसोपस्थितः प्रसादः विकासः आसन्नम् अदूरवर्त्ति शर्म सुखं श्रेयो वा शंसति सूचयतीति तथोक्तः।

(त) जयतीति। कलितं कृतं नीलशैलचन्द्रेण यं जगन्नाथदेवदर्शनं तदेव रसः तस्य चर्वणरङ्गेन आस्वादविलासेन निस्तरङ्गः निष्पन्दः तथा कनकमणिशिलाया विलास इव विलासो यस्य तादृशं यत् वक्षः-स्थलं तस्मात् गलन्ति अस्राणि अश्रूणि यस्मिन् तद् यथा तथा अजस्रः निरन्तरः सर्वाङ्गव्यापीत्यर्थः रोमहर्षः रोमाञ्चो यस्य तथाभूतः श्री-कृष्णचैतन्यदेव इति शेषः जयति सर्वोत्कर्षेण वर्त्तते। पुष्पिताग्रा-वृत्तम्।

(थ) अयमेव परमानन्दपुरीश्वर एव।

ये केऽपि याः काश्चन सप्रवाहा
नदाश्च नद्यश्च भवन्ति भूमौ ।
कस्यापि रत्नाकरमन्तरेण
क्वापि नास्था न च सन्निवेशः ॥ (द)

नेपथ्ये । अहो ! रसकलावतो भगवतो रसाचार्य्यकं
प्रहीतुमिव मूर्त्ततां व्यधित भिक्षुवेषं वपुः ।
यदेतदवनीतले सकल एव दामोदर-
स्वरूपमिति भाषते तदपृथक्तया प्रेमतः ॥ (ध)

सार्व्वं । अहो ! लोकानामत्र भगवति नैसर्गिकी

(द) ये इति । ये केऽपि याः काश्चन सप्रवाहाः प्रवाहसहिताः नदा नद्यश्च भूमौ सन्ति वर्त्तन्ते, कस्यापि जलप्रवाहस्येत्यर्थः रत्नाकरमन्तरेण सागरं विना क्वापि न आस्था न आग्रहः, नच सन्निवेशः नापि स्थितिरित्यर्थः। ये केऽपि महात्मानः सन्तु भगवन्तमन्तरेण कस्यापि स्थितिर्न विद्यते इति भावः । अत्राप्रस्तुतात् रत्नाकरात् प्रस्तुतस्य भगवतः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः तदुक्तं दर्पणे । क्वचिद्विशेषः सामान्यात् सामान्यं वा विशेषतः। कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम् । अप्रस्तुतात् प्रस्तुतं चेत् गम्यते पञ्चधा ततः । अप्रस्तुतप्रशंसा स्यादिति । इन्द्रवज्राच्छन्दः ।

(ध) अहो इति । अहो ! आश्चर्य्यं रसकलावतः रसमयस्य भगवतः भिक्षुवेशं सन्न्यासिवेशं वपुः शरीरं रसाचार्य्यकं प्रेमरसोपपदेष्टृत्वं प्रहीतुमिव मूर्त्ततां मूर्त्तिमत्त्वं व्यधित दधार । यत् एतत् वपुः अवनीतले प्रेमतः प्रेम्णा तदपृथक्तया तदभिन्नतया भगवदभिन्नत्वेन सकलः सर्व्व एव जनः दामोदरस्य स्वं स्वरूपमिति भाषते कथयति । पृथ्वीच्छन्दः ।

रतिः। (न) यदिदं परोक्षेऽपि सर्वं भगवत्तामेवास्य (प) गायन्ति।

श्रीचै। स्तुतिमभिनीय। अहो! दामोदरस्वरूपमिति नामाकर्णितं कच्चिदयमपि (फ) समागमिष्यतीव लक्ष्यते।

सार्व। स्वामिन्! प्रायशो भवदवतारे केचित् पूर्वं केचित् पश्चाच्च भवदीया (ब) एव सर्वे प्रवृत्ताः। समये सर्वैरेव मिलितैर्भवितव्यम्। अत एव सम्प्रवाहा इत्युक्तम्।

ततः प्रविशति दामोदरस्वरूपः।

दामोदरस्वरूपः। आकाशे लक्ष्यं बद्धा।

हेलोद्धूलितखेदया विशदया प्रोन्मीलदामोदया
शाम्यच्छास्त्रविवादया रसदया चित्तार्पितोन्मादया।
शश्वद्भक्तिविनोदया समदया माधुर्य्यमर्य्यादया
श्रीचैतन्य! दयानिधे! तव दया भूयादमन्दोदया॥ (भ)

(न) नैसर्गिकी स्वाभाविकी। रतिः अनुरागः।

(प) यदिदमिति। यत् यस्मात् इदमपरोक्षेऽपि अस्य असन्निधानेऽपि। भगवत्ताम् ईश्वरत्वम्।

(फ) अयमपि दामोदरोऽपि।

(ब) भवदीयाः भवत्पार्षदा इत्यर्थः।

(भ) हेलेति। हे दयानिधे! श्रीचैतन्य! तव दया हेलया अवहेलया उद्धूलितः नाशितः खेदो यया तादृश्या दुःखहारिण्या इत्यर्थः विशदया निर्मलया प्रोन्मीलन् उद्गच्छन् आमोदो यस्याः तथाभूतया शाम्यन् निवर्त्तमानः शास्त्राणां विवादो यया तयोक्तया रसदया प्रीतिदायिन्या, चित्ते मनसि अर्पितः जनितः उन्मादः चित्तविकारविशेषः यया तादृश्या शश्वत् सततः भक्तिविनोदः प्रमो-

इत्युपसर्पति ।

गापो । पुरोऽवलोक्य स्वगतम् । अये ! श्रुतं मया चैतन्या-नन्दशिष्यः परमविरक्तो भगवद्भक्तोऽतिविद्वान् कश्चिद्दामो-दरस्वरूपो नाम । यः खलु गुरुणा बहुतरमभ्यर्थितोऽपि वेदान्तमधीत्याध्यापयेति न च तच्च (म) कृतवान् । अपि तु

समस्तहानाय तुरीयमाश्रमं
जग्राह वैराग्यवशेन केवलम् ।
श्रीकृष्णपादाब्जपरागरागत-
स्तुच्छीचकारैनमहो ! वहन्नपि ॥ (य)

स एवायं तद्भगवते निवेदयामि । इत्युपसृत्य । भगवन्न-यमयं श्रुतचरो (र) दामोदरस्वरूपः ।

व्रातः यस्यां तयोक्तया सदयया हर्षदायिन्या माधुर्य्यमर्य्यादया मोहिन्या स्थितया चमन्दः महान् उदयो यस्मात्तथाभूता भूयात् । शार्दूलविक्रीडितं वृत्तम् ।

(म) बहुतरमिति बहुतरं पुनः पुनः वेदान्तम् अधीत्य पठित्वा अध्यापय शिष्यानिति शेषः इति अभ्यर्थितः अनुरुद्धः । तच्च गुरु-वाक्यञ्च ।

(य) समस्तेति । समस्तहानाय सर्वत्यागाय केवलं वैराग्यवशेन वीतरागत्वेन हेतुना तुरीयं चतुर्थमाश्रमं जग्राह । अहो ! आश्चर्य्यं य इत्यध्याहार्य्यं वहन्नपि जीवन्नपि जीवता गुरुवाक्यं नातिक्रमणीयम् अनेन तदपि कृतमिति भावः श्रीकृष्णस्य यत् पादाब्जं चरणकमलं तस्य परागे रजसि रागतः अनुरागात् एनं गुरुं तुच्छीचकार न गणयामासेत्यर्थः । वंशस्थविलं वृत्तम् ।

(र) श्रुतचरः श्रुतपूर्वः चरट् भूतपूर्वे इति चरट्प्रत्ययः ।

भगवान्। क स? क सः?। इति सौत्कण्ठमुपसर्पति।

सर्वे। उपसृत्य पादयोः प्रणमति।

श्रीचै। बाहुभ्यामुत्थाप्यालिङ्गति।

नेपथ्ये। ईश्वरपुरीनिषेवणरतः स्वतः कृष्णभक्तस्य।

अयमेति विशदहृदयो विरक्तिमान् सकलविषयेषु॥ (अ)

सार्वं। आकर्ण्य। अये! भगवत्पुर-परिचारकः कोऽपि समायाति। कस्तावदसौ?। परीक्षामहापात्रस्य प्रतिनिधिर्वा। नासौ तथा विरक्तः।

श्रीचै। अहो! पुरीश्वरस्य सकाशात् कश्चिदायातीव।

सार्वं। अवलोक्य। जानीम। इति निरूपयति।

ततः प्रविशति गोविन्दानन्दनामा कश्चित्।

गोविन्दः। स्वगतम्। प्रहितोऽस्मीश्वरपुर्या महाप्रभोः सविध एव याहीति। उपसन्नं तदिदमथो न वेद्मि निजभाग्यमहिमानम् (ब)। इत्युपसृत्य प्रणम्य चाञ्जलिं बद्धा। स्वामिन्!।

दृष्टं मया प्रथममस्य यदेवरूपं
तेनैव निर्वृतिरहो! मम नान्यवेषम्।

(अ) ईश्वरेति। ईश्वरपुर्या निषेवणे सेवायां रतः स्वतः स्वभावात् कृष्णभक्तः विशदं निर्मलं हृदयं यस्य तथाभूतः तथा सकलविषयेषु सर्वेषु बाह्यवस्तुषु विरक्तिमान् विरक्तः अयं जनः एति आगच्छति।

(ब) उपसन्नं सन्निहितं सत् सविधम्। न वेद्मीति निजभाग्येन महाप्रभुदर्शनं घटते न वेति इति न जानामीति भावः।

(स) दृष्टमिति। मया प्रथमम् अस्य श्रीचैतन्यस्य यत् एव रूपं दृष्टं साक्षात्कृतम्, अहो! आश्चर्यं तेनैव रूपेण मम निर्वृतिः प्रीतिः

पश्यामि तं त्वमुपयाहि तमित्यहं ते

सम्प्रेषितश्चरणसीम्नि पुरीश्वरेण ॥ (अ)

श्रीचै। अस्ति तथैव मयि तेषामखण्डमेव वात्सल्यम्। (ब)

सार्व। त्वं तस्य परिचारकः।

गोपी। अथ किम्?।

सार्व। स्वामिन्! कथमसौ ब्राह्मणेतरं परिचारकत्वेनानुगृहीतवान्।

श्रीचै। भट्टाचार्य्य! मैवं वादीः।

हरेः स्वतन्त्रस्य कृपाऽपि तद्व-

द्धत्ते न सा जातिकुलाद्यपेक्षाम्।

सुयोधनस्यान्नमपोह्य हर्षा-

ज्जग्राह देवो विदुरान्नमेव ॥ (स)

सार्व। एवमेव।

श्रीचै। भवतु यद्यपि पूज्यानां परिचारकेण स्वपरि-

---

अहम् अन्वेषं सन्न्यासिविषयमिति भावः तं न पश्यामि, न मया तस्य सन्न्यासिविशेषो दृष्ट इति भावः, त्वं तं सन्न्यासिविषयम् उपयाहि इति पुरीश्वरेण ते तव चरणसीम्नि चरणसमीपे अहं प्रेषितः। वसन्ततिलकं वृत्तम्।

(ब) तथैव पूर्ववदेव। अखण्डम् अविच्छिन्नं वात्सल्यं स्नेहः।

(स) हरेरिति। स्वतन्त्रस्य स्वाधीनस्य हरेः कृपापि सा तद्वत् जातिकुलादीनाम् अपेक्षां न धत्ते न करोति, तथाहि देवः कृष्णः सुयोधनस्य अन्नम् अपोह्य त्यक्त्वा हर्षात् आनन्दात् विदुरस्य अन्नमेव जग्राह। उपजातिवृत्तम्।

चर्या कारयितुं न युज्यते तथाऽपि तदाज्ञया तथैव कर्त्तव्यम्। इति तमनुगच्छति।

प्रविश्य सत्वरम्। मुकुन्दः। स्वामिन्! ब्रह्मानन्दभारती भवन्तं दिदृक्षमाण आगतोऽस्ति। यद्याज्ञापयसि तदिहैवानयामि।

श्रीचै। श्रान्तं! मान्याः खलु भवन्त्यमी तन्मयैव गन्तव्यम्।

सर्वे। अलौकिकानामपि लौकिकत्व-
मलौकिकत्वप्रथनाय नूनम्।
भुवः प्रयाणं किल विष्णुपद्या
दिवं नयत्येव शरीरभाजः॥ (ङ)

इति भगवन्तमनु कृत्वा परिक्रामन्ति। ततः प्रविशति चर्माम्बरो ब्रह्मानन्दः।

ब्रह्मा। पुरोऽवलोक्य। अयमेव श्रीकृष्णचैतन्यः।

तथाहि, कनकपरिघदीर्घदीर्घबाहुः
स्फुटतरकाञ्चनकेतकीदलाभः।
नवदमनकमाल्यलाल्यमान-
द्युतिरतिचारुगतिः समुज्जिहीते॥ (च)

(ङ) अलौकिकानामिति। अलौकिकानां लोकातीतचरितानाम् अपि लौकिकत्वं नूनम् अलौकिकत्वप्रथनाय अलौकिकत्वं प्रथयितुमित्यर्थः भवतीति शेषः। विष्णुपद्यां गङ्गायां प्रयाणं शरीरभाजः देहिनः भुवः पृथिव्याः दिवं स्वर्गं नयति प्रापयत्येव। उपेन्द्रवज्रावृत्तम्।

(च) कनकेति। कनकपरिघवत् काञ्चनार्गलवत् दीर्घदीर्घौ अति-

श्रीचै। उपसृत्य तमवलोक्यापि चर्मचेलत्वमात्मनोऽनभिमतमिति बोधयन् सावहित्थम् (क)। मुकुन्द! क्वासौ।

मुकु। अयमयम्।

श्रीचै। नहि स चेदभविष्यत्तदा कथं चर्मचेलत्वेन बाह्यवेषावेशवशत्वमस्याभविष्यत्। (ख)

ब्रह्मा। आकर्ण्य स्वगतम्। अहो! अस्मै चेलत्वं न रोचत इव भवति हि।

दम्भैकमात्रप्रथनाय केवलं
चर्माम्बरत्वादि न वस्तु साधनम्।
चलद्भिरुर्वीमृजुनैव वर्त्मना
सुखेन गम्यस्य समाप्यतेऽवधिः॥ (ग)

दीर्घौ बाहू यस्य तथोक्तः स्फुटतरं प्रफुल्लतरं यत् काञ्चनकेतकीदलं सौवर्णं केतकपत्रं केतकीपुष्पं सौरभातिशयद्योतकम्। तस्य आभा इव आभा यस्य तथाभूतः नवं यत् कनकमाल्यं तदाख्यपुष्पस्रक् तेन बहुमहार्हेणेति यावत् लाल्यमाना पुष्यमाणा द्युतिः कान्तिः यस्य तथाविधः तथा अतिचारुगतिः अतिमनोहरगतिः अयं श्रीचैतन्यः समुज्जृम्भते समुदेति। पुष्पिताग्रावृत्तम्।

(क) सावहित्थं साकारगोपनम् अवहित्थाकारगुप्तिरित्यमरः।

(ख) चर्मचेलत्वेन चर्माम्बरत्वेन। बाह्यवेषस्य आवेशः, तस्य वशत्वं तद्वशीभूतत्वम्।

(ग) दम्भेति। चर्माम्बरत्वादि केवलं दम्भैकमात्रप्रथनाय दम्भः अहङ्कारजनितमनोविकारः तन्मात्रप्रथनाय तन्मात्रस्य प्रकटनाय भवतीति शेषः न वस्तुनः भगवत्तत्त्वरूपस्य साधनं तस्मादनोपायः, ऋजुनैव सरलेनैव वर्त्मना मार्गेण उर्वीं भुवं चलद्भिः गच्छद्भिः जनैः

किमेतेन। इति चर्म जिज्ञासति। (घ)

श्रीचै। दामोदरं निरीक्षते।

दामोदरः। इङ्गितं बुद्धा सत्वरं बहिर्वासः (ङ) प्रयच्छति।

ब्रह्मा। परिदधाति।

श्रीचै। उपसृत्य प्रणमति।

ब्रह्मा। ससाध्वसादरम्। स्वामिन्! लोकशिक्षार्थं यद्यपि भवतामिदमुचितमेव तथापि नोऽतिभयजनकमेतत् तदपरं नैतदनुष्ठेयम्। पश्य पश्य।

नीलाचलस्य महिमा न हि मादृशेन
शक्यो निरूपयितुमेवमलौकिकत्वात्।
एते चरस्थिरतया प्रतिभासमाने
द्वे ब्रह्मणी यदिह सम्प्रति गौरनीले॥ (च)

श्रीचै। सम्प्रति शब्दस्य वर्त्तमानत्वादचिरागते भवत्येव

सुखेन अक्लेशेन गम्यस्य गन्तव्यस्थानस्य अवधिः चरमसीमा समाप्यते सम्यक् प्राप्यते। इन्द्रवंशाहत्तम्। तच्चेन्द्रवंशा प्रथमाक्षरे गुरोरिति तस्य वंशस्थविलमिति पूर्वोक्तच्छन्दो नामेति बोध्यम्।

(घ) किमेतेनेति एतेन चर्मणा किम्? न किमपि प्रयोजनमित्यर्थः। जिज्ञासति ज्ञातुमिच्छति।

(ङ) बहिर्वासः बाह्यं वसनम् उत्तरीयमित्यर्थः।

(च) नीलाचलस्येति। मादृशेन क्षुद्रेणेति भावः अलौकिकत्वात् लोकातीतत्वात् नीलाचलस्य महिमा एवंमाहात्म्यं निरूपयितुम् अवधारयितुं न हि शक्यः, यत् यतः इह नीलाचले सम्प्रति चरस्थिरतया जङ्गमस्थावरत्वेन प्रतिभासमाने प्रकाशमाने एते गौरनीले द्वे ब्रह्मणी वर्त्तेते इति शेषः गौरं जङ्गमं ब्रह्म श्रीचैतन्यः, नीलं स्थावरं ब्रह्म श्रीजगन्नाथ इति भावः।

गौरब्रह्मता नामैकदेशवर्त्ति ब्रह्मशब्दत्वाच्च । (छ)

ब्रह्मा । व्याप्यव्यापकभावत्वेनैव (ज) तदनुमीयते । व्याप्यत्वञ्च चर्मत्यागेनैव ज्ञायताम् ।

सार्व । सम्यगाहुः श्रीपादाः ।

ब्रह्मा । सार्वभौम ! पश्य पश्य ।

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।

इति नामान्यनेनैव सान्वयत्वं प्रपेदिरे ॥ (झ)

चन्दनाङ्गदित्वं स्वप्रसादचन्दनाक्तडोरेणैव भगवद्भिः श्रीजगन्नाथदेवैरेव क्रियमाणमस्ति । पश्य पश्य भगवद्रूपमात्रस्य परमानन्दप्रदत्वं किं पुनः स्वयं भगवतः श्रीकृष्णस्य । अहो ! चित्रम् ।

आनन्दानुभवैकसाधनमहो ! रूपं घनानन्दचि-
द्धाम्नान्तःकरणोर्मिवृत्तिविरहस्यापादकं पश्यताम् ।

(छ) सम्प्रतिशब्दस्य वर्त्तमानत्वात् वर्त्तमानत्वबोधकत्वादित्यर्थः प्रयोगाद्वा । अचिरागते साम्प्रतमागते भवति त्वयि एव गौरब्रह्मता गौरब्रह्मत्वं वर्त्तते इति शेषः नामेति नाम्नः ब्रह्मानन्द इत्याख्याया एकदेशे वर्त्तते इति तथाभूतः यः ब्रह्मशब्दः यश्च तथात्वादित्यर्थः ।

(ज) व्याप्येति । व्याप्यः ब्रह्मानन्दः व्यापकः श्रीचैतन्य इति भावः ।

(झ) सुवर्णवर्ण इति । शोभनो वर्णः प्रभा यस्य तादृशः वर्णः पीतगुणः यस्य तथाभूतः हेमाङ्गः काञ्चनप्रतिमशरीरः वराङ्गः श्रेष्ठाङ्गः चन्दनाक्तम् अङ्गदं केयूरं विद्यते यस्य तथाभूतः । इति नामानि नामचतुष्टयमित्यर्थः अनेनैव श्रीचैतन्येन सान्वयत्वम् अन्वर्थत्वं प्रपेदिरे प्रापुः ।

(ञ) आनन्देति । अहो ! आश्चर्यम् आनन्दानुभव एव एकं साधनं ज्ञानोपायो यस्य तादृशं घनानन्दचित् घना सान्द्रा आनन्दचित्

छित्वानन्दथुलब्धये हृदि निराकारन्तु येश्चिन्त्यते
मन्ये तान् भ्रमयत्यहो भगवती सा काऽपि दुर्वासना॥(ज)
अपिच. अमूर्त्तत्वं तत्त्वं यदि भगवतस्तत्कथमहो!
महासूयादीनामपि न भगवत्तत्त्वगणना।
न मूर्त्तामूर्त्तत्वे भवति नियमः किन्तु परमो
य आनन्दो यस्मादपि स च स ईशो मम मतम्॥(ट)

सार्व। स्वामिन्नेवमेव। आनन्दमयोऽभ्यासादित्यत्र व्याख्यातश्चैतत्। स्वयमानन्दः परानप्यानन्दयति। यथा

आनन्दानुभवः यस्मात् तथोक्तं तथा पश्यतां जनानां बाह्यकरणानां बहिरिन्द्रियाणाम् अर्गलस्तम्भा इव इमाः व्यापाराः तासां विरह्स्य आपादकं जनकं बाह्येन्द्रियव्यापारनिराकारकं रूपम् एतत् चैतन्यरूपमित्यर्थः छित्वा त्यक्त्वा यैः जनैः आनन्दथुलब्धये आनन्दलाभाय हृदि निराकारम् अरूपं ब्रह्मेति शेषः चिन्त्यते, मन्ये जाने, भगवती सर्वशक्तिमती सा प्रसिद्धा कापि दुर्वासना कुसंस्कार इत्यर्थः तान् निराकारब्रह्मचिन्तकान् भ्रमयति, अहो! इति खेदजनकमव्ययम्। शार्दूलविक्रीडितं वृत्तम्।

(ट) अमूर्त्तत्वमिति। अमूर्त्तत्वम् अरूपत्वं यदि भगवतः तत्त्वं तत् तदा महासूयादीनामपि कथं भगवत्तत्त्वगणना न महासूयादयोऽपि भगवतः तत्त्वानि भवन्तु, अहो! आश्चर्यं यस्य मूर्त्तिर्नास्ति तस्य सद्गुणशालित्वे यथा प्रमाणं नास्ति तथा महासूयाद्यसद्गुणशालित्वेऽपि प्रमाणाभावो नास्तीति भावः। तस्मात् मूर्त्तामूर्त्तत्वे भगवत इति शेषः न नियमो भवति भगवान् मूर्त्तः वा अमूर्त्त इति निर्द्धारणं न विद्यते इति भावः किन्तु परमः महान् य आनन्दः, यस्मादपि स च आनन्दः सम्भवतीति शेषः स एव ईशः भगवान् इति मम मतम्। शिखरिणीवृत्तम्।

प्रचुरधनः परेभ्योऽपि धनं ददाति इति प्राचुर्य्यार्थे मयडिति किन्तु तत् कृपा चेद्भवति तदा निराकारभावनातोऽपि पुनः श्रीविग्रहमाधुर्य्य एव निपतति। उक्तञ्चाभियुक्तैः (ठ)।

अद्वैतवीथीपथिकैरुपास्याः
स्वानन्दसिंहासनलब्धदीक्षाः।
शठेन केनापि वयं हठेन
दासीकृता गोपवधूविटेन॥ इति (ड)

दामो। ब्रह्मानन्द प्रति श्रीपादा मया निमन्त्रिताः अथ तदिदानीमनन्तरकरणीयाय गच्छन्तु।

श्रीचै। स्वामिन्! एवमेव युज्यते।

ब्रह्मा। यदभिरुचितं भवते। इति दामोदरादिभिः कतिभिः सह निष्क्रान्तः।

श्रीचै। सार्वभौम! त्वमपि गन्तुमर्हसि।

सार्व। देव! किञ्चिन्निवेदनीयमस्ति।

---

(ठ) आनन्दमय इति। इत्यत्र अस्य व्याख्याने इत्यर्थः। निराकारेति। निराकारस्य भगवतः भावनातः चिन्तनादपि श्रीविग्रहस्य मूर्त्तस्य भगवतः माधुर्य्ये मधुरिम्णि। अभियुक्तैः मात्सर्य्यरैः विद्वद्भिरित्यर्थः।

(ड) अद्वैतेति। अद्वैतवीथी एकेश्वरवादः सा एव पन्थाः तद्गतैः जनैः स्वः आनन्द एव सिंहासनं तत्र लब्धा दीक्षा स्थितिः यैः तथाविधाः स्वानन्दस्थिता मद्य आनन्दमया इति भावः भगवन्तः उपास्याः आराध्याः बहुवचनं गौरवातिशयद्योतकम्। वयन्तु केनापि शठेन धूर्त्तेन गोपवधूनां विटेन भुजङ्गेन हठेन बलात्कारेण दासीकृताः अधीनीकृताः। उपजातिवृत्तम्।

श्रीचै । किं तत् ? ।

सार्व । स्वामिन् ! अभयञ्चेद्दीयते तदा निवेद्यते ।

श्रीचै । असाध्वसमेव कथ्यताम् ।

सार्व । भूपालः श्रीचरणावलोकनाय समुत्कण्ठते । यद्यनुमन्यसे तदा तमानयाम ।

श्रीचै । कर्णौ पिधाय । सार्वभौम ! भवताऽपीदमुच्यते ।

निष्किञ्चनस्य भगवद्भजनोन्मुखस्य
पारं परं जिगमिषोर्भवसागरस्य ।
सन्दर्शनं विषयिणामथ योषिताञ्च
हा ! हन्त ! हन्त ! विषभक्षणतोऽप्यसाधु ॥ (ढ)

सार्व । स्वामिन् ! सत्यमेवैतत् किन्त्वसौ श्रीजगन्नाथसेवकः ।

श्रीचै । आकारादपि भेतव्यं स्त्रीणां विषयिणामपि ।
यथाऽहेर्मनसः क्षोभस्तथा तस्याकृतेरपि ॥ (ण)

(ढ) निष्किञ्चनस्येति । निष्किञ्चनस्य निर्धनस्य धनाशावर्जितस्येत्यर्थः भगवतः ईश्वरस्य भजनोन्मुखस्य सेवापरस्य भवसागरस्य संसारसिन्धोः परं पारं जिगमिषोः गन्तुमिच्छोः जनस्य विषयिणां धनिनाम् अथ वा योषितां नारीणां सन्दर्शनं विषभक्षणतः अपि असाधु मन्दतरं हा ! हन्त ! हन्त ! इति त्रयं खेदसूचकमव्ययम् । वसन्ततिलकं वृत्तम् ।

(ण) आकारादपीति । स्त्रीणां विषयिणामपि आकारादपि प्रतिकृतिदर्शनादपि तान्त्विक दूरे अपास्तामिति भावः । भेतव्यम् । अहेः भुजङ्गात् यथा मनसः क्षोभः भीतिरिति भावः तथा तस्य अहेः आकारात् प्रतिरूपादपि मनसः क्षोभ इति शेषः ।

यद्येवं पुनरुच्यते तदाऽत्र न पुनरहं द्रष्टव्यः।

सार्व। तूष्णीं तिष्ठति।

श्रीचै। भट्टाचार्य्य! अतिकालो (त) बभूव।

सार्व। यथारुचितं स्वामिने। इति निष्क्रान्तः।

श्रीचै। मुकुन्द! मयि दक्षिणस्यां दिशि गते सति श्रीपादनित्यानन्देन क्व गतम्।

मुकु। गौडे। उक्तञ्चेदं भगवदागमनसमयमनुमाय पुनः सर्वैरद्वैतप्रमुखैः सह मयात्रागन्तव्यमिति।

गोपी। सम्प्रति द्वैराज्यादिकमपि नास्ति। पन्थाश्च सुगमः शुष्कच्छायाला च नेदीयसी। तदागमनसामग्री सर्वैवास्ति। किन्तु स्वामिनां प्रत्यागमनवार्त्ता तावद्दूरगामिनी चेद्भवति अथवा कृतं सन्देहेन। (थ)

ध्वान्तं विधूय किरणैरुदितस्य भानो-
श्चन्द्रस्य वा जगति के कथयन्ति वार्त्ताम्।
लोकोत्तरस्य किल वस्तुन एव सेयं
शैली स्वयं स्वमभितः प्रकटीकरोति॥ (द)

---

(त) अतिकालः कालातिक्रमः दैनिकव्यापारस्येति भावः।

(थ) द्वैराज्यादिकं द्वयोराज्ञोरिदं द्वैराज्यं तदादिकं राज्ञोर्द्वयो-र्गौड़ोत्कलाधिपयोः विवादोऽपगत इति भावः। शुष्कच्छायाला छायाशाला। नेदीयसी निकटवर्त्तिनी। तदागमनेति तेषां नित्यानन्दा-दीनाम् आगमनसामग्री आगमनकारणचय इत्यर्थः। कृतं सन्देहेन सन्देहो न करणीय इत्यर्थः भगवत्प्रत्यागमनवार्त्ता स्वयमेव दूरं गतेति भावः।

(द) ध्वान्तमिति। के जनाः किरणैः मयूखैः ध्वान्तं तिमिरं

तत् स्वामिन् ! जगन्नाथदेवस्य सायाह्नधूपसमयो (ध) जातः । यद्यनुमन्यसे । इत्यर्द्धोक्ते साध्वसं नाटयति ।

शौरे । भाचार्य्य ! गम्यतां धूपावलोकनाय अहमपि पुरीश्वरस्वरूपाभ्यां सह सङ्कथनाय (न) गच्छामि ।

इति भगवान् निष्क्रान्तः ।

गोपी । अहो । निष्क्रान्त एव भगवान् तदहमपि धूपं दृष्ट्वा पुनस्तत्रैव मिलिष्यामि । इति कतिचित्पदान्याद्धावति ।

नेपथ्ये । आसन्ने रथविजयेऽखिलेश्वरस्य
प्राप्तोऽयं धरणिपतिः प्रतापरुद्रः ।
भूयोऽयं यतिवृषभस्य गौरमूर्त्तेः
प्रत्यक्षीकरणकृते प्रयत्नकृत् स्यात् ॥ (प)

गोपी । अहो ! अयं भट्टाचार्य्यस्यालापः श्रूयते तदहो-

---

विधूय निरालम्ब उदितस्य भानोश्चन्द्रस्य वा वार्त्तां जगति कथयन्ति न केऽप्येत्यर्थः लोकोत्तरस्य अलौकिकस्य वस्तुनः सा इयं शैली रीतिः यत् स्वयं स्वं निजस्वरूपम् अभितः समन्तात् प्रकटीकरोति प्रकाशयति लोकोत्तरं वस्तु न केनापि प्रकाश्यते, स्वयमेव प्रकाशते इति भावः । वसन्ततिलकं वृत्तम् ।

(ध) सायाह्नधूपसमयः सायंकालीयपूजाविशेषकालः ।

(न) सङ्कथनाय समालपनाय ।

(प) आसन्ने इति । अखिलेश्वरस्य जगन्नाथस्य रथविजये रथयात्रायाम् आसन्ने उपस्थिते सति अयं धरणिपतिः राजा प्रतापरुद्रः प्राप्तः उपस्थितः । अयं राजा भूयः पुनः । गौरमूर्त्तेः यतिवृषभस्य योगीन्द्रस्य प्रत्यक्षीकरणकृते साक्षात्काराय प्रयत्नकृत् स्यात् प्रयत्नं करिष्यतीत्यर्थः । प्रहर्षणीछन्दः म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयमिति तल्लक्षणात् ।

पालेन गजपतिना समागतमिव। भवत्वपि अभ्य-र्णोऽयं (फ) रथमहोत्सवस्तदहं श्रीजगन्नाथमालोक्य यावदागच्छामि। इति निष्क्रान्तः।

ततः प्रविशति भट्टाचार्य्यः।

भट्टाचार्य्यः। आगमनसमकालमेव यदहमाहूतोऽस्मि गजपतिना तेनोन्नीतं श्रीकृष्णचैतन्यदर्शनार्थमयमुत्कण्ठते। इति परिक्रम्यावलोक्य च। अहो! अयमयमवनीपतिः। यावदुपसर्पामि इत्युपसर्पति।

ततः प्रविशत्यासनस्थो राजा महापात्राश्च च।

राजा। सोत्कण्ठमात्मगतम्।

अभूत्र चेष्टा मम राज्यचेष्टा
सुखस्य भोगश्च बभूव रोगः।
अतःपरं चेत् स न वीक्षते मां
न धारयिष्ये बत जीवनञ्च। (ब)

सार्व। अन्तः सचिन्तित इव लक्ष्यते महाराजः। यदु-पगतमपि मां न गोचरीकरोति (भ) तत् स्वयमेव परि-चीये। जयति जयति महाराजः।

(फ) अभ्यर्णः सन्निहितः।

(ब) अभूदिति। मम राज्यचेष्टा न च दृष्टा अभूत् न मया राज्यमभिलष्यते इत्यर्थः, सुखस्य भोगश्च रोगः पीड़ा बभूव, चेत् यदि अतःपरं स योगान्द्र इति शेषः मां न वीक्षते न पश्यति, बत खेदे, तदाहं जीवनञ्च प्राणानपि वा कथान्येषां वाह्यवस्तूनामिति भावः न धारयिष्ये त्यक्ष्यामीति भावः। उपेन्द्रवज्रावृत्तम्।

(भ) उपगतम् उपस्थितम्। गोचरीकरोति पश्यति।

राजा । अवधानं नाटयित्वा । कथम् । भट्टाचार्य्योऽसि एहि एहि । इति प्रणमति ।

सार्व । आशीर्भिरभिनन्द्योपविशति ।

राजा । भट्टाचार्य्य ! निवेदितं भवता भगवते श्रीकृष्णचैतन्याय ।

सार्व । अथ किम् ? ।

राजा । किमाज्ञप्तम् ।

सार्व । किं कथयामि ।

राजा । सविषादम् । तदैव मया ज्ञातमस्ति यद्भगवता स्वयमुपेत्य सहर्षोल्लासं न कथितम् । हा ! धिक्

अदर्शनीयानपि नीचजातीन्
स वीक्षते चारु तथाऽपि नो माम् ।
अहैकवर्णं करयिष्यतीति
निर्णीय किं सोऽवततार देवः ? ॥ ( म )

सार्व विचिन्त्य । अये ! श्रूयताम् ।

ज्ञातैव तस्य किल सत्यगिरः प्रतिज्ञा
सम्प्रत्यहो ! क्रियत एष मयाऽपि यत्नः ।

(म) अदर्शनीयानिति । स भगवान् अदर्शनीयान् दर्शनायोग्यानपि नीचजातीन् चाण्डालादीन् चारु सम्यक् यथा तथा वीक्षते पश्यति, तथापि मां नो पश्यतीति शेषः । स देवः अहमेव एकः केवलो वर्णः ब्राह्मणः यस्मिन् तद् यथा तथा सर्वं जनं करयिष्यति दर्शयिष्यते इति निर्णीय अवधार्य्य किम् अवततार ? उपजातिवृत्तम् ।

( य ) ज्ञातैवेति । सत्यगिरः सत्यवादिनः तस्य प्रतिज्ञा किल

प्राणांस्त्यजामि किमु वा किमु वा करोमि
तत्पादपङ्कजयुगं नयनाध्वनीनम् ॥ (य)

इति सशाष्पस्तिष्ठति ।

सार्व । स्वगतम् । प्रतिभूमिं गतोऽयमस्यानुरागपरभागः (र) किं करोमि ।

पुनर्गत्वा ब्रूयामहह ! तदिदं नैव घटते
स निर्बन्धस्तस्य द्रढिमगरिमद्राघिमघनः ।
सुदुर्वारोऽप्यस्य प्रथिमपटिमप्रौढ़िमवशो
महारागः कश्चित् कमपि न विजेतुं प्रभवति ॥ (ल)

तदधुना युक्तिः क्रियते । प्रकाशम् । महाराज ! समा-

निश्चितं भातैव, अहो इति खेदसूचकमव्ययं सम्प्रति मयापि एषः पश्चः प्रतिज्ञा क्रियते, किमु वा प्राणान् त्यजामि, किमु वा तस्य भगवतः पादपङ्कजयुगं चरणकमलयुगलं नयनाध्वनीनं नेत्रपथिकं करोमि । वसन्ततिलकं वृत्तम् ।

(र) अनुरागपरभागः अनुरागोत्कर्षः ।

(ल) पुनरिति । पुनः गत्वा ब्रूयां भगवन्तं राजवार्त्तामिति शेषः अहह ! इति खेदसूचकमव्ययम् । तत् इदं पुनर्गत्वा वचनं नैव घटते न खलु युज्यते । तस्य भगवतः द्रढिम्ना दृढ़त्वेन गरिम्णा गुरुत्वेन, द्राघिम्ना दीर्घत्वेन च घनः निविड़ः पूर्ण इत्यर्थः स निर्बन्धः विषयिणां स्त्रीणाञ्च संसर्गपरिहारविषयिणी प्रतिज्ञेत्यर्थः, अस्यापि राज्ञः प्रथिमानं पृथुत्वं पटिमानं पटुत्वं प्रौढ़िमानं प्रौढ़त्वञ्च वष्टीति तथाभूतः महारागः महान् रागः भगवति अनुरागातिशय इत्यर्थः सुदुर्वारः दुर्निवारः दुरपनेय इत्यर्थः । कश्चित् एतयोरुभयोर्निर्बन्धरागयोर्मध्ये कोऽपि निर्बन्धो वा अनुरागो वेत्यर्थः कमपि निर्बन्धं वा अनुरागं वा विजेतुं न प्रभवति न शक्नोति । शिखरिणीवृत्तम् ।

अयिहि समाश्वसिहि अस्त्युपायः कोऽपि भवन्मनोरथतरोः फलप्रसवाय।

राजा। जानासि चेदुच्यताम्।

सार्व। यद्यपि भवतोऽयमनुरागदूत एव तत्सङ्गमस्य कारयिता तथाप्यस्मद्दुर्क्तिवर्त्तनी (व) जीवनोपायो भवितुमर्हति।

राजा। उच्यतां का युक्तिः।

सार्व। जनान्तिकम्। केवलमनुरागमेव दूतं कृत्वाऽद्वितीय एव राजवेश्म विहाय केनाप्यविदित एव भगवतो जगन्नाथदेवस्य रथोत्सववासरे नृत्यविनोदश्रममपनेतुं विजनमारामसवगाहमानमानन्दास्वादविरतवहिर्वृत्तिक (श) मकस्मादुपेत्य विलोकयन्तु भगवन्तं भवन्त इति इतोऽन्यथा न तद्घटते।

राजा। साश्वासमपवार्य्य। एवमेव किन्तु यथेदं भवन्तं विना कोऽपि न जानाति तथा विधेयम्।

भट्टा। एवमेव। प्रविश्य दौवारिकः।

दौवा। देव! राजधानीतः कश्चिदेकः सत्वरमुपसन्नो (ष) ऽस्ति प्रणिधिः।

(व) वर्त्तनी वर्त्तते इति। वर्त्तनी उपस्थितेत्यर्थः।

(श) विजनं जनशून्यम् आरामम् उपवनम् अवगाहमानं सेवमानम्। आनन्दास्वादेन विरता निवृत्ता वहिर्वृत्तिः बाह्यव्यापारः यस्य तथोक्तम्।

(ष) उपसन्नः उपस्थितः। प्रणिधिः गूढपुरुषः।

राजा । प्रवेश्यताम् ।

दौवा । सत्वरं निष्क्रम्य तमादाय प्रविश्य च । देव ! प्रणमयम् ।

राजा । प्रणिधे ! कथय सम्भ्रमस्य (स) कारणम् ।

प्रणि । देव !

परःसहस्राः सहसैव पारे
चित्रोत्पलं ये मनुजाः समूढ़ाः ।
किं तैर्थिकास्ते परचक्रजाः किं
श्रुत्वैव कोलाहलमागतोऽस्मि ॥ (ह)

सार्व । तैर्थिका एव अन्यथा पुरैव वार्त्ताऽभविष्यत् तदनुमीयते गौड़ीया एवैते भगवतः श्रीकृष्णचैतन्यस्य प्रियपार्षदाः । भवतु मन्ये त्वेवासौ मधुरगोष्ठीगरिष्ठानां (च) भविष्यति भगवता सह काऽपि गोष्ठी ।

नेपथ्ये । कलकलः ।

सार्व । महाराज ! सत्यमेवामी नरेन्द्रसरस्तीरं समायाता यदयमानन्दकोलाहलः श्रूयते ।

(स) सम्भ्रमस्य आवेगस्य ।

(ह) परःसहस्रा इति । परःसहस्राः सहस्राधिकाः ये मनुजाः पारे चित्रोत्पलं चित्रोत्पलस्य तदाख्यस्य नरेन्द्रसरसः इति भावः पारे समुपस्थिताः, ते किं तैर्थिकाः तीर्थदर्शनार्थिनः ! किंवा परचक्रजाः परराज्यवासिनः समुपस्था इत्यर्थः । अहं कोलाहलं श्रुत्वैव आगतः अस्मि । उपजातिवृत्तम् ।

(च) अन्यथा विपक्षागमने इत्यर्थः पुरैव पूर्वमेव । मधुरा मनोहारिणी गोष्ठी समाजः । गरिष्ठानां गौरवशालिनामित्यर्थः ।

राजा। सत्यमेवैतत्।

सार्व। महाराज! यदि रोचते तदा वड़भी-(क) मारुह्य पश्यन्तु कौतुकम्।

राजा। यथारुचितं भवते। इति वड़भीमारुह्य पश्यानमवलोक्य च। सार्वभौम! क एष भगवन्निर्माल्य-मालामादाय त्वरमाणस्तैर्थिकानामभिमुखं धावति।

सार्व। अयं दामोदरो भगवच्चैतन्यस्य प्रियपार्षदः। भगवता अद्वैतादिप्रियसुहृदामागमनं श्रुत्वा भगवत्प्रसाद-मालया पुरस्कृत्य तानेव समानेतुमयं प्रेषित इव लक्ष्यते।

राजा। एवमस्ति। कोऽपि तत्र (ख) भगवच्चैतन्यानु-ग्रहपात्रम्।

सार्व। अथ किम्। अन्यथा कथमेवं स्यात्। तदा-ज्ञापय गोपीनाथाचार्य्याह्वनाय। तेनैव सर्वे परिचीयन्ते।

प्रविश्यापटीक्षेपेण। आचार्य्यः। एषोऽहमस्मि तदाज्ञापयतु देवः किं विधेयमिति।

राजा। सार्वभौम! आदिश।

सार्व। भवताऽमी सर्वे परिचीयन्ते तदस्मानपि प्रत्येकं परिचाय्यन्ताम्।

गोपी। बाढम्। इत्युपविशति। नेपथ्ये हरिसङ्कीर्त्तनध्वनिः।

सार्व। आकर्ण्य।

---

(क) वड़भीं प्रासादचूड़ामारुह्येत्यर्थः।

(ख) तत्र उपस्थितेषु जनसमाजेषु इत्यर्थः।

सङ्कीर्त्तनध्वनिरयं पुरतो विभक्त-
शब्दार्थ एव समभूच्छ्रवणप्रमोदी ।
शब्दग्रहेण तदनन्तरमन्यरूपो
लब्धार्थ एव पुनरन्यविधो बभूव ॥ (ग)

राजा । निरूप्य । ईदृशं कीर्त्तनकौशलं क्वापि न दृष्टम् ।

सार्व । इयमियं भगवच्चैतन्यसृष्टिः ।

राजा । आचार्य्य ! यस्मै भगवन्मालामयमर्पितवानयं कः?

गोपी । कथयामि प्रत्येकम् । अयमद्वैतः । अयं नित्यानन्दः ।

सार्व । अयं परिचीयते ।

राजा । कथमसौ कतिचिज्जनैः सह पृथगायाति ।

सार्व । सर्वादृतत्वादन्यसङ्गं नेहते । (घ)

गोपी । अयं श्रीवासः । अयमयं वक्रेश्वरः । अयमाचार्य्यरत्नः । अयमयं विद्यानिधिः ।

सार्व । बाल्ये मया दृष्टावेतौ ।

गोपी । अयं हरिदासः । अयमयं गदाधरः । अयं मुरारिः । इमे श्रीवासस्य सहोदराः । अयं गङ्गादासः ।

(ग) सङ्कीर्त्तनेति । पुरतः अयं सङ्कीर्त्तनध्वनिः अविभक्तः अविभक्त स्फीतः शब्दः अर्थश्च यस्य तादृशः श्रवणयोः श्रोत्रयोः प्रमोदी हर्षप्रदः समभूत् । तदनन्तरं शब्दार्थविभागश्रवणानन्तरं शब्दग्रहेण शब्दज्ञानेन अन्यरूपः अन्यप्रकारः, ततो लब्धार्थ एव अर्थज्ञानेनेत्यर्थः पुनः अन्यविधः अन्यप्रकारः बभूव । वसन्ततिलकं वृत्तम् ।

(घ) अन्यसङ्गम् अपरसंसर्गम् । ईहते चेष्टते वाञ्छतीत्यर्थः ।

अयं नृसिंहाचार्य्यः। इमे चान्ये नवद्वीपवासिनः। एते समाख्यपूर्वाः। आज्ञा चेद्भवति तदा ज्ञात्वाऽऽगच्छामि।

राजा। तथैव क्रियताम्।

गोपी। यथारुचितं देवाय। इति सत्वरं परिक्रम्य नेपथ्यस्थो भूत्वा त्वरितं पुनः प्रविश्य च। सार्वभौम! एष आचार्य्यपुरन्दरः। एष हरिभट्टः। एष राघवः। एष नारायणः। एष कमलानन्दः। एष काशीश्वरः। एष वासुदेवो मुकुन्दस्य ज्यायान्। अयं शिवानन्दः। एष च नारायणः। एष वल्लभः। एष श्रीकान्तः। किं बहुना सर्वं एवामी श्रीचैतन्यपार्षदाः नैकोऽप्यत्र तैर्थिकः।

राजा। कथममी जगन्नाथालयं पृष्ठतः कृत्वा अग्रतस्तन्यकृष्णालयमेव प्रविशन्ति।

सार्व। एष एव नैसर्गिकस्य प्रेम्णो महिमा।

राजा। पुनरन्यतोऽवलोक्य। अये! कथमयं वाणीनाथो रामानन्दानुजः सत्वरः प्रचुरतरैर्महाप्रसादान्नादिभिरुपसरति।

सार्व। हृदयज्ञोऽयं श्रीचैतन्यभगवतः तदनुज्ञ एव महाप्रसादैरुपचरितुमेतानुपसर्पति।

राजा। भट्टाचार्य्य!

"मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयं विधिरिति"

वचनमुल्लङ्घ्यामी अद्य महाप्रसादमुरीकरिष्यन्ति।

सार्व। भट्टारक! स खल्वन्यः पन्थाः। सा तु भगवतः

---

(क) मुण्डनमिति। सर्वेषु तीर्थेषु अग्रतः मुण्डनम् उपवासश्च

परोक्षिकी शास्त्रा इयन्तु साक्षात्कारिणी तथापि भगवता स्वहस्तेन प्रसादीक्रियमाणं जगन्नाथप्रसादान्नम्। अत्र का विप्रतिपत्तिः (ङ)। तथाच

यदा यस्यानुगृह्णाति भगवानात्मभावितः।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम्॥ इति। (च)

अपिच। तत्कर्म हरितोषं यदित्युक्तेरस्य (छ) तोष एवैषामुद्देश्यो न तीर्थयात्रा फलम्।

राजा। एवमेव। किन्तु कथय रथयात्रा कदेति। त्वदुपदिष्टो मन्त्र एव मे हृदि लग्नः। तदत्र निमिष-मात्रोऽपि कालः कल्पायत (ज) इव मे।

सार्व। परश्वः।

राजा। कः कोऽत्र। भोः आहूयतां परीक्षामहापात्र काशीमिश्रश्च।

---

अयं विधिः शास्त्रार्थः। करीकरिष्यन्ति वक्ष्यन्ति। सा त्विति सा मुखजन्मादिकरणविषयिणीत्यर्थः परोक्षिकी पारम्परिकी। शास्त्र-काराणां मनसि भगवद्वाक्यम् उदितं ते तदनुसृत्य शास्त्रं रचयामासु-रिति तद्वाक्यं साक्षात् भगवद्वाक्यं नेति भावः। विप्रतिपत्तिः विसं-वादिनी प्रवृत्तिः।

(च) यदेति। भगवान् आत्मभावितः आत्मभावेन प्रवर्त्तितः न तु अन्येन केनापि स प्रवर्त्तयितुं शक्यते इति भावः। ननु यदा यस्य अनुगृह्णन्ति प्रसीदन्ति, स लोके लोकाचारे वेदे च धर्मशास्त्रे च परि-निष्ठितां लोकवेदानुसारिणीमित्यर्थः मतिं बुद्धिं जहाति त्यजति।

(छ) तत्कर्मेति। हरिस्तुष्यते येन तत् हरितोषं यत्, तत् कर्म।

(ज) निमिषमात्रः अल्पक्षणमात्रः। कल्पायते ब्रह्मपरिमाणेन एकं दिनं कल्पः तद्वदाचरतीत्यर्थः।

प्रविश्य कश्चित्प्रणम्य। देव! यथाऽऽज्ञापयसि। इति निष्क्रम्य तावादाय पुनः प्रविश्य च। देव! सम्प्राप्तावेतौ।

राजा। महापात्र! जगन्नाथदेवस्य यात्राविधौ भगवच्चैतन्यहृदयज्ञेनामुना काशीमिश्रेण यद्यदादिश्यते तदेव मदादेश इति ज्ञात्वा व्यवहर्त्तव्यम्।

महापा। यथाऽऽज्ञापयति देवः।

राजा। मिश्र! त्वयाऽपि भगवच्चैतन्यचित्तानुवृत्तिरहरहरेव कार्य्या।

मिश्रः। मदीयमभीष्टमेवैतत्।

राजा। अपिच देऽस्मै यावन्तो गौडाः समायाताः सन्ति तेषामपि यथा स्वाच्छन्द्येन भगवद्दर्शनं भवति तथा च विधेयम्।

उभौ। यथाऽऽज्ञा देवस्य। इति निष्क्रान्तौ।

राजा। भट्टाचार्य्य! उपसृत्य विलोकयेदमन्योन्यप्रलापकौतूहलम्। सति तादृशेऽधिकारे मयेव तादृशपरमानन्दभोगादञ्चितेन कथं भवितव्यम्। अहमपि भविष्यद्रथविजयकार्य्याकार्य्यपरिकलनायावहितो (भ) भवामि। इति निष्क्रान्तः।

सार्व। ममाभीष्टमेव नरपतिरादिष्टवान्। तदधुना

(भ) सतीति। तादृशे अधिकारे भगवद्दर्शनाधिकारे सति तवेति शेषः। वञ्चितेन त्वयेति शेषः। भविष्यदिति भविष्यतः भाविनः रथविजयस्य रथयात्रायाः कार्य्याकार्य्ययोः परिकलनाय पर्य्यालोचनाय

तथैव करोमि । इति गोपीनाथाचार्य्येण कतिचित्पदानि गत्वा । अहो ! पुरतः ।

आनन्दहुङ्कारगभीरघोषो हर्षानिलोल्लासिततारङ्गवोर्म्मिः ।
लावण्यवाही हरिभक्तिसिन्धुरलः स्थिरं सिन्धुमधः करोति॥(ञ

तदुपसर्पाव । इत्युपसर्पतः ।

ततः प्रविशन्ति भक्तप्रकाराः सर्वे अद्वैतप्रमुखाः ।

अद्वै । पुरोऽवलोक्य । दामोदर! पुनर्मालान्तरं गृहीत्वा कोऽयमायाति ।

दामो । अयं भगवत्पार्श्ववर्त्ती गोविन्दः । प्रविश्य सत्वरं गोविन्दो मालामर्पयति ।

अद्वै । सादरं गृह्णाति ।

दामो । इदमिदं काशीमिश्राश्रमपदं (ट) तत् । अद्वैतादयः प्रवेशं नाटयन्ति ।

सर्वे । अहो ! आश्चर्य्यम् ।

युगान्तेऽन्तःकुक्षेरिव परिसरे पल्लवलघो-
रमी सर्वे ब्रह्माण्डकसमुदयादेव वपुषः ।

---

(ञ) आनन्देति । आनन्दहुङ्कार एव गम्भीरघोषः गम्भीरध्वनिर्यस्य तादृशः हर्ष एव अनिलः वायुः तेन उल्लासितानि ताण्डवान्येव नृत्यान्येव ऊर्मयः यस्य तथाविधः लावण्यवाही गौराङ्गप्रभारूपलवणजलवाही यत्रः अतुलः हरिभक्तिसिन्धुः भगवद्भक्तिसागरः स्थिरं निश्चलं सिन्धुं समुद्रम् अधःकरोति तिरस्करोति । उपजातिवृत्तम् ।

(ट) काशीमिश्राश्रमपदं काशीमिश्रस्य निकेतनम् ।

(ठ) युगान्ते इति । युगान्ते कल्पान्तसङ्कटे देवपुषः भगवच्छरी-

यथास्थानं लब्ध्वाऽवसरमिह माति स्म शतशः
सहस्रं लोकानां बत ! लघुनि मिश्राश्रमपदे ॥

पुरोऽवलोक्य। अये ! अयमसौ। (ठ)

अद्वैतेन्दोरुदयजनितोल्लाससीमातिशायी
श्रीचैतन्यामृतजलनिधीरिङ्गतीवोत्तरङ्गः।
पूर्णानन्दोऽप्ययमविकृतः शश्वदुच्चैरखण्डः
खण्डानन्दैरपि कथमहो ! भूयसीं पुष्टिमेति ॥ (ड)

ततः प्रविशति यथानिर्दिष्टः श्रीचैतन्यः पुरीश्वरस्वरूपादयश्च।

श्रीचै। उपसृत्य नित्यानन्दं प्रणम्याद्वैतं परिष्वजते।

अद्वै। प्रतिपरिष्वजते।

सार्व। निरूप्य।

प्रेमारण्यकरीन्द्रयोरिव मिथः प्रेम्णा मदोल्लासयो-
रन्योन्यं करघट्टनापटलयोस्तारस्वरं गर्ज्जतोः।

रस्य मनुष्यस्य पल्लवस्येव क्षुद्रस्य अन्तःकुक्षेः जठराभ्यन्तरस्य परिसरे अमी सर्वे ब्रह्माण्डकसमुदयाः यथास्थानं शतशः शतं शतम् अवसरं लब्ध्वेव लोकानां सहस्रम् इह लघुनि क्षुद्रे मिश्राश्रमपदे माति स्म बतेति विस्मयसूचकमव्ययम्। शिखरिणीवृत्तम्।

(ड) अद्वैतेन्दोरिति। श्रीचैतन्य एव अमृतजलनिधिः रससिन्धुः अद्वैत एव इन्दुश्चन्द्रः तस्य उदयजनितः उपस्थितिजनितः य उल्लासः तस्य सीमामतिशेते इति तथाभूतः अतएव उत्तरङ्ग इव उद्वेल इव रिङ्गति प्रवर्द्धते। अयम् अविकृतः विकाररहितः शश्वत् नित्यः उच्चैर्महान् अखण्डः समग्रोऽपि पूर्णानन्दः श्रीचैतन्यः खण्डानन्दैरपि हेतुभिः स्वभक्तसमागमजनितैरिति भावः कथं भूयसीं महतीं पुष्टिं वृद्धिम् एति प्राप्नोति, अहो ! आश्चर्यं पूर्णपोषणमिति भावः। मन्दाक्रान्तावृत्तम्।

(ढ) प्रेमेति। प्रेम एव अरण्यं वनं तस्य करीन्द्रयोरिव महा-

अन्योन्यं गलदश्रुदानपयसा संसिक्तयोरेतयो-
रन्योन्यं परिरम्भ एष जयतादद्वैतचैतन्ययोः ॥ (ढ)

सर्वे। इतस्ततो भुवि दण्डवन्नमन्ति।

भगवान्। सर्वानेवालिङ्गनसम्भाषणदर्शनादिभिरनुगृह्णाति।

अद्वै। अदृष्टपूर्वान् परिचाययति।

श्रीचै। अदृष्टपूर्वानपि तान् स्वयमेव नामग्राहं सम्बोधयति।

गोपी। अहो! अतिचित्रम्।

क्षेमं ते? राघव! ननु शिवं? वासुदेव! प्रियं ते?
हंहो नारायण! ननु शिवानन्द! कल्याणमास्से?।
भव्यं? हे शङ्कर! नु कमलानन्दकाशीश्वरौ! वां
भद्रं? श्रीकान्त! तव कुशलं स्वस्ति नारायणस्य ॥ (ण)

अपिच, इति प्रियोक्त्या मधुराद्र्या शनै-
रदृष्टपूर्वानपि दृष्टवत् प्रभुः।

---

गजयोरिव प्रेमणा मिथः अन्योन्यं मदोत्सिक्तयोः हर्षोन्मत्तयोः अन्यत्र मदोद्धतयोः, अन्योन्यं करघट्टनायां करघर्षणे पटुतयोः तरवयोः तारस्वरम् अत्युच्चैः गर्जतोः अन्योन्यं गलत् स्रवत् अश्रु एव दानपयः मदजलं तेन संसिक्तयोः स्ववद्वाष्पयोरित्यर्थः एतयोः अद्वैतचैतन्ययोः एषः अन्योन्यं परस्परं परिरम्भः आलिङ्गनं जयतात् सर्वोत्कर्षेण वर्त्तताम्। शार्दूलविक्रीडितं वृत्तम्।

(ण) क्षेममिति। हे राघव! ते तव क्षेमं कुशलम्? ननु भो वासुदेव! ते शिवं मङ्गलम्? हंहो नारायण! ते तव प्रियम्? ननु शिवानन्द! त्वं कल्याणं यथा तथा आस्से तिष्ठसि? हे शङ्कर! ते भव्यं कल्याणम्? नु भो कमलानन्दकाशीश्वरौ! वां युवयोः भद्रम्? हे श्रीकान्त! तव कुशलं नारायणस्य स्वस्ति। मन्दाक्रान्ता-वृत्तम्।

(त) इतीति। एष प्रभुः इति इत्थं मधुराद्र्या प्रियोक्त्या

सम्बोधयत्येष किमीशताऽथवा
प्रेमैव वा प्राक्तन एष सर्ववित्॥ (त)

शौच। अद्यायं मे समजनि महानुत्सवः श्वः परश्वो
वान्यो नीलाचलशशधरस्योत्सवो गुण्डिचाख्यः।
तुल्यो यद्यप्यहह! हृदयानन्दनिस्यन्दहेतू
यत्राद्वैतप्रकटनमसावुत्सवो मे प्रमोदी॥ (थ)

इति प्रत्येकमद्वैतादीन् भगवज्जगन्नाथप्रसादमालाचन्दनाभ्यां भूषयित्वा श्रीहस्तेन प्रसादान्नं किञ्चित् किञ्चिद्ददाति।

सार्व। न मयेदानीमुपसर्त्तव्यम्। मामवलोक्य रसान्तरं (द) भवितुमर्हति। गतप्रायमेवैतद्दिनद्वयं यात्रायाः सामग्रीसमवधानाय राज्ञा नियुक्तोऽस्मि। तदधुना तत्रैव

प्रियवचनेन अदृष्टपूर्वानपि जनान् दृष्टवत् दृष्टानिव शनैः क्रमेण सम्बोधयति सम्भाषते, ईशता ईश्वरत्वं किम्? प्राक्तनः पूर्वजन्मोपार्जितः प्रेमा एव वा, अथवा एष श्रीचैतन्यः सर्ववित् सर्वज्ञः। नास्य परिचयापरिचयवश्यतेति भावः। वंशस्थविलं वृत्तम्। अत्रोत्तरार्द्धीयांशस्य हेतुत्वेन निर्देशात् काव्यलिङ्गमलङ्कारः। तदुक्तं दर्पणे, हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति।

(थ) अद्येति। अद्य मे अयं महान् उत्सवः समजनि संजातः, श्वः परश्वो वा नीलाचलशशधरस्य श्रीजगन्नाथस्य अन्यो गुण्डिचाख्यः गुण्डिचानामा महोत्सवः भावीति शेषः यद्यपि एतौ महोत्सवौ तुल्यौ हृदयानन्दनिस्यन्दहेतू मनसः आनन्दप्रदानकारणे, अहह! इति हर्षातिशयसूचकमव्ययम्। तथापि यत्र अद्वैतस्य अद्वैताचार्यस्य अद्वितीयस्य श्रीजगन्नाथस्य च प्रकटनं प्रकाशः असौ उत्सवः मे मम प्रमोदी प्रकृष्टानन्दप्रद इत्यर्थः। मन्दाक्रान्तावृत्तम्।

(द) रसान्तरं भावान्तरम्।

गच्छामि । आचार्य्य ! त्वमत्रैव तिष्ठ । इति निष्क्रान्तः ।

गोपी । उपसृत्य । जयति जयति महाप्रभुः ।

श्रीचै । कथमाचार्य्योऽसि एहि प्रणमाद्वैतम् ।

गोपी । तथा करोति ।

अद्वै । आलिङ्ग्य । जानामि भवन्तं विशारदस्य जामातरम् ।

श्रीचै । स्वत एव महत्तरोऽयम् ।

आचा । वाणीनाथेन सह युक्त्या सर्वेषामवस्थानं कल्प्यताम् ।

गोपी । यथाऽऽज्ञापयति भगवान् । इति निष्क्रान्तः ।

श्रीचै । वासुदेव ! यद्यपि मुकुन्दो मे प्राक्सहचरस्तथाऽपि त्वमद्य दृष्टोऽपि अतिप्राक्प्रियतमोऽसि । (ध)

वासु । सदैन्यम् । भगवन् ! क्वाहं वराको मुकुन्दस्तु तवानुगृहीत एव चिरं तेन ईश्वरानुग्रहकालस्य प्राग् जन्मतया (न) कनीयानप्यसौ मम ज्यायानेव ।

श्रीचै । शिवानन्द ! त्वमप्यतीव मय्यनुरक्तोऽसीति जानामि ।

शिवा । निमज्जतोऽनन्तभवार्णवान्त-

श्चिराय मे कूलमिवासि लब्धः ।

---

(ध) अतिप्राक् पूर्वातिशायीत्यर्थः ।

(न) ईश्वरानुग्रहकालस्य प्राग्जन्मतया पूर्वमस्मिन् ईश्वरानुग्रहस्य जातत्वादित्यर्थः ।

(प) निमज्जत इति । अनन्तभवार्णवस्य अन्तः अभ्यन्तरे निम-

त्वयाऽपि लब्धं भगवन्निदानी-
मनुत्तमं पात्रमिदं दयायाः ॥ (प)

इति भूमौ निपतति।

श्रीचै। राघव! त्वमतिप्रेमपात्रमसि मे।

राघ। अनुत्तरेणैव प्रत्युत्तरयन् प्रणिपतति।

श्रीचै। स्वरूप! यद्यप्ययं शङ्करो दामोदरानुजस्तथाऽपि मे। इत्यर्द्धोक्ते दामोदरं निरीक्षते।

दामो। नाथ! ममेदमतिसौभाग्यमेतत्। अयं समाप्यतां वाक्शेषः।

श्रीचै। दामोदरे सादरः स्नेहः। अत्र तु निरवकरं (फ) प्रेम। तदयमत्रैव भवत्समीपे तिष्ठतु। गोविन्द! त्वयाप्यानुकूल्यं विधेयम्।

उभौ। यथाऽऽज्ञापयति देवः।

प्रविश्य सत्वरम् गोपीनाथः। स्वामिन्! यथाऽऽज्ञमेव सर्वं सुसम्पादितं विशेषतो गदाधरस्य यमेश्वरस्य समीपे समीचीनमेव स्थलं सार्वकामिकं (ब) जातमस्ति।

श्रीचै। अद्वैत! अयं द्वितीयो मुनीन्द्र इव पुरीश्वरः। यः किल तव गुरोः प्रियशिष्यः। तदेनं प्रणम।

---

(प) अतः निपततः मे चिराय कूलमिव लब्धोऽसि, हे भगवन्! त्वयापि इदानीम् अनुत्तमम् अत्युत्कृष्टं दयाया इदं पात्रं मद्रूपमिति भावः प्राप्तं तत्त्वतो दयापात्रमहं भगवतो दयामभिकामये इति भावः। उपेन्द्रवज्राछन्दः। उपेन्द्रवज्रा प्रथमाक्षरे लघाविति तल्लक्षणात्।

(फ) अत्र तु शङ्करे। निरवकरं निर्मलम्।

(ब) समीचीनं सर्वोत्कृष्टम्। सार्वकामिकं सर्वसुखदमित्यर्थः।

अद्वै । तथा करोति । सर्वे तथैव प्रणमन्ति ।

श्रीचै । आचार्य्याद्वैत प्रेममयं स्वरूपः । स्व' रूपमस्यास्तीति निरुक्ते(भ)रविकृत एवायं मम हृदयमेवायमिति जानीयाः ।

अद्वै । एवमेव । इति प्रणमति । सर्वे प्रणमन्ति ।

गोपी । भगवन्नाज्ञाप्यताममीषां विश्रामाय ।

श्रीचै । आचार्य्य ! स्वयमेवोच्यतां याहीति मया कथं वक्तव्यम् ।

अद्वैतादयः । इङ्गितं बुद्धा निष्क्रान्ताः ।

श्रीचै । स्वामिन् ! पुरीश्वर ! प्रणयिन् स्वरूप ! अद्याहं पूर्णोऽस्मि ।

स्वरू । स्वामिन् ! ।

ईश्वरः स्वेन पूर्णोऽपि पार्षदैरेव पूर्य्यते ।
पूर्णोऽपि रजनीनाथो रिक्त एवांशुभिर्विना ॥ (म)

तदागच्छन्तु सायाह्नो जातः भवन्तमन्तरेण पुरीश्वरोऽप्यकृतभिक्ष एव ।

श्रीचै । एवमेव । इति निष्क्रान्ताः ।

नेपथ्ये । यतश्रुतिरपि श्रुतिहीनः सहस्रनयनोऽपि परमान्धः ।
नीलगिरीन्द्रस्यन्दनयात्रासन्दर्शनौत्सुक्यात् ॥ (य)

---

(भ) निरुक्तेः व्युत्पत्तेः ।

(म) ईश्वर इति । ईश्वरः भगवान् स्वेन आत्मना पूर्णोऽपि पार्षदैः पार्श्वचरैरेव पूर्य्यते पूर्णतां आपद्यते । पूर्णः सम्पूर्णकलोऽपि रजनीनाथः चन्द्रः अंशुभिर्विना रिक्तः शून्य एव ।

(य) यतश्रुतिरिति । नीलगिरीन्द्रः जगन्नाथस्य स्यन्दनयात्रायाः

गोपी। आकर्ण्य। अहो! मुहूर्त्तमिव (र) गतं दिन-द्वयम्। यदयं रथयात्राप्रसङ्गो भट्टाचार्य्येण प्रस्तूयते तन्नि-भालयामि। इति कियद्दूरं गत्वा। अहो चित्रम्!।

मूर्त्तास्त्रय इव वेदाः शम्भोस्त्रीणीव नयनानि।
तिस्र इवामरसरितो धाराः पुरतो रथत्रयी स्फुरति॥ (ल)

पुनर्नेपथ्ये।

आयातोऽद्य रथोत्सवस्य दिवसो देवस्य नीलाचला-
धीशस्याद्य पुरो नटिष्यति निजानन्देन गौरो हरिः।
विश्रान्तिं नटनावसानसमये कर्त्ताद्य जातीवने
हन्ताद्यैव मनोरथः सफलतां यास्यत्ययं मादृशः॥ (व)

गोपी। अहो! गजपतेर्महाराजस्यालाप इव श्रूयते तदवधातव्यमवश्यमिदम्। इति निरूप्य। सत्यमेवायं भट्टा-

रथयात्राया दर्शने यदौत्कण्ठ्यं औत्सुक्यं तस्मात् गतधृतिः अन्नापि धृतिहीनः धैर्य्यच्युतः तथा सहस्रनयनः इन्द्रोऽपि परमान्धः दिग्-विदिग्ज्ञानशून्य इत्यर्थः। आर्य्यावृत्तम्।

(र) मुहूर्त्तमिव अल्पसमय इव।

(ल) मूर्त्ता इति। मूर्त्ताः मूर्त्तिमन्तः त्रयो वेदाः ऋग्यजुःसामाख्या इव, शम्भोः त्रीणि नयनानीव, अमरसरितः तिस्रः धारा इव पुरतः अग्रतः रथत्रयी त्रयो रथाः स्फुरति राजते।

(व) आयात इति। अद्य देवस्य नीलाचलाधीशस्य जगन्नाथस्य रथोत्सवस्य दिवसः आयातः उपस्थितः। अद्य गौरो हरिः श्रीचै-तन्यः पुरः जगन्नाथस्येति शेषः निजानन्देन नटिष्यति नर्त्तिष्यति। अद्य नटनावसानसमये नृत्यावसाने विश्रान्तिं विश्रामं कर्त्ता करिष्यति च, हन्त हर्षे अद्यैव मादृशः मदीय इत्यर्थः अयं मनोरथः कामः सफलतां साफल्यं यास्यति प्राप्स्यति। शार्दूलविक्रीडितं वृत्तम्।

चार्य्यैश्च सह सङ्कथयन्नुत्कण्ठते महाराजः। पश्यामि को विलम्बो जगन्नाथरथारोहणस्य। इति पश्यति। नेपथ्ये कोलाहलादिनिर्घोषः।

गोपी। निरूप्य। अहो!।

हृदयमिव महः समाधिभाजा-
मुदयगिरेरिव शीर्षमुष्णरश्मिः।
अयमखिलदृशां रसायनश्री-
रथमधिरोहति नीलशैलनाथः॥ (थ)

पुनर्निरूप्य।

अद्वैताद्यैरखिलसुहृदां मण्डलैर्मण्ड्यमानो
गायद्भिस्तैः कतिभिरपरैः श्रीस्वरूपप्रधानैः।
श्रीमद्वक्रेश्वरमुखसुखाविष्टभूयिष्ठबन्धुः
सिन्धुः प्रेम्णामयमिह नरीनर्त्ति गौरो यतीन्द्रः॥ (द)

नेपथ्ये कलकलः।

गोपी। सहर्षम्।

---

(थ) हृदयमिति। महः परमानन्दः ऐश्वरं तेजो वा समाधिभाजां योगिनां हृदयमिव, उष्णरश्मिः सूर्य्यः उदयगिरेः शीर्षं शिखरमिव अखिलदृशां जगन्नेत्राणां रसायनश्रीः आसेचनक इत्यर्थः अयं नीलशैलनाथः जगन्नाथः रथम् अधिरोहति। पुष्पिताग्रावृत्तम्।

(द) अद्वैताद्यैरिति। अद्वैताद्यैः अद्वैतप्रमुखैः अखिलसुहृदां समस्तबन्धूनां मण्डलैः गायद्भिः गानं कुर्वद्भिः तैः अपरैः श्रीस्वरूपः प्रधानो येषां तैः कतिभिः कतिपयैः सहचरैश्च मण्ड्यमानः अलङ्क्रियमाणः तथा श्रीमन्तः वक्रेश्वरमुखाः वक्रेश्वरप्रभृतयः सुखाविष्टाः

गौड़ाख्यैरथ कर्षिभिर्जनचयैरादाय वामे करे
हेलोल्लासितपीनरज्जुपटली सङ्कर्षणव्याजतः।
स्थायं स्थायमहो क्वचिद्द्रुततरं धावत्यमन्दं क्वचि-
द्धावं धावमहो स्थितः स्थिरतरं स्वेच्छावशः स्यन्दनः॥(स)

पुनर्नेपथ्ये सङ्कीर्त्तनकोलाहलः।

गोपी। आलोक्य सकौतुकम्।

प्रचलति जगन्नाथे गौरोऽपसर्पति सम्मुखात्
स्थितवति जगन्नाथे गौरः प्रसर्पति तत्पुरः।
अतिकुतुकिनावेवं देवौ परस्परमुत्सुकौ
कलयत इव क्रीड़ां नीलाचलेन्द्रमुनीश्वरौ॥(ह)

आनन्दमग्ना भूयिष्ठाः बन्धवः यस्य तथाभूतः प्रेमृणां सिन्धुः अयं गौरो यतीन्द्रः नरीनर्त्ति पुनःपुनरतिशयेन नृत्यति।

(स) गौड़ाख्यैरिति। अथ अनन्तरं गौड़ाख्यैः गौड़नामकैः कर्षिभिर्जनचयैः कर्षीबलैरित्यर्थः वामकरे आदाय गृहीत्वा हेलया अनायासेन उल्लासिता उत्थापिता पीना या रज्जुपटली रज्जुसमूहः तस्याः सङ्कर्षणमेव व्याजः तस्मात् स्वेच्छावशः स्वाधीनः स्यन्दनः क्वचित् स्थायं स्थायं स्थित्वा स्थित्वा द्रुतं क्वचित् अमन्दं मध्यविधं यथा तथा धावति, क्वचिच्च धावं धावं धावित्वा धावित्वा स्थिरतरं दृढं यथा तथा स्थितः। अहो इयमाश्चर्य्यद्योतकमव्ययम्। शार्दूलविक्रीड़ितं वृत्तम्।

(ह) प्रचलतीति। जगन्नाथे प्रचलति सति गौरः श्रीचैतन्यः सम्मुखात् अपसर्पति अपसरति, जगन्नाथे स्थितवति सति गौरः तत्पुरः तस्याग्रतः प्रसर्पति तिष्ठति। एवम् अतिकुतुकिनौ अतिकौतूहलाविष्टौ नीलाचलेन्द्रमुनीश्वरौ जगन्नाथगौरचन्द्रौ देवौ परस्परं अन्योन्यम् उत्सुकौ सन्तौ क्रीड़ां कलयत कुरुत इव। हरिणीवृत्तम्।

पुनर्निभाल्य । अहो ! ।

स्थितवति बलगण्डीमण्डपस्योपकण्ठं
भगवति जगदीशे शान्तकृत्यो यतीन्द्रः ।
उपवनमनुगच्छन् पार्षदैः प्रेमवद्भिः
सह जयति नितान्तश्रान्तितो विश्रमाय ॥ (घ)

तदधुना नरपतिनाऽपि गूढ़वेषेण तत्राभिसर्त्तव्यमिति भट्टाचार्य्यस्येङ्गितेन ज्ञातमस्ति तदहमपि सत्वरमुपसर्पामि । इत्युपसर्पति ।

ततः प्रविशति महत्यानन्दानुभवनिस्पन्दो निमीलितनयनो नयनाभिराम उपवनमण्डपमध्यास्य प्रसार्य्यमाणलोलचरणकमलनालदण्डयुगलो गलल्लोचनजलधौतवक्षाः साक्षादिव प्रेमानन्दः श्रीकृष्णचैतन्यः प्रतितरुमूलमेकैकमुपविष्टास्तूष्णीकाः (ङ) पार्षदाश्च ।

भगवान् । अथात आनन्ददुघं पदाम्बुजं
हंसाः श्रयेरन्नरविन्दलोचन ! । (च)

---

(घ) स्थितवतीति । भगवति जगदीशे बलगण्डीमण्डपस्य पुष्टिकाचटकस्य उपकण्ठम् अन्तिकं स्थितवति सति यतीन्द्रो गौरः शान्तकृत्यः सन् प्रेमवद्भिः प्रेमिकैः पार्षदैः सहचरैः सह नितान्तश्रान्तितः अतिनटनश्रमात् हेतोः विश्रमाय शान्तिलाभाय उपवनम् अनुगच्छन् चलन् जयति विराजते इति भावः

(ङ) नयनाभिरामः सुदर्शन इत्यर्थः । प्रसार्य्यमाणेति प्रसार्य्यमाणं लोलत् चरण एव कमलनालदण्डयुगलं यस्य तथाभूतः । गलदिति गलद्भिर्निष्पतद्भिः लोचनजलैः वाष्पैः धौतं क्षालितं वक्षो यस्य तथाभूतः । तूष्णीकाः मौनावलम्बिनः ।

(च) अथेति । अथ अत इति पदद्वयं निम्ने व्याख्यातम् । हे अरविन्दलोचन ! पद्मनेत्र ! हंसाः सारासारविवेकिन इति यावत्

इति श्लोकार्द्धमेव भूयो भूयः प्रमीलितनयन एव पठति।

गोपी। आलोक्य। अहो! प्रेमानन्दास्वादमहिमा देवस्य। अनुभूतस्य नृत्यकालीनभगवत्कृष्णसाक्षात्कारानन्दस्य ब्रह्मानन्दतोऽपि चमत्कारकारणत्वं चर्वणयास्वादयति। अयेति उच्चावचशास्त्रसकलप्रतिपाद्यावबोधपरिसमाप्तौ अत इति ब्रह्मानन्दादपि चमत्कारकारकत्वात्। हंसाः सारासारविवेचकचतुराः पादाम्बुजं श्रयेरन्। कुतः आनन्ददुघमिति स्वानुभूतानन्दमाहात्म्यसूचनमिदम्। परितोऽवलोक्य। अहो इत एव सर्वे परमभागवताः। तथाहि

निःस्पन्दमुज्ज्वलरुचः सुशिखाः सुपूर्ण-
स्नेहास्तमःक्षयकृतः प्रतिशाखिमूलम्।
आभान्ति शोभनदशास्त इमे महान्तो
निर्वातमङ्गलमहोत्सवदीपकल्पाः॥ (ग)

---

आनन्ददुघम् आनन्दवर्षि पदाम्बुजं पादपद्मं ते इति शेषः। श्रयेरन् आश्रयेयुः। परमभागवताः परमभगवद्भक्ताः।

(ग) निःस्पन्दमिति। निःस्पन्दं यथा तथा उज्ज्वला रुक् प्रभा येषां तथोक्ताः उभयत्र समानम्। सुष्ठु शिखा चूडा अन्यत्र अग्रभागो येषां तथाविधाः सुपूर्णः प्रचुर इत्यर्थः स्नेहः प्रेम तैलं वा येषां तथाभूताः। तमसां मोहानां तिमिराणां वा क्षयं कुर्वन्तीति तथोक्ताः। शोभना दशा अवस्था वर्त्तिर्वा येषां तादृशाः ते इमे महान्तः प्रतिशाखिमूलं प्रतितरुमूलं निर्वाताः वायुशून्याः मङ्गलमहोत्सवस्य दीपकल्पा दीपसदृशाः आभान्ति शोभन्ते। वसन्ततिलकं वृत्तम्।

भवतु यत्रैव क्वापि निभृतमुपविश्य राज्ञः प्रवेशं प्रतिपालयामि । इति तथा करोति ।

ततः प्रविशति त्यक्तराजवेशः परिहितधौतवसनयुगलो राजा ।

राजा । सोत्कण्ठम् ।

उत्कण्ठा भयतर्कयोर्बलवतोराच्छादनं कुर्वती
मामुच्चैस्तरलीकरोति चरणौ हा धिक्! कथं स्तम्भुतः ।
हंहो देव! परीक्षयाद्य भवतः प्रायः परीक्षा मम
प्राणानामपि भाविनी नहि मम प्राणेषु कोऽपि ग्रहः ॥(च)

इति शनैः शनैः परिक्रामति ।

गोपी । राजानं निर्वर्ण्य । अहो! चित्रम् ।

प्रभावमात्रैकनृदेवचिह्नो
वीरो रसः सुप्त इवायमग्रे ॥
आनन्दशङ्काभयतर्कमिश्रः
क्रमेण विन्यस्यति पादपद्मम् ॥ (छ)

(च) उत्कण्ठेति । बलवतोः भयतर्कयोः आच्छादनं कुर्वती उत्कण्ठा देवदर्शनौत्सुक्यं माम् उच्चैरतिशयेन तरलीकरोति चपलयति अधीरयति, हा धिक् कथं चरणौ मे इति शेषः स्तम्भुतः स्तम्भीभवतः हंहो देव! अद्य भवतः परीक्षया प्रायः बाहुल्येन मम प्राणानामपि परीक्षा भाविनी भविष्यतीत्यर्थः मम प्राणेषु न हि कोऽपि ग्रहः आदरः । भवद्दर्शनं विना प्राणान् न धारयिष्यामीति भावः ।

(छ) प्रभावेति । प्रभावमात्रमेव नृदेवचिह्नं राजचिह्नं यस्य तादृशः राजवेशविरहित इति भावः । निद्रितो वीरो रस इव अयं राजा इति शेषः आनन्देन शङ्कया भयेन तर्केण च मिश्रः संवलितः

परितः सर्वे आत्मगतम्। अहो ! मङ्कुलसूत्रमुद्रितकरोऽयं राजा प्रतापरुद्रः कथमयं गृहीतपलितविप्रवेषोऽकस्मादुपसर्पति स्वामिना(च)मुद्वेगो भावी। तदवलोकयाम किमयं करोति इति।

राजा शनैरितस्ततोऽवलोकयन् सङ्कसैवोपसृत्य दीर्घायमाणं भगवच्चरणकमलयुगं परिवदीर्घाभ्यां दोर्भ्यां दृढ़तरमालिङ्गति।

सर्वे। आलोक्य। अहो ! महानयमनर्थः (छ)। निमीलनयनकमलेन स्वानन्दावेशविवशेन भगवताऽयमलक्षित एव। यद्भगवच्चरणौ दधार तदस्य न विघ्नः किं भावि।

भगवान्। स्वानन्दस्थ एव निमीलिताक्ष एवानिभालनेनैव (ज) गाढ़ं परिष्वज्य।

को नु राजन्निन्द्रियवान् मुकुन्दचरणाम्बुजम्।
न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः॥ (झ)

मनु अपि पुरतः लक्ष्येण कष्टेन पादपद्मं विमुञ्चति निक्षिपति।
उपजातिवृत्तम्।

(च) मङ्कुलेति। मङ्कुलेन सूत्रेण डोरेण मुद्रितः चिह्नितः करो यस्य तथाभूतः। स्वामिनां भगवतां श्रीचैतन्यानां गौरवातिशयद्योतकं बहुवचनम्।

(छ) अनर्थः अनिष्टापातः।

(ज) अनिभालनेन अदर्शनेन।

(झ) क इति। राजन्निति कस्मात् कस्यापि सम्बोधनोक्तिर्वा राजन् विराजन् जीवन्नित्यर्थः क इत्यस्य विशेषणमेतत्। इन्द्रियवान् सहृदय इत्यर्थः सर्वतः सर्वप्रकारेण मृत्युर्यस्य सः अवश्यमरणधर्मा इत्यर्थः को जनः अमरोत्तमैः देववरैर्ब्रह्मादिभिरुपास्यम् आराध्यं मुकुन्दचरणाम्बुजं न भजेत् ? सर्व एव भजेदित्यर्थः।

इति पुनः पुनः पठति ।

गोपी । अहो ! कौतुकम् ।

साहसं क्व च गुणाय कल्पते
क्वापि दूषणतया च सिध्यति ।
साहसेन यदकारि भूभुजा
तत्तपोभिरखिलैर्न माऽऽप्यते ॥ (ञ)

पुनर्निभाल्य ।

महामल्लैर्यस्य प्रकटभुजवक्षःस्थलतटी-
विनिष्पेषोद्भ्रान्तास्थिभिरिव विदध्रे विकलता ।
स एवायं मायाकरिवरकराक्रान्तकदली-
तरुस्तम्भाकारो भवति भगवद्बाहुदलितः ॥ (ट)

नेपथ्ये कलकलः ।

(ञ) साहसमिति । साहसं सहसाकारित्वं क्व कुत्रापि गुणाय कल्पते उपकरोतीत्यर्थः क्वापि च दूषणतया सिध्यति दोषो भवतीत्यर्थः । भूभुजा राज्ञा प्रतापरुद्रेणेति शेषः साहसेन यत् अकारि कृतम्, अखिलैः समग्रैः तपोभिश्चान्द्रायणादिभिरपि तत् न आप्यते न लभ्यते । उच्छ्रताहल राज्ञरैर्नरस्तगैरयोक्ततेति तल्लक्षणात् ।

(ट) महामल्लैरिति । महामल्लैः महावीरैः यस्य प्रतापरुद्रस्य प्रकटया स्फुटया भुजवक्षःस्थलतट्या बाहुवक्षःप्रदेशेन यः विनिष्पेषः विशेषेण निपोड़नं तेन उद्भ्रान्तानि अस्थीनि येषां तथाभूतैरिव विकलता व्याकुलत्वं विदध्रे विहिता, स एव अयं राजा भगवतः श्रीचैतन्यस्य बाहुभ्यां दलितः गाढ़मालिङ्गित इति भावः सन् मायया मत्तेन करिवरेण गजेन्द्रेण करेण शुण्डेन आक्रान्तः यः कदलीतरुस्तम्भः तस्य आकार इव आकारो यस्य तथाभूतः भवति । शिखरिणीवृत्तम् ।

भगवान् । राजानं परिष्वज्य तत्कलकलाकलितरथप्रस्थान-त्वरः (ठ) पुनर्जगन्नाथदिदृक्षया तथाविधसानन्दस्त एव निष्क्रामति ।

सर्वे । यथायथं तमनु निष्क्रामन्ति ।

गोपो । उपसृत्य । महाराज ! जगन्नाथदर्शनार्थं गतो देवः । सम्प्रति भवन्तोऽपि चलितुमर्हन्ति । इत्यानन्दतन्द्रितं राजानमादाय निष्क्रान्तः । इति निष्क्रान्ताः सर्वे ।

प्रतापरुद्रानुग्रहो नामाष्टमोऽङ्कः ।

# अथ नवमोऽङ्कः ।

ततः प्रविशति किन्नरमिथुनम् ।

पुरुषः । प्रिये ! गतागतेभ्योऽपि संवत्सरेभ्यः खलु जगन्नाथस्य गुण्डिचोत्सवः (क) परमरमणीयो दृष्टः ।

स्त्री । कथंविय (१) ।

(१) कथमिव ।

(ठ) तदिति । तेषां रथयात्रिकाणामिति भावः कलकलेन कोलाहलेन आकलितम् अनुमितं यत् रथस्य प्रस्थानं तत्र त्वरः त्वरावान् तद्दर्शनोत्सुक इति भावः ।

(ड) आनन्दतन्द्रितम् आनन्दालसम् ।

(क) गतागतेभ्य इति । गतागतेभ्यः पूर्वपूर्वेभ्य इत्यर्थः । गुण्डिचोत्सवः रथयात्रामहोत्सवः ।

पुरु। अस्मिन्नब्दे तु मूर्त्तिमतानन्देनैव कनकगिरि-गौरेण यतीन्द्रवेषधारिणा भक्तावतारेण श्रीकृष्णचैतन्येन महोत्सवोऽयं (ख) सुरसत्वेन परमरमणीयो विहितः।

स्त्री। हद्धी ! हद्धी ! अहं कधं सङ्गे ण णीदा। मए दट्ठुं ण पारिदं (१)।

पुरु। प्रिये ! आगामिन्यब्दे दर्शनीयो भवत्या।

स्त्री। आआमिणि अब्दे जइ एव्वं होइ (२)

पुरु। इतः प्रभृति तेनात्रैव (ग) स्थातव्यम्।

स्त्री। एत्थ को णिअमो (३)। (घ)

पुरु। जानामि तत्त्वम्।

स्त्री। कधं जाणीदं (४)।

पुरु। परस्परं कथयतां तज्जनानां तज्जनानाश्रित-चरित्रविदां (ङ) कथयैव।

(१) हा धिक् ! हा धिक् ! अहं कथं सङ्गे न नीता। मया द्रष्टुं न प्राप्तम्।

(२) आगामिनि अब्दे यदि एवं भवति।

(३) अत्र को नियमः ?

(४) कथं ज्ञातम् ?

(ख) अब्दे वर्षे। कनकगिरिगौरेण काञ्चनाचलवत् गौरमूर्त्तिना भक्तावतारेण भक्तः सन् अवतरतीति भक्तावतारः तेन स्वयं भगवतापि भगवद्भक्तत्वेनावतीर्णेनेत्यर्थः। अयं गुण्डिचोत्सवः रथयात्रोत्सवः।

(ग) तेन श्रीकृष्णचैतन्येन। अत्र जगन्नाथक्षेत्रे।

(घ) कः नियमः ? का स्थिरता ?।

(ङ) तज्जनानां तत्पार्षदानाम्। तज्जनेति तज्जनं श्रीकृष्णचैतन्य-

स्त्री । केरिसी सा कहा (१) ।

पुरु । प्रिये ! श्रूयताम् अस्य (च) त्रिविध एव लोकानुग्रहप्रकारः ।

स्त्री । केरिसो तिव्वविहो (२) ।

पुरु । एकः साक्षात्कारी । द्वितीयः परहृदयप्रवेशलक्षणः । तृतीयश्चिन्तनमात्राविर्भावरूपः ।

स्त्री । वित्थरिअ कहेहि (३) । (छ)

पुरु । ये खलु पुरुषोत्तमक्षेत्रागमनसमर्थास्तेषां साक्षात्कारी । तथा हि प्रतिसंवत्सरं सरंहसो (ज) नानादेशतः सर्वे जगन्नाथदर्शनतोऽपि तद्दर्शनबद्धोत्कण्ठा अदृष्टपूर्वा अश्रुतपूर्वाः परस्सहस्राः प्राणिन उपतिष्ठन्ति ।

स्त्री । तदो तदो (४) ।

पुरु । ततस्तेषु गौड़ीयाः प्रिया गौड़ीयानां मध्ये येऽतिप्रियाः अतश्च दृष्टवन्तस्तेऽप्यदृष्टवन्तोऽपि अभादृष्ट-

(१) कीदृशी सा कथा ?

(२) कीदृशस्त्रिविधः ।

(३) विस्तृत्य कथय ।

(४) ततस्ततः ?

---

भवं नाना विविधम् अर्च्चितं पूजितं प्रशंसितमित्यर्थः यत् चरित्रं तद्विदां तदभिज्ञानाम् ।

(च) अस्य श्रीकृष्णचैतन्यस्य ।

(छ) विस्तृत्य व्याख्याय विस्तरतः प्रकाश्येत्यर्थः ।

(ज) पुरुषोत्तमक्षेत्रेति । पुरुषोत्तमक्षेत्रे यत् आगमनं तत्र समर्थाः शक्ताः । सरंहसः सवेगाः सोत्सुका इत्यर्थः ।

वन्तो यथा ऽमी । नरहरिरघुनन्दनप्रधानाः कति च न खण्डभुवोऽप्यखण्डभाग्याः प्रथममिममदृष्टवन्त एते प्रति-शरदं पुरुषोत्तमं लभन्ते । (झ)

कुलीनग्रामीणा अपि च गुणराजान्वयभुवो
जना रामानन्दप्रभृतय इमे देवसुहृदः ।
तथान्यायाचार्य्यादय उपचितप्रेमसरसा
महाविद्वांसोऽमी प्रतिशरदमात्रोपगमिनः ॥ (ञ)

भगवन्नाम न्यायाचार्य्यस्तु पुरुषोत्तम एव भगवच्चैतन्य-दर्शनाकाङ्क्षी यावज्जीवं स्थितः । एवमेषां साक्षादनुग्रहः । आगमनासमर्थानान्तु परहृदयमारुह्यानुग्रहः (ट)

---

(झ) तेषु आगमनसमर्थेषु । गौड़ीया गौड़देशवासिनः । दृष्ट-वन्त इति दृष्टं दर्शनं विद्यते येषां ते दृष्टवन्तः द्रष्टा इत्यर्थः । अदृष्ट-वन्तः अदृष्टं विद्यते येषां तथोक्ता अपि शुभादृष्टवन्तः सौभाग्यवन्तः । कतिचनखण्डभुव इति कतिचनखण्डे कुत्रापि भूप्रदेशे भवन्तीति तथोक्ता अपि अखण्डभाग्याः समग्रभाग्यशालिनः । प्रतिशरदं प्रति-वर्षम् । पुरुषोत्तमं जगन्नाथं लभन्ते पश्यन्ति ।

(ञ) कुलीनेति । कुलीनाः कुत्सिते कर्म्मणि लीनाः ग्रामीणा ग्राम्याः अपि च गुणराजान्वयभुवः महागुणवंशसम्भूता इति विरोधः कुलीनाः महाकुलप्रसूता ग्रामीणाश्चेति तत्परिहारो बोध्यव्यः । इमे रामानन्दप्रभृतयः जनाः देवस्य श्रीकृष्णचैतन्यस्य सुहृदः मित्राणि । तथा उपचितः परिपुष्टः प्रेमरसो येषां तथाभूता महाविद्वांसः अमी न्यायाचार्य्यादयः प्रतिशरदमात्रम् उपगमिनः प्रतिवर्षमात्र जगन्नाथक्षेत्रे आगमिष्यन्तीत्यर्थः । शिखरिणीवृत्तम् ।

(ट) आगमनासमर्थानां ये [illegible] जगन्नाथे गामित्यर्थः । परहृदयम् आरुह्य आविश्य ।

क्रियते। हृदयारोहयोग्यास्तु पद्मैतनकुलब्रह्मचार्य्यादयः।

स्त्री। किम्वि (ठ) कधेहि (१)

पुरु। पद्मैतारोहवार्त्ता तु प्रथीयसी (ड) तत्कथनं बहुकालसाध्यम्। नकुलब्रह्मचारिहृदयारोहः श्रूयताम्।

स्त्री। कधेहि पवाहिदह्नि (२)।

पुरु। अस्ति कश्चित् मल्लुग्रामे परमवैष्णव आजन्म-ब्रह्मचारी नकुलो नाम। तस्यैकस्मिन् दिवसे ग्रहग्रस्तस्येव कस्यामपि दशायामुत्पन्नायां आनन्दाश्रुपुलकनिर्भरस्य दर्शनमात्रेणैव सर्वेषां हृदयकुहरे ओचैतन्यावेशोऽय-मस्य (ढ) जात इति प्रत्ययमुत्पादयत एव कतिचिद्दिना-राना गताः।

स्त्री। तदो तदो (३)।

पुरु। तदनु।

गौरत्विषा कपिशयन् ककुभः समन्ता-

दानन्दभोगपरिलोपितवाह्यवृत्तिः।

(१) किञ्चित्कथय।

(२) कथय अवहिता स्मि।

(३) ततस्ततः?

(ठ) किम्विदिति। हृदयारोहप्रकारः कीदृशस्तद्विषयं किम्विदिति भावः।

(ड) पद्मैतेति। पद्मैतस्य आरोहः हृदयप्रवेश इत्यर्थः तस्य वार्त्ता कथा प्रथीयसी अतिविस्तारिणी।

(ढ) तस्येत्यादि। तस्य नकुलस्य। ग्रहग्रस्तस्येव भूताविष्टस्येव। दशायाम् अवस्थायाम्। हृदयकुहरे हृद्गर्भे। अस्य नकुलस्य।

आबालवृद्धतरुणैरथ लक्षसङ्ख्यै-
र्लोकैरभूत् प्रणयिभिः परिपूज्यमानः ॥ ( ख

स्तो। तद्दो तद्दो ( २ )

पुरु। ततो दैवात्तस्मिन् काले तत्रागतेन भगवच्चैतन्य-पार्षदेन शिवानन्देन तमुद्दन्तमत्यन्तसन्दिह्यमानतयात्म दिदृक्षुणा मनसि कृतं ग्रहो ! किमेतस्य दर्शनेन साक्षाद्देव मया दृष्टोऽस्ति भगवान् । तदा लोकसुखसदृशं किमस्य दर्शनेन भविष्यति सुखं नैवेति निवर्त्तमानेन पुनर्मनसि कृतम् अहो ! यद्ययं सर्वलोकबहिर्वर्त्तमानं मां स्वयमेवाहूय स्वसमीपं नीत्वा मामकमिष्टमन्त्रं प्रख्यापयति तदा सत्यमेवास्य तस्यावेशो जात इति चिन्तयित्वा प्रसारिणो जनसमूहस्य बहिः स्थितवति शिवानन्दे यावदावेशं तूष्णीं स्थितोऽप्यसौ कः कोऽत्र भो ! दूरे वर्त्तमानः शिवानन्द आहूयतामिति निर्देशमात्रेण धावद्भिरेव

(२) ततस्ततः ?

(ख) गौरेति । अथ स इत्यध्याहार्य्यं गौरत्विषा काञ्चनकान्त्या समन्तात् सर्वा इत्यर्थः ककुभः दिशः कपिशयन् पिशङ्गीकुर्वन् आनन्दभोगेन आनन्दानुभवेन परिलोपिता अयं नीता बाह्यवृत्तिः बहिरिन्द्रियव्यापारः यस्य तथाभूतः तथा आबालवृद्धतरुणैः लक्षसंख्यैः बहुभिरिति भावः प्रणयिभिः अनुरागिभिः लोकैः परिपूज्यमानः अभूत् । वसन्ततिलकं वृत्तम् ।

(त) उद्दन्तं वृत्तान्तम् । एत्य आगत्य । लोकसुखसदृशम् अदृष्टभगवतां लोकानां सुखसदृशम् । सर्वलोकेति सर्वेभ्यः लोकेभ्यः बहिः वर्त्तमानं तिष्ठन्तम् । मामकं मदीयम् इष्टमन्त्रं प्रख्यापयति प्रकाशयति । तस्य

कृतिभिरितस्ततो नामग्राहं विचन्वद्भिरतिदूरे स्थितं तमा-दाय तन्निकटमाययौ। अनन्तरञ्च तेन शिवानन्द! भवता मनसि विचारितं यत् तदाकर्ण्यतां भवदीय इष्टमन्त्रचतु-रक्षरो गौरगोपालदेवताकः। इत्याकलय्य। तेन निर्णीतं सत्यैवेयं प्रथेति। (न)

स्त्री। अज्जउत्त! त्तीत्तओ केरिसो (१)।

पुरु। तृतीयस्तु चिन्तनमात्राविर्भावो यः सोऽपि श्रूय-ताम्। एकदा तस्यैव शिवानन्दस्य भागिनेयः श्रीकान्त एकक एव प्रथमं श्रीपुरुषोत्तममागत्य भगवच्चैतन्यचरणौ ददर्श। अस्मिन्नेव समये कौतुकवशात् पुरीश्वरस्वरूपादि-समक्षं भगवता किञ्चिज्जगदे जगदेकबन्धुना श्रीकान्त! अस्मिन्नब्दे अद्वैतादयो दयोत्सुरा वक्तव्यास्ते यथा नायान्ति मयैव तत्र गन्तव्यमिति। अपि च शिवानन्दोऽपि भव-न्मातुलो वक्तव्यः पौषे मासि तत्रोपसन्नेन मया भवित-व्यम्। तत्र जगदानन्दोऽस्ति तत्रैव भिक्षा कर्त्तव्येति निवृत्तेन श्रीकान्तेन भगवत्सन्देशे कथिते सति सर्वेऽद्वै-तादयस्तत्रैवमाच्छिथिलीबभूवुः। शिवानन्दस्तु भग-वदागमनमभिलिलषिषुर्भगवद्भिक्षायामिदं लगिष्यतीति

(१) आर्यपुत्र! तृतीयः कीदृशः?

---

श्रीकृष्णचैतन्यस्य। प्रचारितः विस्तारितः। तावदावेशं भगवदावेश-प्रतुलत्व इत्यर्थः। तेन नकुलेन। आकलय्य विविच्य तेन शिवा-नन्देन। प्रथा ख्यातिः।

ज्ञात्वा भगवत्प्रियत्वेन वास्तूकवास्तुकदलीगर्भशाकनिम्बा-दिसामग्रीसमवधानाय (च) स्थितवान्।

स्त्री। तदो तदो (१)।

पुरु। ततो दैवात् गोदावरीतः समायातेन रामानन्द-रायेणोपबोधितो भगवान् न गन्तुमीष्टे। (छ)

स्त्री। तदो तदो (२)

पुरु। ततोऽसौ शिवानन्दः श्रीनृसिंहानन्दब्रह्मचारीति प्रथितं परमयोगीन्द्रं साक्षान्नृसिंहमिव प्रद्युम्नब्रह्मचारि-त्वेन पूर्वख्यातावपि भगवतैव नृसिंहोपासनाविष्टत्वेन नृसिंहानन्द इति कारितसञ्ज्ञं समये समुवाच। स्वामिन्! आयास्यामीति ज्ञात्वा भगवानायातः। वास्तूकशाक(ज)-मवलोक्य ममोदुःखमेव जायते।

---

(१) ततस्ततः ?

(२) ततस्ततः ?

---

(च) कश्चिदित्यादि। कस्मिन् अब्दे वर्षे द्वयोरुराः बहवाः। उपपन्नेन उपस्थितेन। अभिविवक्षिषुः अभिवक्तुमिच्छुः। वगि-ष्यति उपयोगि भविष्यतीत्यर्थः। वास्तूकादीति तत्तद्द्रव्यसंग्रहायेत्यर्थः।

(छ) गोदावरीत इत्यादि। गोदावर्याः समायातेन आगतेन। उपबोधितः आकाङ्क्षित इत्यर्थः। ईष्टे प्रभवति शक्नोतीत्यर्थः शिवा-नन्दसमीपमिति शेषः।

(ज) प्रथितं विख्यातम्। नृसिंहमिव नरहरिमिव। पूर्व-ख्यातावपि पूर्वप्रसिद्धावपि। भगवतैव श्रीकृष्णचैतन्येनैव। वास्तूक-शाकं भगवत्प्रियार्थं संगृहीतमिति भावः।

सखो। तद्दो तद्दो (२)।

पुरु। ततस्तेनोक्तम्। मयैवानेतव्यो दिनद्वयमपेक्षतामिति तत्प्रभाववशोऽसौ तथैव स्थिते। स च नृसिंहानन्दो नृसिंहानन्दोऽपि तं समयमारभ्य समाधिस्थो दिनद्वयान्तरे शिवानन्दमाहूय प्राह! भगवच्चैतन्यो राघवालये समानीतोऽस्ति। प्रातरत्रागमिष्यति मयैव पक्तव्यं भिक्षा च दातव्येति श्रुत्वा तस्मिन्नपि तथोद्युक्ते सति स्वयमुषसि कृतस्नानः शुचितरो भूत्वा पाके प्रवृत्तः स्वेच्छापूर्वं यथेष्टमेव पेचितवान्। अनन्तरं तस्मिन्नेव समये श्रीचैतन्यस्य जगन्नाथस्य नृसिंहस्य च पृथक् त्रयो भोगा विभज्य निष्पादिताः। अनन्तरं तत्तन्नाम्ना समर्प्य वहिर्भूय निमीलितचक्षुरान्तरेण चक्षुषा पश्यति त्रीनेव भोगानेक एव भगवान् भुङ्क्ते। अनन्तरं सञ्जातमहानन्दो गलदश्रुधारः सार-वसुखैः प्रणयामर्षजाताक्षेपमिव भद्रं भो! भद्रं जगन्नाथेन सह तवैक्यमतो जगन्नाथस्य भोगो भुज्यतां नाम मम नृसिंहस्य भोगः कथं भुज्यते नृसिंहोऽद्य 'मयाऽयमुपोषित इत्युच्चैराक्रन्दन् (ग) शिवानन्देनोक्तः स्वामिन्! कथमाक्षुप्यते इति।

---

(२) ततस्ततः ?

(ग) ततस्तेनोक्तमित्यादि। तेन नृसिंहानन्देन। तत्प्रभाववशः तस्य नृसिंहानन्दस्य प्रभाववशः असौ शिवानन्दः। अवधे विश्वास। नृसिंहानन्दः नृसिंहानां नरश्रेष्ठानां साधूनामित्यर्थः आनन्दः आनन्दजनकः इत्यर्थः नृसिंहानन्दः तदाख्यया प्रसिद्ध इत्यर्थः। समाधिस्थः

स्त्री। तदो तदो (१)।

पुरु। ततस्तेनोक्तम्। तव गात्स्वामिना चैतन्येन भोगत्रयमेव भुक्तं नृसिंहस्योपवासो जात इति।

स्त्री। तदो तदो (२)।

पुरु। ततः शिवानन्देनोक्तम्। स्वामिन्! नृसिंहार्थमन्या भोगसामग्री कर्त्तव्येति। तथाकृते स्वस्थो बभूवेति स्थिते शिवानन्दस्य संशयो जातः। किमनेनावेशवशादेवोक्तमथवा सत्यमेवेति मनसि कृत्वा पुनरन्यस्मिन् संवत्सरे पुरुषोत्तममासाद्य भगवच्चैतन्यसविधे गतः। प्रसङ्गतो नृसिंहानन्दस्य तन्महिमकथनेऽवान्तरभूता पाकक्रिया तस्यातिसमीचीनेत्यपि वदति भगवति सर्वेषु सन्दिहानेषु मया गते संवत्सरे पौषे मासि तस्य भिक्षा कृता। तत्र तस्य पाककौशलं ज्ञातमित्युक्ते पुनः सर्वे सन्दिग्धा एव स्थिताः। शिवानन्दस्तु निःसन्देहो बभूवेति व्याख्यातस्ते (प) त्रिविधोऽनुग्रहप्रकारः।

(१) ततस्ततः ?

(२) ततस्ततः ?

भोगनिष्ठः। पक्वव्यं पाकः कर्त्तव्यः। तस्मिन् तयोर्युक्ते स्वाभिप्रायानुसारिणीत्यर्थः। उषसि प्रभाते। पेषितवान् पाकं चकार नृसिंहानन्द इति शेषः। निष्पादिताः कल्पिताः। समर्प्य निवेद्य। सारवं सशब्दम्। प्रथयामर्षेण प्रथयेर्ष्या कृताक्षेपमिव कृततिरस्कारमिव। आक्रन्दन् वदन्।

(प) तथा कृते इति। तथा कृते नृसिंहार्थमन्यस्मिन् भोगे कृते इत्यर्थः स्वस्थः प्रकृतिस्थः बभूव नृसिंहानन्द इति शेषः। भग-

स्त्री । अच्चरिअं अच्चरिअं । ता एदंपि कधेहि रामाण-न्देण कहं तत्थ गन्तुं णिसेहो किदो (१) ।

पुरु । प्रिये ! स तावद्भगवतोऽतिप्रणयी तद्विच्छेदं न सहते । तेन तदुपरोधान्मथुरां जिगमिषुरपि वर्षद्वयमत्रास्व इति कृत्वा विलम्बितो भगवान् ।

स्त्री । अदो वरं एत्थज्जेव वट्टिस्सदि अहवा महुरां गमिस्सदि (२) !

पुरु । प्रिये ! अधुना तु चिरमनुनीय तमेव रामानन्दं तेनानुमतो गौड़वर्त्मन्येव गन्तुमुद्यतोऽस्ति ।

स्त्री । अज्जउत्त ! पुणो एत्थ आअमिस्सदि (३)

पुरु । अथ किम् ? ।

स्त्री । एत्थ अत्थि सन्देहो । जदो महुरा क्खु एदस्स पिअट्ठाणं (४) ।

पुरु । यद्यप्येवं तथापि ।

(१) आश्चर्य्यमाश्चर्य्यम् । तदिदमपि कथय । रामानन्देन कथं तत्र गन्तुं निषेधः कृतः ।

(२) अतः परमत्रैव स्थास्यति अथवा मथुरां गमिष्यति ।

(३) आर्य्यपुत्र ! पुनरत्रागमिष्यति ।

(४) अत्र अस्ति सन्देहः । यतो मथुरा खलु अस्य प्रियस्थानम् ।

---

वस्त्रैतन्यसविधे भगवतः चैतन्यस्य सविधे समीपे । प्रसङ्गतः प्रस्ताव-क्रमेण तन्महिमकथने तस्य पूर्वोक्तस्य महिम्नः कथने सतीत्यर्थः । अथान्तरभूताः प्रासङ्गिकी । तस्य नृसिंहानन्दस्य । अतिसमीचीना आनुपूर्व्यी । सन्निधानेषु संस्थानेषु । व्याख्यातः कथितः ।

आपामरं प्राणिन उद्दिधीर्षो-
र्नीलाचलेन्दोरतिभारमेतम् ।
लघूकरिष्यन् पुरुषोत्तमस्थो
भूयोऽपि भावी पुरुषोत्तमोऽयम् ॥ ( फ )

स्त्री । थां होइ एवं होइ ( १ )

नेपथ्ये । भट्टाचार्य्य कथं रामानन्देनास्मिन् कर्मणि कृताऽनुमतिः ।

पुरु । प्रिये ! श्रुतमिदं यदभिहितं मया तदेवाधुना तद्विच्छेदविधुरो गजपतिरपि सार्वभौमेन सह सङ्घथयन्नास्ते । तदावामपि भगवन्तं नीलाचलचन्द्रं गानेनोपस्थातुं गच्छाव । इति निष्क्रान्तौ ।

प्रवेशकः । ततः प्रविशत्यासनस्थो राजा सार्वभौमश्च ।

राजा । भट्टाचार्य्य ! रामानन्दस्याग्रहपाशग्रन्थिग्रैथिल्येनैव ( ब ) भगवान् प्रस्थितः ।

सार्व । ईश्वरेण सार्द्धं किमधिको हठः ( भ ) कर्त्तुं

(१) थां भवति एवं भवति ।

(फ) आपामरमिति । अयं पुरुषोत्तमः श्रीचैतन्यः आपामरम् आचण्डालमित्यर्थः प्राणिनः जीवान् उद्दिधीर्षोः उद्धर्त्तुमिच्छोः परित्राणकामस्येत्यर्थः नीलाचलेन्दोः जगन्नाथस्य अतिभारम् एतम् आपामरप्राणिपरित्राणव्यापारमिति भावः लघूकरिष्यन् स्वसाहाय्येन स्वल्पयन्नित्यर्थः भूयः पुनरपि पुरुषोत्तमे अस्मिन् क्षेत्रे तिष्ठतीति तथोक्तो भावी भविष्यतीत्यर्थः । उपजातिवृत्तम् ।

(ब) आग्रहेति । आग्रहः निर्बन्धः स एव पाशः तस्य ग्रन्थिः ग्रैथिल्येन ग्रन्थिशिथिलतया क्षान्तेनेत्यर्थः ।

(भ) हठः बलात्कारः ।

ग्रस्यते। तथापि वर्षद्वयमेव विलम्बितः।

राजा। भट्टाचार्य्य! रामानन्देन मे महानेवोपकारः कृतः। तथाहि।

आनीतो राजधान्याः पथि पुरुकरुणः कारितं दर्शनं मे
स्पर्शः पादाम्बुजस्य व्यधित मम दुरापोऽपि सम्यक् सुखापः।
वाक्पीयूषञ्च सानुग्रहमतिमधुरं पायितं श्रोत्रपेयं
यन्नाभूद्भूरियत्नैस्तदजनि सहसा शून्यमन्तस्तथापि॥ (म)

सार्व। महाराज! रामानन्दो हि भागवतोत्तम एव। तथाहि।

प्रणयरसनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः। (य)

---

(म) आनीत इति। पुरुर्महती करुणा यस्य तथाभूतः असौ भगवान् राजधान्याः पथि आनीतः मे मम दैवाद् दर्शनं कारितञ्च, मम दुरापः दुर्लभोऽपि सम्यक् सुखापः सुखप्रदः पादाम्बुजस्य चरणकमलस्य स्पर्शः व्यधित कृतः, अतिमधुरं श्रोत्रपेयं कर्णाभ्यां पातुमर्हं वाक्पीयूषं वचनामृतं सानुग्रहं यथा तथा पायितञ्च रामानन्देनेति सर्वत्र कर्त्तृपदमध्याहार्य्यम्। भूरियत्नैः बहुभिः प्रयत्नैः यत् न अभूत्, तत् अजनि सञ्जातं भगवद्दर्शनादिकमिति भावः, तथापि सहसा अन्तः अन्तःकरणं शून्यम् इदानीं भगवद्विरहादिति भावः। स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात्।

(य) प्रणयेति। प्रणयरसनया प्रेमजिह्वया प्रेमबन्धनेनेति भावः धृतम् अङ्घ्रिपद्मं चरणकमलं येन तादृशः सः रामानन्दः भागवतेषु भगवद्भक्तेषु प्रधानः श्रेष्ठः उक्तः भवति कथ्यते इत्यर्थः।

तेनास्य भगवान् वश्य एव अतस्तदुपरोधेन भगवता त्वय्येतादृशोऽनुग्रहः कृतः ।

राजा । रामानन्देन कियद्दूरमनुव्रजितव्यम् । (र)

भट्टा । भद्रकपर्य्यन्तमिति श्रुतम् ।

राजा । स्वामिनः सङ्गे कियन्तश्चलिताः

सार्व । पुरीश्वर-दामोदर-जगदानन्द-गोपीनाथ-गोविन्दाद्याः पञ्चषा एव ।

राजा । हन्त ।

यदपि जगदधीशो नीलशैलस्य नाथः ।
प्रकटपरमतेजा भाति सिंहासनस्थः ।
तदपि च भगवच्छ्रीकृष्णचैतन्यदेवे
चलति पुनरुदीचीं हन्त शून्या त्रिलोकी ॥ (ल)

सार्व । राजन् ! निरुपधिप्रेम्णो हीदृशः प्रकाशः । (व)

राजा । अस्मदीयः कोऽपि न गतः प्रभोरनुपदम् । (श)

सार्व । राजन् ! प्रेम्णैवेदमुच्यते क्व तस्य त्वदीयजना-

(र) अनुव्रजितव्यम् अनुगन्तव्यम् ।

(ल) यदिति । यदपि यद्यपि नीलशैलस्य नाथः प्रकटं विस्तृतं परमं तेजो यस्य तथाभूतः जगदीशः जगन्नाथः सिंहासनस्थः सन् भाति राजते, तदपि तथापि च भगवति श्रीकृष्णचैतन्यदेवे पुनः उदीचीं उत्तरां दिशं चलति गच्छति सति हन्त खेदे त्रिलोकी शून्या जाता ममेति शेषः । मालिनीवृत्तम् ।

(व) निरुपधीति निरुपधिप्रेम्णः अकैतवप्रणयस्य । ईदृशः प्रकाशः प्रियतमविरहे सर्वशून्यत्वभावनमित्यर्थः ।

(श) अनुपदं पश्चात् ।

पेचा। तथापि तवाधिकारं यावत् तव लेख्यमादाय पूर्वमेव कश्चिद्गतोऽस्ति करिष्यति च स एव सर्वसमाधानम्।

प्रतिवसति नवीना वासमर्घ्यं विधाय
प्रतिरहमुपचारैर्भूरिभिः पूरयित्वा।
कृतसुरचनमुख्यैस्तत्र तत्राभियुक्तैः
पदविहरणखेदं धुन्वते ते विश्रान्ताः॥ (च)

भगवांस्तु रामानन्दस्य कृतिरियमित्येव जानाति।

प्रविश्य। दौवारिकः। देव! रामानन्दरायो द्वारमधितिष्ठति॥

राजा। त्वरितमानीयताम्।

दौवा। यथाज्ञापयति। इति निष्क्रम्य तमादाय प्रविशति।

राजा। उपसृत्य प्रणमति। रामानन्दं बाहरमुपवेश्य। कथय कियद्दूरं भवाननुगतो देवम्।

रामा। इत इतो निवर्त्तस्वेति प्रतिपदमुक्तोऽपि भद्रकपर्यन्तमनुगतवानस्मि। महाराज! दुस्त्यजो हि व्यवहारमार्गः (छ)। यतः

---

(च) प्रतिवसतीति। स च तत्र तत्र अभियुक्तैः यत्नवद्भिः पुरुषैः भृत्यैः अतिशयेन कृता अनुष्ठिता सुरचना शोभना रचना संविधानं यस्मिन् तथाविधं नवीनावासं नूतनमावासम् अर्घ्यं विधाय तथा प्रतिरहं भूरिभिः बहुलैः उपचारैः परिवर्हैः पूरयित्वा प्रतिवसति। यत्रेत्यध्याहार्य्यं ते भगवच्छ्रीचैतन्यप्रभृतयः विश्रान्ताः प्रविश्रान्ताः सन्तः पदविहरणखेदम् अध्वगमनश्रममित्यर्थः धुन्वते अपनयन्ति। मालिनीवृत्तम्।

(छ) व्यवहारमार्गः आचारपद्धतिः। अध्वक्लेशपरिहरणोपायभूतं सन्निधानमित्यर्थः।

तमपि परमदीनोद्धारिकारुण्यसिन्धुं
शिव शिव परिहाय त्वद्भियैवागतोऽहम् ।
कथमहह न जातस्तत्र मे देहपातः
कुलिशकठिनमूर्त्तेर्हा यतोऽहं निवृत्तः ॥ (छ)

इत्यवमूर्च्छति ।

सार्व । रामानन्द ! त्वमतिधीरोऽसि कथमेवमुत्ताम्यसि ईश्वरो हि तथाविधलील एव । व्रजवासिनो विहाय मथुरां गतः पुनस्ततोऽपि द्वारवत्यां पुनस्ततोऽपि क्वचित् क्वचित् । तत्रत्याः कथं सहन्ते स्म तद्विरहम् । यद्यपि दुःसह एव भगवद्विरहस्तथाऽपि स एव तं साहयते (ज) तदलमनुशोचनेन । राजानमधुना सान्त्वयितुमर्हसि न पुनः स्वखेदप्रकटनेन खेदयितुम् ।

राजा । कथय ।

रामा । भवदधिकारं यावद्भवदीया एव गच्छन्ति तदूर्द्ध्वं मदीयाः पथि प्रश्ना (क) एव गौड़राष्ट्रं यावद्या-

---

(छ) तमिति । शिवशिवेति खेदसूचकमव्ययम् । परमदीनोद्धारि यत् कारुण्यं कृपा तस्य सिन्धुः सागरः तं श्रीचैतन्यमपि परिहाय त्वद्भियैव त्वत्तः भयादेव त्वं राजा, त्वया भद्रकपर्य्यन्तं भगवाननुगन्तव्य इति आदिष्टं तदकरणे राजाज्ञाभङ्गजनितभयादिति भावः अहम् आगतः । हा अहह इति खेदसूचकमव्ययम् । कुलिशस्य वज्रस्येव कठिना मूर्त्तिर्यस्य तादृशस्य मे मम तत्र कथं देहपातः शरीरनाशः कथं न जातः ? यतः अहं निवृत्तः । मालिनीवृत्तम् ।

(ज) स एव भगवानेव साहयते सह्यं कारयति ।

(क) प्रश्नाः प्रश्नकारयात्रिणः ।

च्छन्ति केचित्तेमां कियद्दूरत एवागमिष्यन्ति केचित् दूरतरं यास्यन्ति।

प्रविश्य। दौवारिकः। देव! महाप्रभुमनुव्रजन्तो ये रायस्य (ख) मनुजाश्चलिताः सन्ति तेषां कियन्तः समायाताः।

राजा। प्रवेश्यन्तामविचारेणैव।

दौवा। तथा करोति।

प्रविश्य। पुरुषाः। जयति देवः।

राजा। कथयत रे! कियद्दूरं भगवन्तो गताः।

पुरु। कुलियाग्रामं यावत्।

राजा। सार्वभौममुखं निरीक्षते।

सार्व। देव! नवद्वीपपारे पारेगङ्गं कश्चन तन्नामा (ग) ग्रामोऽस्ति।

राजा। आमूलं कथय।

पुरु। देव! इतो देवाधिकारं यावत्तावत्तव प्रभावेणैव निर्वाहितवर्त्मसौकर्य्यां चङ्क्रमणेनैव सर्वे गतवन्तः। गौड़सीम्नि प्रवेष्टुं त्रयः पन्थानः। इयं तत्र एकस्तु जलदुर्गः तमेवोद्दिश्य चलिते सति तत्सीमाधिकारी तुरुष्कोऽप्याकार इव सर्वेषां मर्म्महा महामद्यपो दुर्वृत्तचक्रचूड़ामणिः। इतो देशाद् ये गच्छन्ति तेषां दुर्गतिः क्रियते इति श्रुत्वा सर्वेषामेव भयमुत्पन्नं महाप्रभवे कोऽपि

(ख) रायस्य रामानन्दरायस्येत्यर्थः।

(ग) पारेगङ्गं गङ्गायाः पारे। कुलियाग्रामनामा।

च स्थापयति । पथसीमाधिकारिणोक्तम् । अत्र कियान् विलम्बः क्रियतां यावन्मयाऽनेन ( च ) सन्धिः सन्धीयते इत्येतावत् कथनसमकालमेव तस्यैव कश्चित् पथसीमाधिकारिणः समीपमागतः ।

राजा । ततस्ततः ।

पुरु । आगत्य कथितम् । यदि त्वमनुमन्यसे तदा भवद्ग्रामादागच्छन्तं श्रीकृष्णचैतन्यदेवमहं विलोकये । ( छ )

राजा । ततस्ततः ।

पुरु । ततोऽनेनोक्तम् । त्रिचतुरैस्सह यदायाति तदायातु नामेति श्रुत्वा तथैवागतो भगवत्पादसमीपभूमौ निपतितश्चिरं प्रणनाम । ततः सर्वैरुक्तम् । भगवन्नस्य साहाय्येनैव सुखेन गन्तुं शक्यते । एनं प्रति कृपावलोकः क्रियतामिति तदनुरोधेन तं प्रति कृतदृक्पाते भगवति स यवनः पुलकाश्रुगद्गदस्वरो भवन् ग्रहग्रस्त इव जातः ।

(च) निर्वाहितेति । निर्वाहितं सम्पादितं वर्त्मनः पथः सौकर्य्यं यैः तथाविधाः । अपक्रमणेन आगमनेनैव तमेव जलदुर्गमेव । तत्सीमाधिकारी तत्सीमाध्यक्षः तुरुष्कः तद्देशजातीयः कश्चित् । अश्मोपकार इव अरुन्तुद इव सर्वेषां पथिकानामित्यर्थः अरुन्तुदः मर्मपीड़कः । महामद्यपः अतिमद्यपानमत्तः । दुष्टानां दुर्जनानां चक्रं मण्डलं तस्य चूड़ामणिः शिरोरत्नम् । महाप्रभवे श्रीकृष्णचैतन्याय । अनेन तुरुष्कजातीयेन सीमाध्यक्षेण इत्यर्थः ।

(छ) विलोकये पश्यामि । अनेन पथसीमाधिकारिणा । त्रिचतुरैः त्रिभिश्चतुर्भिर्वा [illegible] सहेत्यर्थः ।

ततो गोपीनाथाचार्य्येणोक्तम् । अये ! महाप्रभुरयं पथेन कथं चलति ।

राजा । ततस्ततः ।

पुरु । ततस्तेनोक्तं (च) कियद्दूरं भवद्भिर्गन्तव्यम् । तदनु गोपीनाथेनोक्तम् । गन्तव्यं तावत् पाणीयहाटीपर्य्यन्तमिदानीम् ।

राजा । ततस्ततः ।

पुरु । ततः ।

प्रफुल्लरोमा गलदश्रुधारः
सगद्गदं किञ्चिदसौ जगाद ।
अहो मदीयं महदेव भाग्यं
देवस्य साहाय्यविधौ भवेयमिति ॥ (छ)

सकलसज्जननाविकैर्वाह्यमाना नवीना तरणिर्मध्यगृहशालिनी पुनः प्रक्षालिता क्षणेनाधिनदि समानायिता । अनन्तरं नौकान्तरं स्वयमप्यारुह्य भगवन्त एनामधिरोहन्त्विति निगदिते देवेन सह सर्वे तामारुरुहुः । अथ स एव जलचरदस्युभयनिवारणाय स्वयमग्रेसरो भूत्वा मन्थरमुत्तीर्य्य पिच्छलदाग्रामपर्य्यन्तमागतवान् ।

---

(च) तेन यवनेन ।

(छ) प्रफुल्लेति । असौ यवनः प्रफुल्लरोमा रोमाञ्चितकलेवरः तथा गलन्ती अश्रुधारा यस्य तथाविधः सन् सगद्गदं यथा तथा किञ्चित् जगाद अहो देवस्य साहाय्यविधौ साहाय्यविधाने भवेयं यत्नवानिति शेषः इति महदेव मदीयं भाग्यम् । उपजातिवृत्तम् ।

निवृत्तिसमये भगवता जगन्नाथ प्रसाद-मनोहराख्यमोदकाः प्रसादीकृताः। तानवाप्य हरिं वदेत्याविष्टो भूत्वा महाभागवतदशामापन्नः। (ञ)

राजा। विस्मयं नाटयति।

सार्व। एवमेवेश्वरस्य लीला। तथा हि

अस्थानेऽपि प्रथयति कृपामीश्वरोऽसौ स्वतन्त्रः
स्थानेऽप्युच्चैर्जनयतितरां नूनमौदास्यमेव।
रामो देवः स गुहमकरोदात्मनीनं सखायं
कृष्णः स्तोत्रैः प्रणमति विधौ हन्त मौनी बभूव॥ (झ)

---

(ञ) सकलेति। सकलैः सर्वैः सज्जनैः नाविकैः कर्णधारैः कर्णधारस्तु नाविक इत्यमरः। नवीना न तु पुरातनीति भावः। मध्यस्थेति मध्येन मध्यस्थितेन रहेण शोभते शोभते इति तथाविधा। तरणिः नौका स्त्रियां नौस्तरणिस्तरिरित्यमरः। प्रक्षालिता धौता। अभिनदि नद्यां विभक्त्यर्थे अव्ययीभावः। नौकान्तरम् अन्यां नौकाम्। जगन्नाथेति जगन्नाथस्य प्रसादाः मनोहराख्याः मनोहरनामानः मोदकाः मिष्टान्नानि। प्रसादीकृता प्रसन्नतया प्रदत्ताः। तान् मोदकान् अवाप्य प्राप्य। आविष्टः आवेशवान्। महाभागवतदशां भगवद्भक्तश्रेष्ठदशाम् आपन्नः प्राप्तः।

(झ) अस्थाने इति। असौ स्वतन्त्रः स्वाधीनः ईश्वरः अस्थानेऽपि अयोग्यदेशेऽपि कृपां दयां प्रथयति प्रकटयति। स्थानेऽपि योग्ये देशेऽपि नूनम् निश्चितम् औदास्यमेव ताटस्थ्यमेव जनयतितराम् अतिशयेन जनयतीत्यर्थः। स रामो देवः गुहं चण्डालम् आत्मनीनम् आत्मने हितं सखायम् अकरोत्। कृष्णः विधौ ब्रह्मणि स्तोत्रैः प्रणमति अपि हन्त खिन्नार्थे मौनीबभूव न तस्मै वक्तुमितीति भावः। मन्दाक्रान्ताछन्दः।

ततः ।

पुरु । तदाज्ञया भगवत्कीर्त्तनं कुर्वन्तस्ते नाविकास्तथा तरणिमवाहयन्त (ञ) यथैकेनाह्ना प्रायो यहाटीग्रामे समुत्तीर्णाः स्मः ।

राजा । तत्र को वर्त्तते ।

सार्व । राघवपण्डितः ।

पुरु । ततो यदभूत्तदाश्चर्यम् ।

राजा । कथमिव ।

वपु । देव ! ।

यावद्देवो न सुरसरितस्तीरसीमानमाप्त-
स्तावत् सर्वं जनमयमभूद्धन्त किं तद् ब्रवीमि ।
किं तत्रासन्नहह ! धरणीधूलयो लोकरूपाः
किं तारा वा मनुजवपुषः पेतुरुर्व्यां नभस्तः ॥ (ट)

एवं गङ्गातटतः कष्टेनैव यहाटीमभ्याययौ देवः ।

राजा । ततस्ततः ।

(ञ) तदाज्ञया तस्य यवनस्य आज्ञया । अवाहयन्त वाहितवन्तः ।

(ट) यावदिति । देवः यावत् सुरसरितः गङ्गायाः तीरसीमानं न आप्तः न प्राप, तावत् सर्वं तीरमिति शेषः जनमयं लोकारण्यमिति यावत् अभूत् हन्त किमाश्चर्यं तत् किं ब्रवीमि, अहह इति विस्मयजनकमव्ययं तत्र तीरभूमौ धरणीधूलयः भूरेणवः किं लोकरूपाः जनरूपधारिणः आसन् ? किं वा ताराः नक्षत्राणि मनुजवपुषः मनुष्यदेहधारिण्यः सत्यः नभसः आकाशात् उर्व्यां पृथिव्यां पेतुः पतन्ति स्म ? महती जनताऽभूदिति भावः । गङ्गातटात्तम्

पुर। ततस्तां रजनीं तत्रैव गमयित्वा परेद्यवि गौ-डवर्त्मनैव चलितवान्।

अथो अविच्छिन्नशुभप्रवाहा
निरन्तराया चपलोर्म्मिहस्ता।
निरन्तरं विष्णुपदावतारा
गङ्गेव दीर्घा जनपङ्क्तिरासीत्॥ (ठ)

ततः कुमारहट्टे श्रीवासपण्डितवाटीमभ्याययौ। तत्र च गङ्गातीराद्वाटीपर्य्यन्तगमने यत्र यत्र पदमर्पयतीश्वरस्तत्र पादरजसां ग्रहणाय प्राणिपाणिपतनेन स पन्था कृन्तगर्त्तमय एव बभूव। तत्रोत्तीर्ण एव भगवति जगदानन्दः शिवानन्दालये भगवद्गोचर एव (ड) गतवान्। तत्र तेन चिरमेव स्थितमिति तदाज्ञया भगवानत्रानेतव्य इति वचनावैशिष्ट्यमपि कृतवान्।

(ठ) अथो इति। अथो अनन्तरम् अविच्छिन्नः विच्छेदमप्राप्तः शुभः शोभनः प्रवाहः सञ्चारः स्रोतश्च यस्यास्तादृशी निरन्तराया निर्बाधा उभयत्र समानमेतत्। चपला ऊर्मयस्तरङ्गा इव हस्ता अन्यत्र ऊर्मय एव हस्ता यस्यास्तथोक्ता विष्णुपदा च विष्णववतार-श्रीचैतन्यपदद्दर्शनार्थमिति भाव अवतरति उपतिष्ठते इति तथाविधा अन्यत्र विष्णोः पदात् अवतीर्णेत्यर्थः दीर्घा विस्तारिणी उभयत्र समानमेतत् जनपङ्क्तिः लोकसमूहः गङ्गेव निरन्तरम् अविरतम् आसीत् बभूवेत्यर्थः। उपमालङ्कारः। उपजातिवृत्तम्।

(ड) वाटीपर्य्यन्तगमने श्रीवासस्येति शेषः। पादरजसां पद-धूलीनाम्। प्राणिनां देहिनां पाणिपतनेन हस्तनिक्षेपेण कृन्तेति आवर्त्तसूचकमव्ययम्। तत्र श्रीवासवाट्याम् उत्तीर्णे एव उपस्थित एव। भगवद्गोचर एव भगवता अविदित एव।

अथ

प्राचीरस्योपरि विटपिनां सर्वशाखासु भूमौ
रथ्यां रथ्यामनु पथि पथि प्राणिषु प्राप्तवत्सु।
उच्चैरुच्चैर्वद हरिमिति प्रौढघोषेषु देवो
रात्रौ शेषे तरिमधि शिवानन्दनीतः प्रतस्थे॥ (ढ)

ततो जगदानन्देनोभयोः पार्श्वयोः कदलीस्तम्भपूर्णकुम्भमुकुलदीपावलिभिः सुरचनाविशेषेण शिवानन्दवाटीपर्यन्तमभिमण्डितं वर्त्मारूढः स्मितसुमधुरवदनो जगदानन्दकृतमिति मन्यमानो वामे वासुदेववाटीपथमपि तथाविधमालोक्य किमितोऽग्रे गन्तव्यं किमिति इति सन्दिहानो वासुदेवेनोचे। भगवन्नयत शिवानन्दवाटीमेवालङ्कुर्विति तथा कुर्वाणो जगदानन्देन धारितचरणाम्बुजस्तदीयभवनमध्ये प्रविष्टः। अनन्तरं तच्चरणोदकं गृहपटलोपरि किञ्चिद्विकीर्य्य कियदन्तःपुरे परिजनेभ्यो जगदानन्देनैव दत्तम्। अनन्तरं मुहूर्त्तं स्थित्वा वासुदेववाटीमागत्य क्षणमवस्थाय पुनस्तरणिमारुह्य चलितवति भगवति चरणजलग्रहणार्थमाकण्ठमग्नानां जनानां

(ढ) प्राचीरस्येति। प्राचीरस्य उपरि विटपिनां वृक्षाणां सर्वासु शाखासु भूमौ रथ्यां रथ्याम् अनु प्रतिरथ्यं तथा पथि पथि प्रतिपथं प्राणिषु प्राप्तवत्सु उपतिष्ठत्सु तथा उच्चैः उच्चैः हरिं वद इति प्रौढः महान् घोषो निनादः येषां तादृशेषु सत्सु देवः श्रीचैतन्यः रात्रौ शेषे रजन्यवसाने तरिमधि तरणौ शिवानन्दनीतः सन् प्रतस्थे श्रीपाणिहाटीत इति शेषः। मन्दाक्रान्ताच्छन्दः।

यद्वैयग्र्यं (थ) आर्त्तं तदवलोक्य भगवतस्तथा करुणा जाता यथा सर्वैरेव चरणजलं प्राप्तमासीत्। ततस्तटवर्त्मनैव सर्वलोकाश्चलिता न केऽपि निववृतिरे।

राजा। ततस्ततः।

पुरु। ततोऽद्वैतवाटीमभ्येत्य हरिदासेनाभिवन्दित-स्तथैव तरणिवर्त्मना नवद्वीपस्य पारे कुलियानामग्रामे माधवदासवाट्यामुत्तीर्णवान्। नवद्वीपलोकानुग्रहहेतोः सप्तदिनानि तत्र स्थितवान्। तत्र च नवद्वीपात् पार-गमने।

य आतरः काकिणिकैकमात्र
आसीत् प्रतिव्यक्ति चिरं क्रमेण।
वंशीवसीष्वप्यथ नौषु सोऽभूत्
कार्षापणानामधिकाधिकोऽपि॥ (त)

(थ) अभिमथितं क्षुभितम्। वर्त्म पन्थानम्। तदीयमम-पदुलहं जगदानन्दस्य देवस्य दृष्टपटीपरि स्कन्धस्य क्षारोपरि। विकीर्य्य निधाय। वैयग्र्यं व्यग्रता।

(त) य इति। यः आतरः तरपण्यम् आतरस्तरपण्यं इत्यमरः। प्रतिव्यक्ति प्रतिजनं काकिणिकैकमात्रः एकमात्रा काकिणी वराटकानां विंशतिरित्यर्थः वराटकानां रूपकद्वयं वा काकिणीति लीलावती। चिरम् आसीत्, स एव आतरः वंशीवसीषु बहुतरास्वपि नौषु क्रमेण उत्तरोत्तरमित्यर्थः कार्षापणानाम् अधिकाधिकः अपि कार्षापणं पणानां षोडशकं तस्मिन्नपि अप्यधिक एव अभूत्। भगवद्दर्शनार्थिनां जनानां बाहुल्यात् व्यपणादिति भावः।

अपिच, दुर्गं बध्नाति वंशैर्दृढतरविपुलैर्माधवो यन्निशायां
तत्प्रातश्चूर्णभावं व्रजति जनघटाघट्टनेन क्रमेण ।
सप्ताहान्येवमेव व्यजनि जनिमतां दर्शनोत्कण्ठभाजां
सङ्कट्टो यत्र देवः स्वयममरधुनीं स्नातुमीशोऽपि नैषः ॥(थ)

एवं सप्तदिनान्यपि तत्र स्थित्वा पुनस्तटवर्त्मनैव चलितवान् ।

स यत्र यत्रोपससार देवो
वृत्तान्ततः प्राक् तत एव लोकाः ।
ततस्ततो भूरपि भूरिभुग्ना
निविश्य विस्मापयते फणीन्द्रम् ॥ (द)

श्रुतश्च गौडेश्वरस्य राजधान्याः पारे गङ्गं चलतो भगवतः पश्चादुभयोः पार्श्वयोश्चलन्तीं लोकघटामालोक्य

---

(थ) दुर्गमिति । माधवः निशायां रजन्यां दृढतरविपुलैः अतिदृढैः दीर्घैश्चेत्यर्थः वंशैः यत् दुर्गं बध्नाति तत् दुर्गं प्रातः जनघटानां लोकसङ्घानां घट्टनेन सङ्घर्षणेन क्रमेण चूर्णभावं व्रजति चूर्णीभवतीत्यर्थः एवमेव सप्ताहानि सप्तदिनानि व्याप्येत्यर्थः दर्शनोत्कण्ठभाजां भगवद्दर्शनोत्सुकानां जनिमतां प्राणिनां सङ्कट्टः सञ्चारः व्यजनि सञ्जातः, यत्र सङ्कट्टे सति स्वयम् ईशोऽपि देवः सुरधुनीं गङ्गां स्नातुं न ईशः न समर्थ इत्यर्थः । स्रग्धरावृत्तम् ।

(द) स इति । सः देवः यत्र यत्र उपससार उपतिष्ठते स्म तत एव तत्र तत्रैवेत्यर्थः वृत्तान्ततः देवगमनवृत्तान्तादित्यर्थः प्राक् लोकाः उपतस्थुरिति शेषः । ततस्ततः तत्र तत्र भूः पृथिवी अपि भूरिभुग्ना अतिमात्रं निपीडितेत्यर्थः निविश्य विशेषेणेत्यर्थः फणीन्द्रं भूधरं नागराजमित्यर्थः विस्मापयते विस्मितमिति चमत्कारवन्तमित्यर्थः । उपजातिवृत्तम् ।

गौडेश्वरो गङ्गातटघटमानोपकारिकामारूढो (ध) विस्मितः किमिदमिति यदा पृष्टवान् तदा केशववसुनाम्ना तदमात्येन कथितम्। शूरत्राण! (न) श्रीकृष्णचैतन्यो नाम कोऽपि महापुरुषः पुरुषोत्तमान्मथुरां प्रयाति तद्दिदृक्षया अमी लोकाः सञ्चरन्ति इति। ततस्तेनाप्युक्तम्। अयमीश्वरो भवति यस्यैवंविधं लोकाकर्षणमिति। यतः परश्च श्रुतम् (प)। ततः कियद्दूरं गत्वा पुनः प्रत्यावृत्तो न तेन पथा मथुरां गमिष्यति अपि तु पुरुषोत्तममागत्य वनपथेनैवेति न जानीमः सत्यमसत्यं वेति।

नेपथ्ये। सत्यं भोः सत्यम्।

आगतस्य सहसा स एकको
नीलशैलतिलकं विलोक्य च।
लोकसङ्कुलभिया वनाध्वना
निह्नुतः स मथुरां जगाम च॥ (फ)

राजा। सविस्मयम्। काशीमिश्रस्य स्वर इव श्रूयते तदाहूयताम्।

---

(ध) गङ्गातटेति। गङ्गातटे घटमाना प्रस्तुता या उपकारिका पटमन्दिरं ताम्।

(न) शूरत्राण! शूरान् वीरान् त्रायते रक्षतीति तत्सम्बुद्धौ।

(प) तेन गौडेश्वरेणेत्यर्थः। श्रुतं तेनेति शेषः।

(फ) आगतमिति। सः श्रीचैतन्यः एककः एकाकी सहसा आगतस्य नीलशैलतिलकं जगन्नाथदेवं विलोक्य च लोकसङ्कुलभिया जनतामयात् निह्नुतः गुप्तभावमापन्नः सन् वनाध्वना अरण्यमार्गेण मथुरां जगाम च। रथोद्धताच्छन्दः।

प्रविश्य वानरम्। काशीमिश्रः। देव! अयमेवमनागत एवागतः।

राजा। कथय किं तत्त्वमिदम्।

काशी। सत्यमेव लोकभिया ततोऽपि निवृत्तः। ततोऽपि केनाप्यविदित एव चलितवान्।

राजा। सार्वभौम! अस्माकन्तु समः पन्थाः विच्छेद-दुःखस्य तुल्यफलत्वात्। एकाकिनस्तस्य निर्वाहः कथं भवतु।

काशी। भिक्षायोग्याः कियन्तो विप्राः प्रेषिताः सन्ति भगवता तु तन्न ज्ञायते।

राजा। साधु मिश्र! साधु किमप्युक्ता गतम्।

काशी। आगतप्रायोऽहमिति।

राजा। तत्किं द्विनं भविष्यति।

भट्टाचार्य्यः। जङ्घाजीविनः कियन्तो (व) गच्छन्तु यथा भगवतो वार्त्तां प्रापयन्ति।

सार्व। उचितमेवैतत्।

राजा। काशीमिश्रमहापात्रं चन्दनेश्वरं मदाज्ञया समादिश यथैवं करोति।

काशी। देव! परीक्षामहापात्रं निवेद्य मयैव तथा-कारितमस्ति कतिचिदागतप्राया एव।

---

(व) जङ्घाजीविनः जङ्घाष्टत्तयः पदव्राजिन इत्यर्थः। कियन्तः कतिपये।

प्रविश्य दौवारिकः । देव ! मथुराप्रभोर्वार्त्ताहारिणो द्वारि वर्त्तन्ते ।

राजा । प्रवेश्यन्ताम् ।

दौवा । तथा करोति ।

प्रविश्य वार्त्ताहारिणः । जयति जयति देवः ।

राजा । कथयत किं जानीथ ।

वार्त्ताहार । सर्वमेव जानीमः ।

प्रत्याहृत्तः स मधुपुरतो दृष्टवृन्दावनश्रीः
कुञ्जे कुञ्जे तरणितनयाकूलतः क्लृप्तकेलिः ।
गत्वा गोवर्द्धनगिरिवर कानने कानने च
भ्रान्त्वा भ्रान्त्वा दिनकतिपयं वर्त्मनीशो व्यलोकि ॥ (भ)

राजा । अरे ! वृन्दावने किं किं कृतं भगवता तज्जानासि ।

वार्त्ताहार । अथ किम् । तत्सङ्गे समागतानां केषाञ्चिद्भाग्यभाजां ( म ) मुखतः श्रुतम् ।

राजा । कथ्यताम् ।

---

(भ) प्रत्याहृत्त इति । स ईशः मधुपुरतः मथुरायाः प्रत्याहृत्तः दृष्टा वृन्दावनस्य श्रीः येन तथाविधः वृन्दावनश्रियं पश्यन्नित्यर्थः कुञ्जे कुञ्जे प्रतिकुञ्जं तरणितनयायाः यमुनायाः कूलतः कूले क्लृप्ता विरचिता केलिर्येन तथाविधः कृतक्रीड इत्यर्थः ततो गोवर्द्धनगिरिवरं गत्वा कानने कानने च प्रतिकाननमित्यर्थः भ्रान्त्वा भ्रान्त्वा वर्त्मनि पथि दिनकतिपयं व्याप्येत्यर्थः व्यलोकि दृष्टः अस्माभिरिति शेषः । मन्दाक्रान्ताछन्दः ।

(म) भाग्यभाजां सौभाग्यशालिनाम् ।

पाणाङ्का । आविर्भावादवधि स निजानन्दवृन्दैककन्दो
यद्यप्युच्चैः प्रथयतितरां तद्विकारप्रकारान् ।
वृन्दारण्योपगमसमये हन्त ते ते तरङ्गा
वृद्धिं प्रापुर्यदुपरि वचसिस्तयोर्नो निवेशः ॥ (य)

तथाहि, क्वचन च यमुनावनान्तलक्ष्मी-
मवकलयन्ननुरक्तिमुक्तकण्ठम् ।
विलपति परिरभ्य लोभ्यबाहुः
प्रतिलतिकं प्रतिशाखि सोऽखिलेशः ॥ (र)

अपिच, नैचिकीनिचयवीक्षणमोदा-
दुन्मदः स्खलितवान् गलदस्रः ।

---

(य) आविर्भावादिति । निजानाम् आनन्दवृन्दानाम् एकः अद्वितीयः कन्दः मूलभूतः सः देवः आविर्भावात् जन्मन अवधि आरभ्य यद्यपि उच्चैः महतः तस्य कन्दस्य विकारप्ररोहान् आनन्दाङ्कुरानित्यर्थः प्रथयतितराम् अतिशयेन प्रकटयति पोत्वध्याहार्य्यम् । तथापि वृन्दारण्यस्य उपगमसमये उपस्थितिकाले हन्तेति विस्मयद्योतकमव्ययं ते ते तरङ्गाः आनन्दविकारविशेषा इति भावः वृद्धिं प्रापु·, यदुपरि येषामानन्दतरङ्गाणामुपरि वचसित्तयोः निवेशः नो भवतीति शेषः वाङ्मनसयोरगोचरास्ते इति भावः । मन्दाक्रान्तावृत्तम् ।

(र) क्वचनेति । अखिलानां जगतामीशः स देवः क्वचन च कुत्रापि प्रदेशे यमुनाया वनान्तस्य वनसीमायाः लक्ष्मीं श्रियम् अवकलयन् पश्यन् प्रतिलतिकं लतायां लतायां प्रतिशाखि शाखायां शाखायां परिरभ्य आलिङ्गने लोभ्यौ चाक्षुषौ बाहू यस्य तथाभूतः सन् अनुरक्त्या अनुरागेण मुक्तः कण्ठो यस्मिन् तत् उच्चैरित्यर्थः यथा तथा विलपति । पुष्पिताग्रावृत्तम् ।

स्यन्दमानसुरसिन्धुरिवासी-
द्वातभग्न इव मेरुतटान्तः ॥ (ल)

राजा । ततः ।

वार्त्ताहारः । ततस्तैः (व) कथितम् ।

मदमुदितमयूरकण्ठकान्त-
द्युतिमभिवीक्ष्य कुतश्चिदप्यकस्मात् ।
स्खलति लुठति वेपते विरौति
द्रवति विषीदति हन्त मूर्च्छतीशः ॥ (श)

अपिच, क्वापि वत्सकुलमुच्चपुच्छं
धावमानमनुवीक्ष्य वनान्तः ।

---

(ल) नैचिकीति । नैचिकीनां गवाविशेषाणां निचयस्य वृन्दस्य वीक्षणे दर्शने यः मोदः आनन्दः तस्मात् उन्मादः उद्रिक्तविकारविशेषः गद्गदश्च विगलिताश्रुधार इत्यर्थः तथा स्खलितवान् पतन् सन् स्यन्दमानसुरसिन्धुः स्रवन्ती गङ्गेव तथा वातेन भग्नः मेरोः तटान्तः तट-प्रदेश इव आसीत् । स्वागतावृत्तं स्वागता रनभगैर्गुरुणा चेति तल्लक्षणात् ।

(व) तैः दैववद्भिर्भाग्यवद्भिरित्यर्थः ।

(श) मदेति । हन्तेति विस्मये । ईशः देवः देवः अकस्मात् कुतश्चिदपि प्रदेशादिति शेषः मदेन मुदितः प्रहृष्टः यः मयूरः तस्य कण्ठस्य कान्ता या द्युतिः, ताम् अभिवीक्ष्य निरीक्ष्य स्खलति पतति लुठति वेपते कम्पते विरौति विलपति द्रवति विषीदति विषण्णो भवति मूर्च्छति च । दीपकालङ्कारः तदुक्तं दर्पणे । अप्रस्तुतप्रस्तुतयो-र्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति । पुष्पिताग्रावृत्तम् ।

(स) क्वापीति । ईशः देवः वनान्तः काननमध्ये क्वापि कुत्रापि

कण्टकावलिनि वर्त्मनि सद्यो
विक्षताङ्गमभितः स्खलतीयः ॥ (ष)

राजा । ततः ।

वार्त्ताहारः ।

कुञ्जसीमनि कदाऽपि यदृच्छा-
मूर्च्छया निपतितस्य धरण्याम् ।
आलिहन्ति हरिणा मुखफेणा-
नापिबन्ति शकुना नयनाम्भः ॥ (स)

कदापि, पतयालुरसावुपत्यकाया-
मपि गोवर्द्धनभूधरस्य देवः ।
अनुरागसुधाब्धिमध्यमग्नो
नहि भग्नोऽपि बहिर्व्यथां विवेद ॥ (ह)

---

प्रदेशे उच्चपुच्छम् उन्नतलाङ्गूलं धावमानं वत्सकुलं गोशावकवृन्दम् अनुवीक्ष्य निरीक्ष्य सद्यः तत्क्षणं कण्टकावलिनि कण्टकाकीर्णे इत्यर्थः वर्त्मनि पथि अभितः सर्वतः विक्षतानि अङ्गानि यस्मिन् तत् यथा तथा स्खलति निपतति । स्वागतावृत्तम् ।

(स) कुञ्जेति । कदापि कुञ्जसीमनि निकुञ्जभूमौ यदृच्छया अकस्मात् या मूर्च्छा तया धरण्यां भुवि निपतितस्य देवस्य हरिणा मुखफेणान् आलिहन्ति आस्वादयन्ति, शकुनाः पक्षिणश्च नयनाम्भः अश्रुजलम् आपिबन्ति । स्वागतावृत्तम् ।

(ह) पतयालुरिति । असौ देवः गोवर्द्धनभूधरस्य गोवर्द्धनगिरेः उपत्यकायाम् आसन्नभूमौ अपि उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यकेत्यमरः । अनुराग एव सुधाब्धिः अमृतसिन्धुः तस्य मध्ये मग्नः निरतिशयावेशवशंवद इत्यर्थः पतयालुः पतन् अतएव बहिः भग्नो-

अनुवनमनुकुञ्जमीशभावे
रुदति विभावनुरक्तिमुक्तकण्ठम् ।
रुरुदुरिव लताश्च शाखिनश्च
द्विजखगराजिरभाजि मूर्च्छयेव ॥ (ख)

अपि च, विलपति करुणस्वरेण देवे
जलधरघोरगभीरनिस्वनेऽपि ।
चिरमनुविलपन्ति वाप्तकण्ठाः
क्वचन च लास्यमपास्य नीलकण्ठाः ॥ (क)

एवमत्यनुरागवैकल्यादीश्वरत्वेनैव धार्य्यमाणदेहं तमालोकयद्भिः पुण्डरीकविद्यानिधिवक्रेश्वरजगदानन्दगदाधराचार्य्यादिभिरहो अनर्थोऽयमापतित इति चिन्तयद्भिर्बलादिव वृन्दावनाभिमुखा-

ऽपि मूर्च्छितवाह्याक्तोऽपि व्यथां क्लेशं न विवेद न ज्ञातवान् । हरिणप्लुताछन्दः अयुजि प्रथमेन विवर्जिता द्रुतविलम्बिता हरिणप्लुतेति तल्लक्षणात् ।

(ख) अनुवनमिति । अनुवनं वने वने अनुकुञ्जं प्रतिकुञ्जम् ईशभावे पश्यति विभौ ईशे अतएव अनुरक्त्या अनुरागेण मुक्तकण्ठम् उच्चैः रुदति विलपति सति लताश्च शाखिनः तरवश्च रुरुदुरिव । द्विजानां पक्षिणां खगाख्यानां राजिः वृन्दं मूर्च्छया अभाजीव आक्रान्तेव । पुष्पिताग्राछन्दः ।

(क) विलपतीति । क्वचन च कुत्रापि प्रदेशे जलधरस्येव घोरः स्वनः गभीरः निस्वनो यस्य तादृशेऽपि आनन्दप्रदत्वादुग्रतपीति भावः देवे करुणस्वरेण दीनस्वरेण विलपति सति नीलकण्ठा मयूराः लास्यं नृत्यम् अपास्य त्यक्त्वा वाष्पकण्ठाः निरुद्धकण्ठा इति भावः चिरं बहुक्षणम् अनुविलपन्ति इत्यन्वयः । पुष्पिताग्राछन्दः ।

स्थितो भगवानिति न चिरकालावस्थितिस्तत्र (ख) तस्येति। ततश्च।

यः प्रागेव प्रियगुणगणैर्गाढबद्धोऽपि मुक्तो
गेहाध्यासाद्रस इव परो मूर्त एवाप्यमूर्तः॥
प्रेमालापैर्दृढतरपरिष्वङ्गरङ्गैः प्रयागे
तं श्रीरूपं सममनुपमेनानुजग्राह देवः॥ (ग)

राजा। सार्वभौम! अतिप्रेष्ठवृन्दावनोऽपि (घ) कथमसौ स्वल्पमेव कालं तत्रावतस्थे।

सार्व। जगन्नाथेन तद्विरहमहासुमानेन समाकृष्ट इव। अपिच, प्रियस्वरूपे दयितस्वरूपे
प्रेमस्वरूपे सहजाभिरूपे।

---

(ख) अत्यनुरागैकत्वात् अत्यन्तानुरागातिशयादित्यर्थः। ईश्वरत्वेन एवेति ईश्वरादन्यः तथाविधतो नैव देहं धर्त्तुं शक्नोतीति भावः। तत्र वृन्दावने तस्य चिरकालावस्थितिः बहुकालावस्थानं न जातेति शेषः।

(ग) य इति। यः प्रागेव पूर्व्वमेव प्रियाणां प्रेमास्पदानां वस्तूनां गुणगणैः गाढबद्धोऽपि नितरां निगडितोऽपि गेहाध्यासात् गृहावस्थानात् मुक्तः विरहितः त्यक्तगृहस्थितिरित्यर्थः परः श्रेष्ठः रसः अनुराग इव तथा मूर्त्त एव मूर्त्तिमानेवापि अमूर्त्तः अशरीर इवेत्यर्थः, देवः प्रयागे तदाख्यतीर्थे तं सर्वं काश्चनपुरीपयोस्तुल्यहर्षमिति भावः श्रीरूपं तदाख्यं गोस्वामिनं प्रेमालापैः समप्रणयभाषणैः तथा दृढतरपरिष्वङ्गरङ्गैः गाढालिङ्गनविलासैः अनुपमेन अत्यन्तमित्यर्थः अनुजग्राह अनुगृहीतवान्। मन्दाक्रान्तावृत्तम्।

(घ) अतिप्रेष्ठेति। अतिप्रेष्ठम् अतिप्रियं वृन्दावनं यस्य तथाविधः।

प्रियानुरूपे प्रभुरेकरूपे
ततान रूपे स्वविलासरूपे ॥ (ङ)

राजा । ततस्ततः ।

वार्त्ताहारः । ततश्च वाराणस्याम् ।

चन्द्रशेखर इति प्रथितस्य
व्यासुरस्य भवने भुवनेशः ।
प्राक्तनैः सुकृतराशिभिरस्य
प्रत्यपद्यत तदा स यतीन्द्रः ॥ (च)

राजा । ततस्ततः ।

वार्त्ताहारः । तदानीन्तु ।

तमेत्य पश्येत्यनुरागपूर्वं
विश्वेश्वरो विश्वमिव व्ययुङ्क्त ।
कुतोऽन्यथा मार्वति तुल्यकाले
तुल्यक्रियः सर्वजनो बभूव ॥ (छ)

---

(ङ) प्रियेति । प्रभुर्जगन्नाथः प्रियं स्वरूपं लावण्यं ययोः तादृशे, ईप्सितम् अभिमतं स्वं रूपं स्वरूपं ययोः तथाविधे, प्रेमस्वरूपे प्रेमपूर्णे इत्यर्थः वक्ताभिरूपे स्वभावसुन्दरे, निजानुरूपे स्वयोग्ये एकरूपे अद्वितीयसौन्दर्यशालिनी इत्यर्थः स्वविलासरूपे स्वक्रीडानुरूपे इत्यर्थः रूपे रूपद्वयमित्यर्थः स्वस्य श्रीचैतन्यस्य चेति शेषः ततान विस्तारितवान् प्रकटयामासेत्यर्थः । उपजातिवृत्तम् ।

(च) चन्द्रशेखर इति । भुवनेशः यतीन्द्रः तदा चन्द्रशेखर इति प्रथितस्य प्रसिद्धस्य व्यासुरस्य विप्रस्य भवने अस्य विप्रस्य प्राक्तनैः पूर्वजन्मार्जितैः सुकृतराशिभिः पुण्यपरम्पराभिः हेतुभिः प्रत्यपद्यत उपतस्थौ । स्वागतावृत्तम् ।

(छ) तमिति । विश्वेश्वरः शिवः एत्य आगत्य तं यतीन्द्रं पश्य

अपिच, ब्रह्मचारिगृहिभिक्षुवनस्था
याज्ञिका व्रतपराश्च तमीयुः ।
मत्सरैः कतिपयैर्यतिमुख्यै-
रेव तत्र न गतं न स दृष्टः ॥ (ज)

राजा । सार्वभौम ! किमिति तथाविधानामपि (झ) तादृशं मात्सर्य्यम् ।

सार्व । महाराज ! यावन्मनोजयो न भवति तावदेव भगवती मत्सरलता न कञ्चिदपि मुञ्चति ।

राजा । ततस्ततः ।

वार्त्ताहारः । ततश्च ।

---

अवलोकय इति विश्वं सर्व्वं जनम् अनुरागपूर्व्वं न्ययुङ्क्तेव नियुक्त-वानिव । अन्यथा नो चेत् तावति तत्परिमिते स्वल्पे इत्यर्थः तुल्यकाले समकाले सर्व्वजनः तुल्या क्रिया दर्शनादिव्यापारः यस्य तादृशः कृतः कस्मात् बभूव ? । तत्रत्याः सर्व्वे जनाः विश्वेश्वरानुमोदिता इव तं यतीन्द्रम् अभ्यर्च्चयामासुरिति भावः । उपजातिवृत्तम् ।

(ज) ब्रह्मचारीति । ब्रह्मचारिणः गुरुकुलस्था वेदाध्ययनरताः गृहिणः गृहस्थाः भिक्षवः योगिनः वनस्थाः तापसाः याज्ञिकाः यज्ञानुष्ठानरताः व्रतपराः नियमवन्तश्च जनाः तं यतीन्द्रम् ईयुः प्रापुः अभ्यर्च्चयामासुरित्यर्थः । मत्सरैः विद्वेषिभिः कतिपयैः यतिमुख्यैः योगिवरैरेव तत्र यतीन्द्रसकाशे इत्यर्थः न गतं नोपस्थितं न च सः यतीन्द्रः दृष्टः । इन्द्रवज्रावृत्तम् ।

(झ) तथाविधानां योगिनामित्यर्थः । मात्सर्य्यं विद्वेषः । मनोजयः मनसः दमनम् । भगवती सर्व्वशक्तिमती ईश्वरेऽपि विरुद्ध-मतिदायिनीति भावः मत्सरलता मत्सरित्यम् । कञ्चिदपि जनं योगि-वरमपीत्यर्थः । मुञ्चति त्यजति ।

गौडेन्द्रस्य सभाविभूषणमणिस्त्यक्ता य ऋद्धां श्रियं
रूपस्याग्रज एष एव तरुणीं वैराग्यलक्ष्मीं दधे ।
अन्तर्भक्तिरसेन पूर्णहृदयो बाह्येऽवधूताकृतिः
शैवालैः पिहितं महासर इव प्रीतिप्रदस्तद्विदाम् ॥ (ञ

राजा । ततस्ततः ।

वार्त्ताहारः । तं सनातनमुपागतमक्ष्णो-
र्दृष्टिमात्रमतिमात्रदयार्द्रः ।
आलिलिङ्ग परिघायतदोर्भ्यां
सानुकम्पमथ चम्पकगौरः ॥ (ट)

राजा । कथमिव । तस्य (ठ) दर्शनं जातम् ।

वार्त्ताहारः । श्रुतमिदं तन्मुखादेव । (ड)

(ञ) गौडेन्द्रस्येति । गौडेन्द्रस्य गौडाधिपतेः सभाविभूषण-मणिः सभोज्ज्वलकररत्नम् अन्तर्भक्तिरसेन आभ्यन्तरभक्तिभावेन पूर्णं हृदयं यस्य तथाभूतः बाह्ये अवधूतस्य तिरस्कृतस्य वा सन्न्यासिन आकृतिरिव आकृतिर्यस्य तथोक्तः अतएव शैवालैः पिहितम् आवृतं महासर इव तद्विदां तदभिज्ञानामित्यर्थः प्रीतिप्रदः सन्तोषदः य एषः रूपस्य तदाख्यस्य गोस्वामिन एव अग्रजः ज्येष्ठः तरुणीम् अभिनवां वैराग्यलक्ष्मीं दधे आश्रयं वैराग्यमवलम्बे इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ट) तमिति । अथ अनन्तरं दृष्टिमात्रम् अतिमात्रदयार्द्रः स चम्पकगौरः चम्पककुसुमवत् गौरमूर्त्तिः अक्ष्णोरुपागतं चक्षुर्गोचरं तं विरागिणमित्यर्थः सनातनं सानुकम्पं सदयं परिघायतदोर्भ्यां परिघ-दीर्घभुजाभ्याम् आलिलिङ्ग । स्वागतावृत्तम् ।

(ठ) तस्य सनातनस्य ।

(ड) तन्मुखात् तस्य सनातनस्य मुखात् ।

राजा। कथ्यताम्।

वार्त्ताहारः।

औत्कण्ठैकपुरःसराः प्रथमतो ये यान्ति नाथाग्रतो
निष्क्रामन्ति त ईशनामनिरताः साम्राः सरोमोद्गमाः।
याताया तवतां क्रमं विगणयन् तत्पादधूलीर्जुषन्
सर्वज्ञेन बहिः स्थितो भगवता कैरप्ययं नायितः॥ (ढ)

राजा। ततस्ततः।

वार्त्ताहारः। ततश्च न मे प्रियश्चतुर्वेदीत्यादि पठित्वा सत्वरमवतीर्य्यायं दोर्भ्यां परिरब्ध इति।(ण)

राजा। ततस्ततः।

(ढ) औत्कण्ठ्येति। ये जनाः औत्कण्ठ्यम् एव एकम् अद्वितीयं पुरःसरम् अग्रसरं येषां तथाभूताः प्रभुदर्शनार्थम् उत्कण्ठाकुला इत्यर्थः सन्तः प्रथमतः अग्रतः नाथाग्रतः प्रभुसमीपे इत्यर्थः यान्ति गच्छन्ति, ते ईशस्य प्रभोर्नामनिरताः नाम कीर्त्तयन्त इत्यर्थः साम्राः आनन्दवाष्पवर्षिणः सरोमोद्गमाः रोमाञ्चितकलेवरा इत्यर्थः सन्तः निष्क्रामन्ति प्रत्यावर्त्तन्ते इत्यर्थः इत्थं यातायातवतां गच्छतां प्रत्यागच्छताञ्चेत्यर्थः क्रमं भावं विगणयन् विचिन्तयन् तस्य भगवतः पाद-धूलीः पदरजांसि जुषन् सेवमानः वा आकाङ्क्षन् बहिःस्थितः पथिस्थ इत्यर्थः अयं सनातनः कैरपि जनैरिति शेषः सर्वज्ञेन सर्वान्तर्यामिना भगवता नायितः प्रापितः। देवस्य आनयनदर्शनोत्सुकानां गता-गतानां भावदर्शनेन अनेन यथा भगवान् आगमिष्यतीति सम्भाव्य पथिस्थितोऽसौ भगवता प्राप्त इति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ण) न मे प्रिय इति। चतुर्वेदी चतुर्वेदनिरतोजनः मे मम न प्रिय इति पठित्वा अवतीर्य्य तदुपकाशमेत्य इत्यर्थः अयं सनातनः दोर्भ्यां बाहुभ्यां परिरब्धः आलिङ्गितः। देवेनेति शेषः।

वार्त्ताहारः। ततस्तत्रैव काऽपि किंवदन्ती (त) श्रुता।

राजा। काऽसौ।

वार्त्ताहारः।

पुरुषोत्तममेत्य तैः पुनर्गमयित्वा कतिचिद्दिनान्यपि।
रमितैः प्रभुणैव तद्गिराप्यथ वृन्दावनमेव गंस्यते॥ (थ)

राजा। किं देवेन सहैव वा किं पश्चात्।

वार्त्ताहारः। पश्चादेव भविष्यति। यतो वाराणसीत एकाकिनैव भगवता चलितमिति दृष्टम्। अन्यदपि तत्र किमपि श्रुतम्।

सार्वं। किं तत्।

वार्त्ताहारः। कालेन वृन्दावनकेलिवार्त्ता
लुप्तेति तां ख्यापयितुं विशिष्य।
कृपामृतेनाभिषिषेच देव-
स्तत्रैव रूपञ्च सनातनञ्च॥ (द)

(त) किंवदन्तीं जनरवः किंवदन्ती जनश्रुतिरित्यमरः।

(थ) पुरुषोत्तममिति। तैः भगवत्सहचरैरिति भावः पुरुषोत्तमं श्रीक्षेत्रम् एत्य आगत्य कतिचित् दिनानि अपि गमयित्वा यापयित्वा प्रभुणा रमितैः कृतकेलिभिरित्यर्थः सद्भिः अथ अनन्तरं तस्य प्रभोः गिरा वचसा एव वृन्दावनं गंस्यते गन्तव्यम्।

(द) कालेनेति। कालेन वृन्दावनकेलिवार्त्ता वृन्दावनविहारकथा देवस्येति शेषः लुप्ता भविष्यतीति शेषः इति हेतोः देवः तां वार्त्तां विशिष्य ख्यापयितुं प्रकटयितुं यथा न लुप्ता स्यादिति भावः कृपामृतेन दयावृष्टिना तत्रैव वृन्दावने एव रूपञ्च सनातनञ्च भ्रातराविति

रामानन्दः। समुचितमेवैतत्।

नेपथ्ये। दूरतो जयजयेत्युच्चैः कोलाहलः।

सर्वे। आकर्ण्य। अये! समागत इव भगवान् श्रीकृष्ण-चैतन्यः। यदयमपूर्व एव कोलाहलः श्रूयते।

पुनर्नेपथ्ये। अद्यास्माकं सफलमभवज्जन्म नेत्रे कृतार्थे
सर्वस्तापः सपदि विरतो निर्वृतिं प्राप चेतः।
किं वा ब्रूमो बहुलमपरं यस्य जन्मान्तरं नो
वृन्दारण्यात् पुनरुपगतो नीलशैलं यतीन्द्रः॥ (ध)

राजा। किमपरं विलम्बध्वे तत्रैव गच्छाम। इति सर्वे निष्क्रान्ताः।

ततः प्रविशति श्रीकृष्णचैतन्यस्तत्कालोपनतौ परमानन्दपुरीस्वरूपौ च। परितो दिदृक्षोपनताः काशीमिश्रादयश्च।

श्रीचै। पुरीश्वरं प्रति। स्वामिन्!
तीर्थद्वयं यदपि तुल्यमिदं महान्तः
काश्यादयोऽपि पुरतः कलुषापहारि।

शेषः अभिषिषेच स्थापयमासेत्यर्थः तौ भगवतो वृन्दावनलीलां प्रकटयिष्यत इति भावः। उपजातिवृत्तम्।

(ध) अद्येति। अद्य अस्माकं जन्म सफलम् अभवत्, नेत्रे कृतार्थे अभूतामिति शेषः। सर्वः समग्रः तापः मनोदुःखमित्यर्थः ... झटिति विरतः निवृत्तः। चेतः चित्तं निर्वृतिं सन्तोषं ...। किंवा अपरं बहुलं ब्रूमः कथयामः, यस्य अपलोकय नः ... जन्मान्तरं पुनर्जन्मेत्यर्थः अभूदिति शेषः। सः यतीन्द्रः देवः ... पुनः नीलशैलम् उपगतः उपस्थितः। मन्दाक्रान्ताछन्दः।

(न) तीर्थद्वयमिति। यदपि यद्यपि कलुषापहारि पापनाशकम् इदं तीर्थद्वयं युवयोरुभयं तुल्यमित्यर्थः तथा अस्माकं तथा काश्या-

आनन्ददाः किल तथाऽपि महान्त एव
यद्युष्मदीक्षणसुखं हि सुखायते नः॥ (न)

अतो हि त्वादृशां सङ्गस्तीर्थान्तरसेवनादपि परमो रम्य इति श्रीप्रमेवायातम्।

पुरीश्वरः। अस्ति तादृशं नो भागधेयम्। यदतिकालं भगवद्विरहदवदहनेन (प) न दग्धाः स्मः।

सत्वरमुपसृत्य सार्वभौमरामानन्दौ दण्डवत्प्रणमतः। श्रीचैतन्यः तावालिङ्गति।

काशीमिश्रः। स्वामिन्! जगन्नाथवल्लभावकाशानन्तरं श्रीजगन्नाथः दिदृक्षिषुरपि (फ) भगवन्तं प्रतीक्षते तत्त्वरितमेव तमवलोकयन्तु।

श्रीचै। एहि पुरीश्वर! एहि। इति सर्वैः सह निष्क्रान्तः।

इति निष्क्रान्ताः सर्वे।

इति मथुरागमनो नाम नवमोऽङ्कः।

इयः वाराणसीप्रभृतयः महान्तः महान्ति तीर्थानीत्यर्थः, तथापि महान्त एव जनाः आनन्ददाः आनन्ददायिन एव, यत् यतः युष्माकम् ईक्षणसुखं दर्शनजनितः सन्तोषः नः अस्मान् सुखायते सुखीकरोति। वसन्ततिलकं वृत्तम्।

(प) अतिकालं दीर्घकालम्। भगवतो विरह एव दवदहनः दावाग्निः तेन।

(फ) जगन्नाथेति। जगन्नाथस्य ये वल्लभाः प्रियाः सेवका इत्यर्थः, तेषाम् अवकाशानन्तरं सेवावसरात् परम्। दिदृक्षिषुः द्रष्टुमिच्छुः।

# दशमोऽङ्कः ।

ततः प्रविशति कश्चिद्वैदेशिकः ।

वैदेशिकः । श्रुतं मया प्रत्यब्दमेव गुण्डिचासमये अद्वैताचार्य्यादयः सर्वे श्रीकृष्णचैतन्यदर्शनार्थं गच्छन्ति । तेषामभिभावकतया शिवानन्दनामा कश्चित्तस्यैव भगवतः पार्षदो वर्त्मनः कण्टकायमानानां घट्टपालानां घट्टदेयादिनिम्नविघ्ननिवारक आचाण्डालमपि प्रतिपाल्य नयति तदहमपि तमनुसन्दधामि यथा तस्य सङ्ग एव गम्यते । इति कतिचित्पदानि गत्वा । अये ! पुरतोऽयं समीचीनो (क) जन आलोक्यते तदयमेव प्रष्टव्यः । इत्युपसर्पति ।

ततः प्रविशत्यद्वैतसेवकः कश्चिद्गन्धर्वनामा ।

गन्धर्वः । अये ! नियुक्तोऽस्मि स्वामिनाऽद्वैतेन । यथा

आयातः पुरुषोत्तमस्य गमने कालः शुभोऽयं वयं
यामः सत्वरमेव सम्प्रति शिवानन्दस्त्वया भण्यताम् ।
प्रस्थानस्य दिनं विधाय लिखतु क्वैकत्र सर्वे वयं
गच्छन्तः सहसा भवेम मिलिताः पश्चात्पुरो भावतः ॥ (ख)

(क) प्रत्यब्दमेव प्रतिवर्षमेव । अभिभावकतया अध्यक्षतया । वर्त्मनः मार्गस्य । घट्टपालानां शुल्कग्राहिणाम् । घट्टदेयादिनिम्नविघ्ननिवारकः शुल्कदानादिविषयकविघ्नहारक इत्यर्थः । प्रतिपाल्य रक्षित्वा । अनुसन्दधामि अन्विष्यामि । समीचीनः भद्रः ।

(ख) आयात इति । पुरुषोत्तमस्य गमने अयं शुभः कालः

तदहमुपैमि । इति परिक्रामति ।

वैद्ये । उपसृत्य । भ्रातः ! क्व यासि ?

गन्ध । आयात इत्यादि पठति ।

वैद्ये । सङ्कर्षमात्मगतम् । यत् श्रुतं मया तदवितथमेव । तथाऽपि पृच्छामि । प्रकाशम् । भ्रातः ! अपरिचितं (ग) प्रतिपाल्य स किं नयति ।

गन्ध । भ्रातः ! कुक्कुरोऽपि तेन प्रतिपाल्य नीतोऽस्ति किं पुनर्मानुषः ।

वैद्ये । भ्रातः ! कथय कीदृशं तत् ।

गन्ध । भगवतो मथुरागमनात् पूर्वमेकस्मिन्नब्दे सर्वेषु परःसहस्रेषु लोकेषु चलितवत्सु कश्चित् कुक्कुरोऽपि रोपितयाऽऽत्मेच्छकेच्छः शिवानन्दनिकटे चलितः । शिवानन्दोऽपि सङ्गे सङ्गे चलन्तमालोक्य सम्यगमेवानुसन्धत्ते । प्रतिवसति समयेऽनुच्छिष्टमेवान्नं तस्मै प्रयच्छति । यत्र नद्यादिपारं तत्र तदर्थं पृथक् यथेष्टमातरं दत्वा नावमारोहयति । सोऽपि तदनुपदमेव प्रत्यहं चलति । एवं वर्त्मनस्त्रिभागपर्य्यन्तं गते कुत्रापि दिवसे तन्न्यमन्नं

आयातः उपस्थितः । वयं सत्वरमेव यामः गच्छामः, सम्प्रति त्वया शिवानन्दः भवताम् उच्यताम् । प्रस्थानस्य गमनस्य दिनं विधाय स्थिरीकृत्य विषयः स इति शेषः, यत् वयं गच्छन्तः गमनकारिणः कदा यस्मात् पुरोभावतः अग्रतः इत्यर्थः मिलिताः समवेताः भवेम । शार्दूलविक्रीडितं वृत्तम् ।

(ग) अवितथं सत्यम् । अपरिचितम् उदासीनम् ।

विस्मृत्य भृत्येन न दत्तं पश्चात्तमवलोक्य षष्ठी पश्य शुने भक्ष्यं न दत्तमित्यनुतपता स्वयमितस्ततो नामग्राहमाह्वयतापि न तस्य दर्शनं लब्धम्। तदवधि पुरुषोत्तमपर्यन्तमेव न दृष्टः। पश्चान्मनःकष्टतरमेवास्य जातम्। तदनु दैवगत्या पुरुषोत्तमे समुत्तीर्णे तमेव श्वानं जलधितीरोपकण्ठमेकाकिन उपविष्टस्य भगवतश्चैतन्यस्य समीपे दृष्ट्वा शिवानन्दः सापराधमिव प्रणम्य दूरे स्थितोऽवलोकयति। भगवान् जगन्नाथप्रसादनारिकेलशस्यं खण्डशः प्रक्षिप्य ददाति कृष्ण ब्रूहीति च वदति स च एकैकं भक्षयति कृष्ण कृष्णकृष्णेत्यपि वदति तदपूर्वमालोक्य शिवानन्दः पुनस्तं प्रणम्य स्वापराधं क्षमापयति स्म। पुनस्तदवधि सोऽपरेण न केनाप्यदृश्यत। मन्ये तेनैव शरीरेण कृपान्तरं लब्ध्वा लोकान्तरं (घ) प्राप्तः।

वेदे। भ्रातरद्य मे शुभो दिवसः। यदियं श्रीकृष्णचैतन्यकथा कर्णातिथिर्जाता। यो देवः कुक्कुरमपि भग-

(घ) रोपितेति। रोपिता जनिता याहच्छिकी स्वैच्छिकी इच्छा यस्य तथाविधः। सश्रद्धं सयत्नम्। प्रतिवसति प्रत्यावासम्। तस्मै कुक्कुराय। नद्यादिपारम् अस्तीति शेषः। यथेष्टं शुल्कप्राहिणामभिमतमित्यर्थः आतरं पारशुल्कम्। अनुपदमेव पश्चादेव। अनुतपता शिवानन्देनेति शेषः। तस्य कुक्कुरस्य। नष्टः इः असौ कुक्कुर इति शेषः। मनःकष्टतरं मनसः क्षोभातिशयः अस्य शिवानन्दस्य। श्वानं कुक्कुरं जलधितीरोपकण्ठं समुद्रतटसमीपे। स च कुक्कुरः। स कुक्कुरः। लोकान्तरं स्वर्गम्।

वन्नाम ग्राहयामास तस्य मृल्लोकं प्रति यत् क्षपा भविष्यति तत् किमुत। तद्‌भ्रातः! पथि गच्छतामेषां वर्त्म कण्टक-भूता घट्टपालाः कीदृशं व्यवहरन्ति।

गन्ध। भ्रातः! श्रूयताम्।

प्रभावादेव देवस्य प्रत्यब्दमनुगच्छताम्।

यातायातसुखं भूरि सर्वेषामेव निश्चितम्॥ (ङ)

तथाच क्षपनाब्दे (च) कष्टञ्च भवति।

वैदे। कीदृशं तत्।

गन्ध। क्षपनाब्दे सर्वेषु महीश्वरप्रभृतिषु परःसहस्रेषु जनेषु चलितेषु सकलजनाभिभावकेन शिवानन्देनापि सपरिकरेण चलितम्। स एव प्रतिघट्टं महीश्वरादिगण-वर्जं यावन्तो गच्छन्ति तावतामेव घट्टदेयस्य प्रतिभवी भूत्वा स्वयमेव जनं प्रति यत्र यन्नगति तस्य निर्णयानुरूपं परिच्छेद्य दत्वा याति। लोकाः सुखं गच्छन्ति। एवं गच्छत्सु सत्सु रे मुणाजनपदे घट्टपालानामधिकारी कश्चित् गजपतेरमात्यो गजपतिमश्वाराजी दक्षिणां दिश-मीयुषि स्वतन्त्रः सन् तत्रैवागतः। तेन दुरात्मना लङ्घित-मर्य्यादेन करं वर्द्धयित्वा प्रत्येकं जनान् विगणय्य गताना-मब्दानामपि तत् क्रमेणैव लेखयित्वा पुञ्जीभूतं शुल्कमा-

(ङ) प्रभावादिति। देवस्य भगवतः प्रभावादेव प्रत्यब्दं प्रतिवर्षम् अनुगच्छतां सर्वेषां निश्चितं भूरि यथेष्टं यातायातसुखं जायते इति शेषः।

(च) क्षपन कुत्सित् अब्दे वर्षे।

दातुं शिवानन्दः काष्ठनिगडेन बद्धः । तद्बन्धने सर्वं एव सर्वं एव महेश्वराद्यः परमोद्विग्ना अकृताह्निका (क) एव तस्थुः ।

वेद्दे । ततः ।

गन्ध । ततो रात्रेर्यामद्वये गते तेनैव पामरेण शिवानन्दो यष्टिधारकेण केनचिदनुचरेणाऽऽजुहुवे । स तदानीं परमोद्विग्न आसीत् । कदाचिदयं प्रहरतीति चैतन्यचरणं स्मृत्वा वल्लभेन सह तत्पुरत ईयिवान् । अनन्तरं सुप्तोत्थि दीपिकाधारिभिर्बहुभिः परिवृतं वीक्ष्य विभयाञ्चकार । अनन्तरम् अमात्येन पृष्टः । अये ! त्वं सपरिकरः (ख) समायातोऽसि । अनेनोक्तम् । अथ किम् । पुनः स ऊचे । त्वं कस्य लोकः । अनेनोक्तम् । श्रीकृष्ण-

(क) महेश्वरप्रभृतिषु अद्वैतप्रमुखेष्वित्यर्थः । सपरिकरेण सपरिच्छदेन । स एव शिवानन्द एव प्रतिभूः प्रतिशुल्कस्थानम् । यावन्तः जना इति शेषः । चट्टदेयस्य शुल्कदानस्य प्रतिभवो प्रतिभूः । परिच्छेद्य स्थिरीकृत्य । गजपतेः प्रतापरुद्रस्य । ईयुषि गतवति । स्वतन्त्रः स्वाधीनः तेन अमात्येन । वञ्चितमर्यादेन अतिक्रान्तशिष्टाचारेण । तत्क्रमेण शुल्कवर्द्धनक्रमेण । पुञ्जीभूतं राशीभूतम् । काष्ठनिगडेन दारुशृङ्खलेन । महेश्वराद्यः अद्वैताद्यः । अकृताह्निकाः आह्निकव्यापारमकुर्वन्तः ।

(ख) यामद्वये प्रहरद्वये । पामरेण मूर्खेण । आजुहुवे । स शिवानन्दः । वल्लभेन केनचिदनुचरेण तत्पुरतः तस्य अमात्यस्य पुरतः अग्रतः । सुप्तोत्थितम् अमात्यमिति शेषः । विभयाञ्चकार अत्यन्तं भयं प्राप । परिकरः परिवारः परिच्छदो वा ।

चैतन्यस्य। पुनस्तेनोक्तम्। त्वं चैतन्यस्य पश्य जगन्नाथस्य जगन्नाथचैतन्ययोः को महान्। अनेनोक्तम्। मम तु कृष्णचैतन्य एव महान् इत्याकर्ण्य प्रीतिसुमुखो भूत्वा सापराध इव अये! मया स्वप्नो दृष्टः श्रीकृष्णचैतन्यो मामुक्तवान् मदीयो लोकस्त्वया बद्धोऽतित्वरितमेवमुच्यतामिति तदयमपराधो मे क्षन्तव्यः। तव किञ्चिदपि दातव्यं नास्ति सुखेन प्रातरुत्थाय सर्वैः सह गम्यतामित्युक्त्वा दीपिकाधारिणौ द्वौ उक्तवान्। अस्य परिकरो यत्र वर्त्तते तत्रायं स्थाप्यतामिति तथा याते तदा सर्वेऽप्यदीश्वराद्य आह्निकमारब्धवन्तः।

वैद्य। अहो! विचित्रैव चैतन्यदेवस्य करुणाप्रभाव ऐश्वर्य्यञ्च।

गन्ध। त्वं कुतोऽसि ?

वैद्य। अहमुत्तरराढतः।

गन्ध। कथमेकाकी।

वैद्य। नरहरिदासादिभिरहं प्रेषितः।

गन्ध। किमर्थम्।

वैद्य। कदाऽसौ पुरुषोत्तमं गन्तेति (अ) ज्ञातुम्।

गन्ध। तदिहैव महीश्वरालयनिकटे तिष्ठ यावदहं ज्ञात्वा समागच्छामि। अन्ये केचिद्‌व्रजजना भवानिव तत्र प्रजल्पतो महीश्वरेणैव स्थापिता मयैव सह यूयं यास्यथ इति।

---

(अ) असौ शिवानन्दः गन्ता गमिष्यति।

वेदे । कथं तेषु भवदीश्वरस्य (ञ) तादृशानुग्रहो जातः ।

गन्ध । तेष्वेकः परममधुरो लोकलोचनरसायनमिव नवीनवया रमणीयरूपः । सहजावतीर्णश्रीकृष्णप्रेमरस-बाह्यान्तरसरसः श्रीनाथनामा द्विजकुलचन्द्रस्तमतिलोभनीयं दृष्ट्वा मदीश्वरः परमं पिप्रिये । उक्तञ्च । मया रहसि श्रीकृष्णचैतन्यं भवान् दर्शयिष्यते माऽन्यसङ्के गन्तव्यमिति । गृहतस्तदनुरोधेन मासमारभ्य दशानामेव योगक्षेमं ( ट ) करोति ।

वेदे । भवत्वहमिहैव स्थित्वा भवन्तं प्रतीक्षे ।

गन्ध । अहमपि शिवानन्दमनुसर्पामि । इति उभौ निष्क्रान्तौ । विष्कम्भकः । ततः प्रविशति शिवानन्दस्तत्सङ्गे शिया-श्रवः ( ठ ) कियन्तोऽन्ये च ।

शिवा । तमेकं प्रति । अये ! त्वं कुतोऽसि ।

सः । महात्मन् ! गोवर्द्धनदासेनाहं त्वत्समीपं प्रेषितः ।

शिवा । आं ज्ञातम् । रघुनाथदासोद्देशार्थं गमिष्यति भवान् ।

---

(ञ) तेषु दशसु जनेषु । भवदीश्वरस्य अद्वैतस्य ।

(ट) परममधुरः अतिसौम्याकृतिः । लोकानां लोचनयोः रसा-यनं प्रीतिप्रदः । सहजेति सहजेन स्वाभाविकेन अवतीर्णेन उप-स्थितेन श्रीकृष्णप्रेमरसेन बाह्ये अभ्यन्तरे च सरसः आर्द्रः । अति-लोभनीयम् अतिप्रीतिकरं पिप्रिये प्रीतः । गृहतः स्वगृहात् स्वव्य-यादित्यर्थः तदनुरोधेन तस्य श्रीनाथस्य अनुरोधेन दशानामेव श्रीनाथ-तत्सहचराणामित्यर्थः योगक्षेमं सर्वनिष्पत्तिमित्यर्थः ।

(ठ) शिवाश्रवः शिवशिष्यः ।

वः । अथ किम् ।

शिवा । किं तदुद्देशेन ।

अद्व: । महाशय ! स त्वया परिचीयते ।

शिवा । श्रूयताम् ।

आचार्य्यो यदुनन्दनः सुमधुरः श्रीवासुदेवप्रिय-
स्तच्छिष्यो रघुनाथ इत्यधिगुणः प्राणाधिको मादृशाम् ।
श्रीचैतन्यकृपातिरेकसततस्निग्धः स्वरूपानुगो
वैराग्यस्य निधिर्न कस्य विदितो नीलाचले तिष्ठताम् ॥ (ड)

अपिच, यः सर्वलोकैकमनोऽभिरुच्या
सौभाग्यभूः काचिदकृष्टपच्या ।
यत्रायमारोपणतुल्यकालं
तत्प्रेमशाखी फलवानतुल्यम् ॥ (ढ)

(ड) आचार्य्य इति । आचार्य्यः यदुनन्दनः सुमधुरः सर्वमनोरमः श्रीवासुदेवस्य श्रीकृष्ण प्रियः प्रेमपात्रम् । तस्य शिष्यः रघुनाथ इति प्रसिद्धः अधिगुणः समधिकगुणशाली मादृशां प्राणाधिकः श्रीचैतन्यस्य कृपातिरेकेण अतिकृपया सततस्निग्धः निरन्तरस्नेहपात्रं स्वरूपस्य अनुगः अनुचरः वैराग्यस्य निधिः आधारः नीलाचले तिष्ठतां जनानां मध्ये कस्य जनस्य न विदितः न परिचितः ? अपितु सर्वस्यैव परिचित इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ढ) य इति । यः रघुनाथः सर्वेषां लोकानाम् एकमनसः अभिरुच्या स्पृहणीयेत्यर्थः काचित् अनिर्वचनीया सौभाग्यभूः सौभाग्यस्य भूमिः, यत्र सौभाग्यभुवि अयं तत्प्रेमशाखी तस्य श्रीकृष्णचैतन्यस्य प्रेमतरुः आरोपणतुल्यकालं रोपणमात्रेणेत्यर्थः अतुल्यम् अनुपमं यथा तथा फलवान् आसीदिति शेषः यत्र श्रीकृष्णचैतन्यप्रेम सफलं जातमिति भावः । इन्द्रवज्रावृत्तम् ।

तथाऽपि आगच्छ मयैव प्रतिपाद्य नेतव्योऽसि याव-द्दईतदेवाज्ञा न लभ्यते तावदेव विलम्बः। इति चिन्त-यति।

ततः प्रविशति गन्धर्वः।

गन्धर्वः। अये! अयमयं शिवानन्दः। तद्यावदुप-सर्पामि। इत्युपसर्पति।

शिवा। पुरोऽवलोक्य। अये! पुरतोऽयमाचार्य्यगोस्वा-मिनो भृत्य इव लक्ष्यते। तद्भद्रं जातं यदर्थं चिन्त्यते तदेव सम्भवम्।

उपसृत्य गन्ध। महाशय! आज्ञापयति भगवानर्हत-गोस्वामी भवन्तम्।

शिवा। अवहितोऽस्मि कथ्यताम्।

गन्ध। आयातः। इत्यादि पुनः पठति।

शिवा। अहमपि तदाज्ञां प्रतीक्षमाण एवास्मि।

गन्ध। विशेषः कश्चिदस्ति।

शिवा। कोऽसौ।

गन्ध। अस्मिन्नब्दे ज्ञानयात्रा च द्रष्टव्येति।

शिवा। अभीष्टमेवैतदखिलस्य तत्साधय भगवन्तो (ख) ज्ञाप्यन्ताम्। अयमहं दिनानि मिनोम्यथ वरधान्तिकं गच्छन्नस्मि। तावदहं श्रीवासपण्डितप्रभृतिभिर्निर्वर्त्तु तत्र गच्छामि त्वमपि साधय। इति निष्क्रान्ताः।

---

(ख) अखिलस्य सर्वजनस्य। साधय गच्छ। भगवन्तः अद्वैता-चार्य्यादयः।

ततः प्रविशत्यपटीक्षेपेण ( त ) सार्वभौमः ।

सार्वभौमः । यद्यपि भगवतोऽस्मिन्नर्थे नानुमतिर्जाता तथाऽपि हठादेवाहं वाराणसीं गत्वा भगवन्मतं ग्राहयामीति हठादेव तत्र गच्छन्नस्मि न जाने किं भवति । यद्यपि भगवत इच्छाधीनैव करुणा तथाऽपि करुणापरतन्त्रत्वं तस्येति कदाचित् करुणाऽपि स्वतन्त्रा भवतीति करुणाया एव साहाय्ये न यद्भवति तदेव भविष्यति । इति परिक्रामन् पुरोऽवलोक्य । अहो ! यदमी एकत्र समुपचिता अनेकशो नानादेशीया जनाः परतो दृश्यन्ते तदमी तैर्थिका एव । पुनर्निभाल्य । अये ! सर्वे एव गौड़ीयाः । पुनर्निरूप्य । , अयमयमद्वैताचार्य्यः । अयमयं नित्यानन्दावधूतः । अयमयं श्रीवासः । अयमयं हरिदासः । अयं गदाधरदासः । इमे गोविन्दघोषादयः । एष मकरध्वजः । एष काशीनाथः । एते नरहरिप्रमुखाः एते कुलीनग्रामीणा रामानन्दादयः । एते नित्यानन्दपार्षदा गौरीदासादयः । किं बहुना सर्वे चैतन्यपार्षदा एव समागच्छन्ति । तद्दूरमेव जातमद्यात्रैव स्थित्वा प्रत्येकमेते सम्भाषणीयाः (थ) । इत्युपसर्पति ।

---

(त) अपटीक्षेपेण पटी जवनिका तस्याः क्षेपः अपसारणं पटीक्षेपः स न भवतीत्यपटीक्षेपः तेन विना पटीक्षेपविलम्बः जवनिकान्तःस्थित्वैवेति भावः ।

( थ ) भगवतः श्रीकृष्णचैतन्यस्य यात्रा इति काशीगमने इति शेषः । भगवन्मतं श्रीकृष्णचैतन्यमतं ग्राहयामि तत्रत्यानिति भावः ।

ततः प्रविशन्ति भगवद्दर्शनार्थं प्रस्थिता अद्वैतादयः।

अद्वै। अये! पुरतः सार्वभौम इव दृश्यते कोऽयं?।

सार्व। उपसृत्याद्वैतं प्रणमति एवमन्यानपि। दूरे हरिदासं विलोक्य। कुलजात्यनपेक्षाय हरिदासाय ते नमः। (द)

हरिदासः। दूरेऽपसर्पन् सवाध्वसं प्रणमति।

अद्वै। सार्वभौम! भवद्भिः कथं श्रीकृष्णचैतन्यपदारविन्दस्य विच्छेद उरीकृतः। (ध)

सार्व। एवमेव। इति सर्वं कथयति।

अद्वै। हंहो! अद्यामेव सर्वैं विश्राम्यन्तु भट्टाचार्य्येण सह गोष्ठी कर्त्तव्या।

सर्वे। यथारुचितं भवद्भ्यः। इति यथायथं वासं कुर्वन्ति।

श्रीकान्तः। शिवानन्दं प्रति। भो मातुलमहाशय! अहं अग्रे यामि यदि वोऽनुमतिर्भवति।

शिवा। यथासुखं साधय।

श्रीका। प्रणम्य निष्क्रामति।

अद्वै। एहि भट्टाचार्य्य! एहि वासं (न) कृत्वा समये

---

कृष्णापरतन्त्रत्वं कृपाधीनत्वं तस्य श्रीकृष्णचैतन्यस्य। स्वतन्त्रा स्वाधीना समुपस्थिताः समवेताः। तैर्थिकाः तीर्थदर्शनागताः। गौड़ीया गौड़देशीयाः। वन्यापथीया आवपनीयाः।

(द) कुलेति। कुलं वंशः जातिः ब्राह्मणत्वादिः तदनपेक्षाय कुलं जातिञ्च अनपेक्ष्य हरेः श्रीकृष्णचैतन्यस्य दासः तस्मै ते तुभ्यं नमः।

(ध) उरीकृतः अङ्गीकृतः कोऽयं इत्यर्थः।

(न) वासम् अवस्थितिम्।

सर्वं श्रोतव्यम्। इति निष्क्रान्ताः।

ततः प्रविशतः स्वरूपगोविन्दौ।

स्वरू। श्रुतं गौड़तः सर्वेऽद्वैतादयः समागच्छन्ति।

गोविन्दः। सम्प्रति तान् मध्यवर्त्मनि परित्यज्य श्रीकान्तोऽधुनैव समायातः।

स्वरू। क्वासौ।

गोवि। महाप्रभुणा सह सङ्कथयन्नास्ते।

स्वरू। तदावामपि शृणुव। इत्युपसर्पतः।

ततः प्रविशति सुखोपविष्टः पुरीश्वरेण सह स महाप्रभुः कियद्दूरे श्रीकान्तश्च।

महा। श्रीकान्त! कथय के के समायान्ति।

श्रीका। प्रभो! सर्व एव त्वदीयाः। अस्मिन्नब्दे न कोऽपि तत्र वर्त्तते। अदृष्टश्रीचरणाश्च केचित्। (प)

स्वरू। उपसृत्य। जयति जयति महाप्रभुः।

महा। एह्येहि स्वरूप!। इति स्वसमीपमुपवेशयति।

श्रीका। स्वरूपं प्रणमति।

महा। श्रीकान्त! ततस्ततः के तेऽदृष्टपूर्वाः।

श्रीका। प्रभो अद्वैताचार्य्यस्य पुत्रा विष्णुदास-गोपालदासादयः। अन्यश्चाद्वैतसङ्गे कश्चिदखिलजन-प्रियः (फ) श्रीनाथनामा।

---

(प) कोऽपि भवदीय इति भावः। अदृष्टं श्रीचरणं भवत्पदारविन्दं यैः तेऽपि केचित् जनाः समायान्तीति शेषः।

(फ) अखिलजनप्रियः सर्वजनहृद्यः।

महा। कथमसौ शिवानन्दसङ्ग त्यक्का तत्सङ्गे (ब) आयाति।

श्रीका। तेनोक्तं (भ) मया निभृते भवान् महाप्रभोः समीपे नीत्वा तद्विशेषानुग्रहं ग्राहयितव्य इति तदाख्यासेन।

महा। शिवस्य स्वरूपं प्रति। श्रूयताम्।

अद्वैतोपायनमिदमतिस्वादुभावीति कार्य्यं
प्रेमैतस्मिन् किमपि भवताऽप्यत्र मैत्रीस्वरूपे।
त्वञ्चास्मिन् मङ्गरसुमधुरं भावमुद्भावयेथाः।
सर्वेषां हि प्रकृतिमधुरो हन्त तुल्येन योगः॥ (म)

उभौ। यथाऽऽज्ञापयति देवः।

महा। पुनः के।

श्रीका। वासुदेवापत्यं मातुलस्य पुत्रौ।

महा। तौ दृष्टपूर्वौ।

श्रीका। कनीयांस्तु यः सोऽदृष्टश्रीचरणः।

महा। पुरीश्वरं प्रति। स्वामिन्! तव दासः।

(ब) तत्सङ्गे तस्य अद्वैतस्य सङ्गे।

(भ) तेनोक्तं तेन अद्वैतेन उक्तम्।

(म) अद्वैतेति। अद्वैतस्य उपायनम् उपहारः इदं श्रीनाथरूपं वस्त्विति भावः अतएव अतिस्वादु अतिप्रियं भावि भविष्यति एतस्मिन् श्रीनाथे किमपि प्रेम कार्य्यं मयेति शेषः। भवतापि अत्र स्वरूपे मैत्री प्रेम इत्यर्थः कार्य्येति शेषः। हे स्वरूप! त्वञ्च अस्मिन् श्रीकान्ते मङ्गरं कल्याणकरं सुमधुरं भावं प्रीतिम् उद्भावयेथाः कुरु इत्यर्थः। हि यतः तुल्येन योगः सर्वेषां जनानां प्रकृत्या स्वभावेन मधुरः मनोरमः। मन्दाक्रान्तावृत्तम्।

श्रीका। प्रभो! एवमेव।

महा। ततस्ततः।

श्रीका। रामानन्दवसोरपत्यं एवमन्येऽपि।

महा। स्वामिन्! पुरीश्वर! हंहो! स्वरूप! अस्मिन्नब्दे एतेषां कृते स्वयमी मद्दर्शनं लप्स्यन्ते।

उभौ। स्वगतम्। अहो! कः सन्दर्भोऽस्य वचसः। भवतु स्वयमेव स्फुटिष्यति। (य)

महा। अस्मिन्नब्दे भूपालदर्शनमाचार्य्यस्य (र) भविष्यति।

श्रीका। देव! मया दूरादेवागतं तेन तदनभिज्ञोऽस्मि।

पुरीस्वरूपौ। स्वगतम्। अहो! अवगतं गतेऽब्दे अद्वैताचार्य्येण यद्भूपालः सम्भाषितस्तेन स एवाक्रोशोऽद्यापि (ल) भगवतो मनसि जागर्त्ति।

महा। पुरीश्वरवासुदेवचरितमेव मे रोचते।

पुरी। भाग्यवानेवासौ यस्य परोक्षेऽपि भगवन्तः प्रशंसन्ति।

नेपथ्ये कलकलः।

पुरी। आकर्ण्य। देव! उपसन्ना (व) एवामी। यदयं कोलाहलः श्रूयते।

(य) सन्दर्भः अभिप्रायः स्फुटिष्यति व्यक्तीभविष्यति।

(र) भूपालदर्शनं राजदर्शनम्।

(ल) अवगतं ज्ञातम्। आक्रोशः क्रोधः।

(व) उपसन्नाः उपस्थिताः।

मल्ला । गोविन्द ! भगवत्प्रसादमालां (अ) गृहीत्वा उपसर्पतु भवान् ।

गोविन्दः । यथाऽऽज्ञापयसि । इति निष्क्रान्तः ।

प्रविश्य वाणीनाथः । प्रणम्याञ्जलिं बद्धा । देव ! महा-प्रसादान्नादीनि भगवतः श्रीजगन्नाथस्य ।

मल्ला । वाणीनाथ ! साधु समयज्ञोऽसि यदधुनाऽद्वै-तादीनामागमनमाकलय्यैवं कृतवान् यावद्गोविन्द एति तावत् क्वापि समावेशय । (ब)

वाणी । तथा करोति ।

प्रविश्य काशीमिश्रः । भगवन् ! श्वः खलु भगवतः स्नानमहोत्सवः ।

मल्ला । मां जानामि । किन्तु भो मिश्र ! यथास्मिन्नब्दे आपामरमपि स्नानमहोत्सवं मदीयगौडीयाः सुखेन पश्यन्ति तथा कर्त्तव्यम् ।

काशी । स्वामिन् ! भूपतिनाऽऽदिष्टोऽस्मि अस्मिन्नब्दे मदीयावरोधादयः केऽपि देवस्नानं न द्रक्ष्यन्ति । ते यत्र चक्रवेष्टोपरि (स) स्थित्वा पूर्वं देवस्नानं पश्यन्ति तत्रैव सर्वे गौडीया आरोहणीयाः ।

(अ) भगवत्प्रसादमालां जगन्नाथप्रसादस्रजम् ।

(ब) समयज्ञः कालज्ञः । आकलय्य विविच्य । एति आगच्छति । समावेशय स्थापय ।

(स) मदीयावरोधादयः मदान्तःपुरिकावर्गं इत्यर्थः । चक्रवेष्टो-परि चक्रवेष्टं नाम प्रासादैकदेशः तदुपरि ।

महा । कथित तस्मै । (ङ)

पुनर्नेपथ्ये वाद्योत्थध्वनिः ।

पुरी । स्वामिन् ! चारगणेयं प्राप्ता अमी । (च)

महा । स्वरूप ! त्वमग्रतोऽभिगच्छ पश्चादहमपि । (छ)

स्वरू । यथाऽऽज्ञापयसि । इति निष्क्रान्तः ।

पुरी । स्वगतम् ।

आक्षेपोऽपि महानसौ प्रकटितः सम्प्रत्ययश्चादरो
भूयानेव विकाश्यते भगवताऽद्वैतं प्रति स्निह्यता ।
सौहार्दस्य स एवमेव महिमा देव स्वभावात् सतो-
र्बन्धूनां गुणदोषयोरपि गुणे दृष्टिर्न दोषग्रहः ॥ (ज)

महा । पुरीश्वर ! उत्तिष्ठ वयमप्यभिगच्छाम ।

पुरी । उत्तिष्ठन्तु गोस्वामिनः (ग)। इति पुरादभ्युपगच्छन्ति ।

(ङ) तस्मै भूपतये ।

(च) चारगणेयं तदाख्यं देयमित्यर्थः प्राप्ता उपनीताः अमी अद्वैतादयः ।

(छ) पश्चादहमपि अभिगच्छामीति शेषः ।

(ज) आक्षेप इति । अद्वैतं प्रति स्निह्यता भगवता सम्प्रति असौ महान् आक्रोशोऽपि क्रोधोऽपि प्रकटितः प्रकाशितः, आदरश्च भूयानेव महानेव विकाश्यते प्रकाश्यते । देवस्वभावात् सौहार्दस्य प्रणयस्य एवमेव स महिमा, यत् बन्धूनां सतोर्विद्यमानयोः गुणदोषयोरपि गुणे दृष्टिः, दोषग्रहः दोषस्य ग्रहणं न भवतीति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

(ग) गोस्वामिनः सर्वा जन्तूनां प्राणिनां स्वामिन इत्यर्थः अथवा इन्द्रियाणां स्वामिनः ।

ततः प्रविशति भगवत्प्रसादमालाबन्धनबद्धद्विगुणकूर्चो (घ) नृत्यानन्दनिर्भरोऽद्वैतः परितः कीर्त्तयन्तश्च अभितः शिवानन्दादयश्च। अद्वैतः दूरादागच्छन्तं महाप्रभुमालोक्य नृत्यन्नेव भूमौ पतति।

शिवा। स्वतनयं प्रति सर्वान् श्रावयित्वा। पश्य पश्य प्रिय-मयम्।

विद्युद्दामद्युतिरतिशयोत्कण्ठकण्ठीरवेन्द्र-
क्रीडागामी कनकपरिघद्राघिमोद्दामबाहुः।
सिंहग्रीवो नवदिनकरद्योतविद्योतिवासाः
श्रीगौराङ्गः स्फुरति पुरतो वन्द्यतां वन्द्यतां भोः! ॥ (ङ)

इति सर्वे भूमौ प्रणम्य पुनर्यावदुत्तिष्ठन्ति तावदेवाद्वैतगोष्ठी-प्रविष्टं (च) भगवन्तं पुनर्दिग्भिरन्वेषयन्ति शिवानन्दादयः।

निर्वर्ण्य।

(घ) भगवदिति। भगवतः जगन्नाथदेवस्य प्रसादमालायाः प्रसाद-सम्भूतस्य बन्धनेन लाभेन बद्धो द्विगुणो कूर्चो येन तथाभूतः।

(ङ) विद्युदिति। विद्युद्दाम्नां तड़िन्मालानां द्युतिरिव द्युति-र्यस्य तादृशः महातेजा इत्यर्थः अतिशयेन उत्कण्ठते इति तथोक्तः यः कण्ठीरवेन्द्रः सिंहेन्द्रः स इव क्रीड़या विलासेन मन्दं मन्दमित्यर्थः गच्छतीति तथाविधः। कनकपरिघवत् काञ्चनार्गलवत् द्राघिम्ना दीर्घत्वेन उद्दामौ उत्कटौ सुदीर्घावित्यर्थः बाहू यस्य तादृशः। सिंह-वत् ग्रीवा यस्य तथाभूतः। नवदिनकरस्य द्योतः प्रभा इव द्योतः यस्य तादृशं विद्योति विशेषेण दीप्यमानः वासः वसनं यस्य तथोक्तः रक्तवसन इत्यर्थः श्रीगौराङ्गः पुरतः अग्रतः स्फुरति राजते, भो जना! इति शेषः वन्द्यतां वन्द्यतां प्रणम्यतां प्रणम्यतां युष्माभिरिति शेषः। मन्दाक्रान्तावृत्तम्।

(च) अद्वैतगोष्ठीप्रविष्टम् अद्वैतगणमध्यवर्त्तिनम्।

अद्वैतचैतन्यदृढ़ोपगूहने
न कोऽपि किञ्चित् परिचेतुमीश्वरः ।
चैतन्यमद्वैतमितीक्षते जनो-
ऽद्वैतञ्च चैतन्यमितीक्षते परम् ॥ (छ)

पश्यत भोः ! अद्वैतमग्रे विनिधाय देवो
दिदृक्षया तस्य गतः पुरस्तात् ।
प्रवेशयत्येव निजाश्रमान्त-
र्विलम्ब्य सर्वे क्रमतो विशन्तु ॥ (ज)

इति सर्वान्निवार्य्य क्रमात् प्रवेशयन्ति । महाप्रभुरुपविश्य प्रत्येक-महैताद्दीन् यथायथमालिङ्गनसम्भाषणावलोकनादिभिरानन्द्य भगवत्प्रसादान्न श्रीहस्तेन सुष्टिमपूरं ददाति । अद्वैतादयो यथाक्रमं स्वह्णन्ति ।

भगवान् । भो भो अद्य नापरं भोक्तव्यं चक्रवेष्टोपरि सर्वै-रेव रजनीमुखे समारोढव्यं यथा सुखेन स्नानमहोत्सवो

।

सर्वे । यथाऽऽज्ञापयन्ति । इति निष्क्रान्ताः ।

(छ) अद्वैतेति अद्वैतचैतन्ययोः दृढ़ोपगूहने अन्योन्यगाढ़ालिङ्गने कोऽपि जनः किञ्चित् परिचेतुं प्रभिन्नतया ग्राह्यमिति भावः न ईश्वरः न समर्थः आसीदिति शेषः । तथाहि जनः चैतन्यम् अद्वैत-मिति ईक्षते पश्यति अद्वैतञ्च चैतन्यमिति अपरः ईक्षते पश्यति । इन्द्रवंशाछन्दः । तच्चेन्द्रवंशा प्रथमाक्षरे गुराविति तल्लक्षणात् ।

(ज) अद्वैतमिति । देवः दिदृक्षया प्रियजनदर्शनेच्छया तस्य अद्वैतस्य पुरस्तात् गतः सन् अग्रे प्रथमतः अद्वैतं विनिधाय स्वकृतस्य निजाश्रमान्तः स्वाश्रमाभ्यन्तरं प्रवेशयत्येव, अतः सर्वे भवन्तः विलम्ब्य क्रमशः क्रमेण विशन्तु प्रविशन्तु । उपेन्द्रवज्राछन्दः ।

स्वरू। भगवन्! स्वयमपि यथासमयाह्निकं कर्त्तुमर्हति।

भगवान्। यथारुचितं वः। इति पुरीस्वामिना सह निष्क्रान्तः।

स्वरू। काशीमिश्र! भूपालो राजधानीतः साम्प्रतमागत्य किं गुण्डिचानिकटे।

नेपथ्ये। आयातः।

काशी। गोस्वामिन्! यथाऽयं प्रस्तौति तथाऽऽगत इव लक्ष्यते।

स्वरू। तर्हि स्नानदर्शनं सुखेन भावि।

काशी। तत्त्वं जानामि। इति निष्क्रान्तः।

स्वरू। गोविन्द! एहि भगवन्तमनुगच्छावः। इति-निष्क्रान्तः।

ततः प्रविशति वडभीस्थो (भ) राजा पुरोहितश्च।

राजा। पुरोहित! अस्मिन्वडभ्यां मया इह स्थितेनैव स्नानं द्रष्टव्यम्। अन्यथा भगवतो गौराङ्गस्य सङ्कोचो भविष्यति।

पुरोहि। उचितमेवैतत्।

राजा। कः कोऽत्र भो आहूयतां काशीमिश्रः।

प्रविश्य काशीमिश्रः। अयमस्मि आज्ञापयतु देवः।

राजा। मिश्र!।

ये गौडीया इह भगवतः पार्षदास्तज्जना वा
तेषां ये वा तदनुगमिनो हन्त ये वा सभृत्याः।

(भ) वडभीस्थः प्रासादस्य उपरितनप्रकोष्ठस्थः।

(ञ) ये इति। गौडीया गौडदेशीयाः भगवतः श्रीचैतन्यस्य पार्षदाः सहचराः वा तज्जनाः तेषां परिजनाः तथा तेषां तज्जनानां

सर्वेऽप्यत्‌श्रीतनयसुहृदो यत्र यत्रोपविश्य
स्नानं पश्यन्त्यतिसुखममी सन्तु तत्रोपविष्टाः ॥(ञ)

काशी। महाराज! भगवदाज्ञया (ट) पूर्वमेव तथैव सम्पादितमस्ति।

राजा। सुविहितम्।

प्रविश्य कश्चित्पदातिकः कञ्चुकी। देव! देव्यो विज्ञापयन्ति। अस्माभिर्देवस्नानं द्रष्टुमागतं तथाभूदिति।

राजा। कथं नो भविष्यति इहैव स्थित्वा ताभिरपि द्रष्टव्यं पश्चायं तत्प्रकारोऽस्ति कल्पितः। ( ठ )

काशी। देव! पश्य पश्य।

स्नानालयस्याभिमुखं सुसौध-
मट्टं गताश्चन्द्रकराभिशुभ्रम्।
देवा इवैते विलसन्ति भक्ताः
सर्वे नभोमध्य इवोपविष्टाः ॥ ( ड )

---

ये वा अनुचरा इति शेषः ये वा तेषाम् अनुगामिनः अनुगताः सम्बन्धाः सकिङ्कराः इह येते आगता इति शेषः, सर्वे अप्यत् श्री-तनयसुहृदः यत्र यत्र उपविश्य स्नानं पश्यन्ति, अमी गौडीयाः तत्र तत्र अभिमुखम् उपविष्टाः सन्तु। मन्दाक्रान्तावृत्तम्।

(ट) भगवदाज्ञया भगवतः श्रीचैतन्यस्य आज्ञया आदेशेन।

(ठ) तत्प्रकारः तस्य व्यवस्था। कल्पितः निरूपितः।

(ड) स्नानालयस्येति। एते सर्वे भक्ताः भगवत इति शेषः स्नाना-लयस्य स्नानमण्डपस्य अभिमुखं सम्मुखस्थं चन्द्रकराभिशुभ्रं चन्द्रकिरण-व्याप्तमित्यर्थः सुसौधं सुष्ठु सुधया चूर्णेन धवलितमित्यर्थः अट्टं हर्म्यं गताः सन्तः देवा इव नभोमध्ये अन्तरीक्षमध्ये उपविष्टा इव विल-सन्ति विराजन्ते। इन्द्रवज्रावृत्तम्।

राजा। साधु प्रवेशिता इमे श्रीकृष्णचैतन्यपार्षदाः। तदधुना साधयतु भवान् अगवार्थविजयसमयो नेदीयानिव (ढ) जातस्तदुचितकर्मणि नापरं विलम्बस्व।

कायी। यथाऽऽज्ञापयति। इति निष्क्रान्तः।

ततः प्रविशन्ति भक्तिनः।

भक्तिनः। जयदु जयदु महाराओ। (१)

राजा। देवीं प्रति। एहि देवि! एहि कृतार्थीकुरु जनुः। (ण) इति सहासमुपवेश्य। देवि! पश्य पश्य।

इमे चैतन्यदेवस्य पार्षदा विश्वपावनाः।
कियतैव विलम्बेन तमप्यालोकयिष्यसि॥ (त)

तदेतान् प्रणम।

देवी। प्रणमति।

राजा। पश्य पश्य महदिदमाश्चर्यम्।

महाज्यैष्ठीयोगे भवति भगवद्देवकुलगा
पता कोदृक्षस्तोत्यतिसुविदितोऽयं जनरवः।
इति श्लोकेशा युगपदभिपश्यन्ति त इमां
स्थिवल्लीं तत्स्त्रामिव तुहिनभानोरिव वपुः॥ (थ)

---

(१) जयतु जयतु महाराजः।

---

(ढ) साधयतु गच्छतु। नेदीयान् अतिसन्निहितः।

(ण) जनुः जन्म अनुर्जननजन्मानी इत्यमरः।

(त) इमे इति। इमे चैतन्यदेवस्य पार्षदाः सहचराः विश्वपावनाः जगत्पवित्रकारिणः, कियता अल्पेनैव विलम्बेन तमपि चैतन्यदेवमपि आलोकयिष्यसि।

(थ) महेति। महाज्यैष्ठी नाम योगः तस्मिन् भगवतः जग-

नन्दिनी। देव सच्चंज्जेव एसा जणस्सुइ (१)।

राजा। पश्य स्वयमपि। इति उल्लसन्तीं पताकां दर्शयति।

नेपथ्ये कोलाहलध्वनिः। (३)

राजा। आकर्ण्य। देवि! पश्य पश्य जगन्नाथदेवस्य विजयसमयो जातस्तदाकलयामि श्रीकृष्णचैतन्यदेवस्यागमनम्। इति तथा कृत्वा सहर्षम्। अयमयं श्रीकृष्णचैतन्यः। पश्य पश्य।

अविरलजनसङ्घे सर्वमूर्द्धोर्द्ध्ववर्त्ती
स्फुरति भगवतोऽयं मण्डलः श्रीमुखस्य।
तरदुरुविधुरस्ये वारिराशाविवोर्म्मेः
कलय किमपि हेम्नः पद्ममुद्दण्डनालम्॥ (४)

देवी। अज्जउत्त! अम्हाणं जसवादो जसवान्तरमापडिदं। जदो जअणाहदंसणत्थिणीणं गोरचन्ददंसणं जादं (२)।

(१) देव! सत्यमेव एषा जनश्रुतिः।

(२) आर्य्यपुत्र! अस्माकमुत्सवात् उत्सवान्तरमापतितम्। यतो जगन्नाथदर्शनार्थिनीनां गौरचन्द्रदर्शनं जातम्।

नाथस्य देवकुलं देवमन्दिरं गच्छतीति तादृशी पताका उद्गच्छन्ती उद्गच्छन्ती भवति इत्ययं जनरवः सुविदितः सुविख्यातः इति श्रद्धया उत्सेवा उत्कृष्टिप्रमनसाः ते जनाः युगपत् इमां पताकां तुहिनभानोः कन्दलमिव वपुः शरीरं बिभ्रतीं तस्य देवकुलस्य जिह्वामिव युगपत् अभिपश्यन्ति अवलोकयन्ति। पिच्छरितोत्तमम्।

(३) काहलध्वनिः काहलो वाद्यभेदः तस्य ध्वनिः।

(४) अविरलेति। अविरलानां निविडानां जनानां सङ्घे सङ्घ-

मञ्जातेन । महः पूरः सद्यो विषयरससंशोषणविधौ
प्रचण्डो मार्त्तण्डव्यतिकर इवास्य प्रसृमरः ।
अहार्य्यं माधुर्य्यं भगवदनुरागामृतकिरो
महावर्ष्मा कोऽयं कनकनिधिरक्ष्णोः पथि गतः ॥ (न)

अपि च । निर्मञ्छयानि विधुभिर्मुखबिम्बमस्य
नीराजयानि च रुचं कनकप्रदीपैः ।
सम्पूजयानि पदपद्ममसुप्रसूनैः
प्रत्याददानि करुणामपि लक्षदेहैः ॥ (प)

इति प्रणमति ।

---

मध्ये सर्वेषां मूर्द्धाम् ऊर्द्ध्ववर्त्ती भगवतः श्रीचैतन्यस्य अयं श्रीमुखस्य मण्डलः स्फुरति राजते । तरन्तः सन्तरन्तः शुक्लविधाः बहवः हंसा यस्मिन् तादृशे वारिराशौ समुद्रे किमपि अनिर्वचनीयम् उच्चैः महत् उद्दण्डनालम् उन्नतः दण्ड इव नालः यस्य तादृशं हेम्नः स्वर्णस्य पद्मं कमलमिव कलय पश्य । शुभ्रवस्त्रावृतानां पार्षदानां हंससाम्यं, तत्प्रदेशस्य वारिराशिसाम्यं भगवन्मुखस्य पद्मसाम्यं तदीयगलदेशस्य नालसाम्यञ्चेति बोध्यम् । मालिनीवृत्तम् ।

(न) महःपुर इति । सद्यः झटिति विषयाः स्रक्चन्दनादयः तेषु रसस्य अनुरागस्य संशोषणविधौ सम्यक् शोषणव्यापारे प्रचण्डो मार्त्तण्डव्यतिकर इव सौरं तेज इव अस्य देवस्य प्रसृमरः प्रसर्पन् विस्तारं गच्छन्नित्यर्थः महसां तेजसां पूरः राशिः लक्ष्यते इति शेषः । अहार्य्यं हर्तुमशक्यम् अनुपमेयमित्यर्थः माधुर्य्यं मनोमोहनभावः दृश्यते इति शेषः अतः भगवतः ईश्वरस्य अनुराग एव अमृतं तत् किरति वर्षतीति तथाभूतः महद्वर्ष्म विग्रहः शरीरं यस्य तादृशः कोऽयं कनकनिधिः काञ्चनरत्नम् अक्ष्णोः नयनयोः पथि गतः उपस्थितः । शिखरिणीवृत्तम् ।

(प) निर्मञ्छयानीति । अस्य देवस्य मुखबिम्बं मदनमञ्जुलं

राजा। यथार्थोऽयमनुभवो भवत्याः। तदाकलय श्रीजगन्नाथोऽपि स्नानालयमध्यारूढ़ः।

देवी। आलोक्य प्रणमति।

नेपथ्ये पुनः कोलाहलध्वनिः।

राजा। देवि! पश्य पश्य श्रीजगन्नाथस्नानम्।

देवी। उभयतो दृष्टिमाधाय। अज्जउत्त! महन्तं जेव कोदूहलं (१)।

राजा। किं तत्।

देवी। संस्कृतेन।

अन्योऽन्याभिमुखस्थितौ विनिमिषावन्योन्यसन्दर्शने
स्नानाम्भोनयनाम्भसोः स्नुततमू दुर्वारया धारया।
कारुण्यैकमहानिधी भवभयप्रध्वंसनैकौषधी
देवौ तुल्यरुची पुरो विलसतः श्यामगौरावपि॥ (क)

---

(१) आर्य्यपुत्र! महदेव कौतूहलम्।

---

विधुभिः चन्द्रबिम्बैः निर्मञ्छयाति नीराजयानि, कनकप्रदीपैः यस्य रूपं कान्तिं नीराजयानि अम्बुरुहैः पाथोरुहैः यस्य देवस्य पादपद्म चरणकमलं सम्पूजयानि पयोदैः कलसंवलितपयोरैरपि यस्य देवस्य वपुषां लक्ष्मी प्रक्षालयानि नभो। वसन्ततिलकं वृत्तम्।

(क) अन्योन्येति। कारुण्यैकमहानिधी कारुण्यस्य दयायाः एकौ अद्वितीयौ महानिधी महान्तौ आधारौ भवभयस्य संसारभीतेः प्रध्वंसने हरणे एकौषधी अद्वितीयभेषजौ तुल्यरुची श्यामगौरावपि श्यामः एकः गौरः अपरः तथोक्तावपि तुल्या रुचिः दीप्तिर्ययोः तादृशौ देवौ अन्योन्यस्य परस्परस्य अभिमुखस्थितौ सम्मुखवर्त्तिनौ अन्योन्यस्य परस्परस्य सन्दर्शने विनिमिषौ निर्निमिषौ तथा स्नानाम्भो

राजा । सत्यमेतत् ।

देवी । अज्जउत्त ! णिव्वूढो (ब) सिणाणमहूसवो देवस्स । जदो दक्खिणामुह-विलोअण-क्खणे अस्सदो सरइ गोर-चन्दमा (१)

राजा । एवमेव ।

अग्रतोऽस्य विरलायते जनः
पृष्ठतस्त्वविरलायते पुनः ।
पार्षदास्तु परितो भुजाभुजि
श्रद्धया विदधति स्म मण्डलम् ॥ (भ)

नेपथ्ये । अनवसरतामभ्यायाते प्रभुर्जगदीश्वरे
विरहविधुरां कृत्वावस्थां जगाम यतीश्वरः ।

---

(१) आर्य्यपुत्र ! निर्व्यूढः स्नानमहोत्सवो देवस्य । यतो दक्षिणामुखविलोकनक्षणे अन्यतः सरति गौरचन्द्रमाः ।

नयनाम्भसोः स्नानजलनेत्रजलयोः दुर्वारया वारयितुमशक्यया धारया प्लुता अभिषिक्ता तनुः शरीरं ययोः तथाभूतौ सन्तौ पुरः अग्रतः विलसतः विराजतः । शार्दूलविक्रीडितं वृत्तम् ।

(ब) निर्व्यूढः समाप्तः ।

(भ) अग्रत इति । अस्य देवस्य चैतन्यस्य अग्रतः जनः विरलायते विरल इवाचरति अल्पो दृश्यते इति भावः, पुनः किन्तु पृष्ठतस्तु अविरलायते जन इति शेषः बहुर्दृश्यते इति भावः । पार्षदास्तु पार्श्वचराश्च परितः समन्तात् अस्य देवस्येति शेषः श्रद्धया अनुरागेणेत्यर्थः भुजाभुजि हस्ताहस्ति मण्डलं विदधति कुर्वते स्म । रथोद्धतावृत्तम् ।

(म) अनवसरतामिति । प्रभुर्यतीनामीश्वरः श्रीचैतन्यः जगदीश्वरे

भवति विशदप्रेमानन्दावतारतया यदा
अभिनिविशते यस्मिन् तस्मिन् तदैव स तन्मयः ॥ (म)

राजा । आकर्ण्य । अये ! निश्चितमिदमुक्तं काशीमिश्रेण । तत् पुनराकलयामि (य) वाक्यशेषम् । इति सावधानस्तिष्ठति । पुनस्तत्रैव ।

स्नानं नो तुलसीनिषेचनविधिर्नो चक्रसन्दर्शनं
नो नामग्रहणञ्च नो नतिततिर्नो हन्त भिक्षाऽपि नो ।
श्रीनीलाचलचन्द्रमोऽनवसरव्याजात् स्वयैवेच्छया
लोकस्य स्ववियोगदुःखमनिशं निःस्पन्दमाक्रन्दति ॥ (र)

राजा । अहो ! प्रमादो यावदनवसरं (ल) तावदेव चेदेवं स्यात्तदा किं भवति । पुनस्तत्रैव ।

जगन्नाथे अनवसरताम् अदर्शनतामित्यर्थः अभ्यायाते गते सति हन्त खेदे विरहविधुराम् अवस्थां जगाम । हि यतः विशदः विमलः यः प्रेमानन्दः तस्य अवतारतया यदा यस्मिन् विषये अभिनिविशते अभिनिविष्टो भवति, तदैव तस्मिन् तस्य विषये तन्मयः तदाकाराकारितमना भवति । हरिणीवृत्तम् ।

(य) इदं प्रभोस्तन्मयत्वम् । आकलयामि शृणोमि ।

(र) स्नानमिति । स्नानं नो, प्रभुणा क्रियते इति सर्वत्र योज्यम् । तुलसीनिषेचनविधिः तुलसीवृक्षे जलसेचनव्यापारः नो, चक्रस्य विष्णुचक्रस्य सन्दर्शनं नो, नामग्रहणं नामसङ्कीर्त्तनञ्च नो, नतिततिः प्रणामपरम्परा नो, हन्त खेदे भिक्षापि नो, श्रीनीलाचलचन्द्रमसः श्रीजगन्नाथचन्द्रस्य अनवसरव्याजात् अदर्शनच्छलात् स्वयैव स्वकीयया एव इच्छया स्वस्य वियोगदुःखं विरहदुःखं लोकस्य अनिशम् अजस्रं निस्पन्दं निश्चेष्टं यथा तथा आक्रन्दति रोदिति प्रभुरिति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

(ल) प्रमादः विपद् । यावदनवसरं यावददर्शनम् ।

नान्योऽप्युपायः प्रियकीर्त्तनस्य सङ्कीर्त्तनानन्दयुमन्तरेण ।
रसान्तरायेति तदेव कर्त्तुं स्वरूप एवोद्यममातनोति ॥ (व)

राजा । भद्रं भो भद्रम् । देवीं प्रति । प्रिये ! त्वमितोऽपसर । आकारयामि (श) तावदेनं काशीमिश्रमिति ।

देवी । जह आणवेदि (१) । इति निष्क्रान्ता ।

ततः प्रविशति काशीमिश्रः ।

काशीमिश्रः । जयति जयति देवः ।

राजा । मिश्र ! कथय किमुक्तं भवता ।

काशी । यदुक्तं तथैव तत् ।

राजा । कथय स्वरूपगोस्वामिना किं मन्त्रितमस्ति ।

काशी । भगवता स्वीकृते तथाविधविरहवैकल्यानुभवे तदपनोदार्थं सकलैरेव सुहृद्भिः सह मन्त्रितम् । अद्य सायं यदि गोपीनाथविजयदर्शनानन्तरं भगवता मधुरतर-मसकृत्कीर्त्तनं श्रूयते तदा रसान्तरं भवति तस्मिंश्च सति विरहावेशः श्लथत इति सम्मन्त्र रोहिणी-

---

(१) यथा आज्ञापयति ।

(व) नान्य इति । सङ्कीर्त्तनानन्दयुं सङ्कीर्त्तनजनितानन्दमन्तरेण विना प्रियं कीर्त्तनं यस्य तादृशस्य अस्य प्रभोः रसान्तराय भावान्तरमुत्पादयितुम् अन्यः अपरः उपायः न अस्तीति शेषः इति हेतोः स्वरूप एव तदेव रसान्तरमेव कर्त्तुम् उद्यमं चेष्टाम् आतनोति करोति । वंशस्थविलं वृत्तम् ।

(श) आकारयामि आह्वयामि ।

कुण्डसविधे परमार्तैः (घ) त्वदीयहृदयत्रैरेव कतिपयैर्म-धुरमधुरं कीर्त्तनमारब्धमस्ति ।

राजा । मिश्र ! कथमिदमालोक्यते । (ङ)

मिश्रः । जगतीं चेदारोहसि । (च)

राजा । तथैव क्रियते । इति तेन सह तदारोहं (छ) नाट-यति ।

नेपथ्ये मधुरतरसङ्कीर्त्तनकलकलः ।

मिश्रः । निरूप्य । भो महाराज ! पश्य पश्य ।

विरहव्यथेव मूर्त्ता करुणो रस एव मूर्त्तिमान् द्विसम् ।
चासीव एव सम्प्रति कीर्त्तनकृतोऽयमन्यथा जातः ॥(ज)

---

(घ) भगवता श्रीचैतन्येन । तथाविधं तादृशं विरहेण जगन्नाथ-स्येति भावः यत् वैकल्यं व्याकुलीभावः तस्य अनुभवे लीलते अव-लम्बिते । तदपनोदाय तस्य वैकल्यस्य अपनोदार्थम् अपनयनार्थम् । गोपीनाथस्य देवमूर्त्तिविशेषस्य विजयः यात्रा तस्य दर्शनानन्तरम् । मधुरतरम् अतिमनोहरं भगवत्कीर्त्तनं हरिसङ्कीर्त्तनम् । विरहावेशः विच्छेदाभिनिवेशः श्लथते खर्वीभवति । परमार्त्तैः परमविश्वस्तैः ।

(ङ) आलोक्यते दृश्यते मयेति शेषः ।

(च) जगतीं भूमिं चेत् यदि आरोहसि यदि तत्र गच्छसीति भावः तदा आलोकयिष्यते इति भावः ।

(छ) तदारोहं जगत्यामारोहणं भूमावेव गमनमित्यर्थः ।

(ज) विरहेति । द्विसं सर्वमिति शेषः व्याख्या वा एषा मूर्त्ता मूर्त्तिमती विरहव्यथा वा स एषः मूर्त्तिमान् करुणो रसः शोकावेश इति भावः चासीत् देवस्येति शेषः सम्प्रति कीर्त्तनकृतः सङ्कीर्त्तन-व्यापारात् अयं विरहजनितः शोकावेशः अन्यथा जातः विगत इत्यर्थः ।

राजा। भवति किं।

आनन्दकन्दलितमस्य वपुर्यदाऽयं
भावं समेत्य तमेव बहिर्व्यनक्ति।
यैः पूर्य्यते स्फटिकजा घटिका रसैस्तै-
स्तद्वर्णभाग्भवति! तानुपदर्शयन्ती॥ (ख)

पुनर्नेपथ्ये गानध्वनिः।

राजा। आकर्ण्य। किमेतद्गीतम्।

काशी। भगवद्वंशी-नाद-माधुरी-प्रतिपादकमिदं गौड़ीयभाषोपनिबद्धमिति देवेन माकलय्यते। (ग)

राजा। अहो! चित्रं यदेषः।

गौरः कृष्ण इति स्वयं प्रतिफलन् पुण्यात्मनां मानसे
नीलाद्रौ नटतीह सम्प्रथयते वृन्दावनीयं रसम्।
आद्यः कोऽपि पुमान् नवोत्सुकवधूकृष्णानुरागव्यथा-
स्वादी चित्रमहो! विचित्रमहहो! चैतन्यलीलायितम्॥ (घ

(ख) आनन्देति। अस्य देवस्य वपुः शरीरम् आनन्दकलितम् आनन्दपूर्णम्। अयं प्रभुः यदा भावं वस्तुविशेषस्येति भावः समेति अभिनिविशतीत्यर्थः। अथ तद्भावस्पर्शानन्तरमित्यर्थः तमेव भावं ब हिः व्यनक्ति प्रकटयति। तथाहि स्फटिकजा घटिका पात्रविशेषः यैः रसैः पूर्य्यते, तैः रसैः तद्वर्णभाक् तद्वर्णधारिणी सती तान् रसान् उप-दर्शयन्ती प्रकटयन्तीत्यर्थः भवति। वसन्ततिलकं वृत्तम्।

(ग) भगवदिति। भगवतः देवस्य यः वंशीनादः तस्य माधुरी माधुर्य्यं तस्याः प्रतिपादकं बोधकम्। गौड़ीयभाषया वङ्गभाषया इत्यर्थः उपनिबद्धं विरचितम्। आकलय्यते बुध्यते।

(घ) गौर इति। एष गौरः कृष्ण इति पुण्यात्मनां पुण्यवतां

पुनर्निरूप्य। अये! चिरकालमेकस्यैव गीतपदस्य ध्रुवमेव गीयते। (ङ)

काशी। प्रथमतो यस्यां लीलायां मनः प्रविवेश न ततः पुनरावर्त्तते। (च)

राजा। भवत्येवमेव। इति पुनरालोक्य सहर्षम्। अहो! कीदृशमस्य माधुर्य्यं पश्य पश्य।

आनूत्क्षेपभुजावधूननपदन्यासाक्षिविक्षेपणै-
र्हृन्मानन्दयतो मनांसि सुहृदां विश्वं जडीकुर्वतः।
निष्ठेवैर्मुखमस्य भाति सुभगस्मेरं महानन्दतः
फेनैर्हेमसरोरुहं हृतमिव स्थानैरिवेन्दुर्हिमैः॥ (छ)

मानसे स्वयं प्रतिफलन् प्रकाशमानः इह कश्चित् लीलाढ्यो नटति नृत्यति, वृन्दावनीयं वृन्दावनसम्बन्धं रसं भावं समाश्रयते सम्यक् प्रकटयति। अहो! चित्रम् अहहो! विचित्रम् अतिविस्मयकरमित्यर्थः चैतन्यलीलायितं श्रीगौराङ्गविलासः, आद्यः कोऽपि पुमान् नवाया नवीनायाः उत्सुकायाः वध्वाः राधाया इति भावः कृष्णे यः अनुरागः तस्य व्यथास्वादो तद्विरहास्वादनमित्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(ङ) चिरकालं दीर्घकालमित्यर्थः। ध्रुवं सङ्गीतस्य बीजीभूतावयवविशेषः।

(च) ततः तस्या लीलाया इत्यर्थः। आवर्त्तते निवर्त्तते।

(छ) आन्विति। आजानोरुत्क्षेपेण ऊर्द्ध्वक्षेपेण भुजयोर्बाह्वोः अवधूननेन सञ्चालनेन पदयोर्न्यासेन विक्षेपेण अक्षिविक्षेपेण नयनसञ्चारणेन इत्यैर्ति विभाये, सुहृदां मनांसि आनन्दयतः आनन्दितानि कुर्वतः तथा विश्वं जगत् जडीकुर्वतः निस्पन्दीकुर्वतः अस्य देवस्य महानन्दतः महतः आनन्दात् सुभगस्मेरं सुप्रकाशितं मुखं निष्ठेवैः

पुनरालोक्य सविस्मयम्। अये!।

क एष निःसाध्वसमात्ममण्डला-
न्निष्ठेवमाकण्य पिबन् प्रमोदते।
चन्द्राद्वहिर्भूतमिवामृतद्रव-
स्वोल्लासिनं फेणमहो चकोरकः॥ (ञ)

कामी। शुभानन्दनामाऽयं वैष्णवः।

राजा। अहो! एकमेव गीतध्रुवपदम्। एक एव तारस्वरः। एक एवोल्लासो गायकानां यामद्वयं यावत्। भगवतोऽपि समान एवानन्दप्रकाशचमत्कारः। तदमीभी रसान्तरेण विरहावेशतरङ्गो दूरीकृतः। प्रकृतरसान्तरं के नान्तरयन्तु उभयथैव भगवत आह्निकविगमः। (झ)

निःसृतमुखामृतविन्दुभिरित्यर्थः फेनैर्वृतं हेमसरोरुहमिव स्वर्णपद्ममिव तथा स्थानैः वृद्धिं गतैः छिन्नैः इतः इन्दुचन्द्र इव भाति विराजते। शार्दूलविक्रीडितं वृत्तम्।

(ञ) क इति। अहो! आश्चर्यं चन्द्रात् वहिर्भूतं निःसृत-मित्यर्थः स्वोल्लासिनं स्वमात्मानम् उल्लासयतीति तथोक्तं फेनं फेन-निभमित्यर्थः अमृतद्रवं चकोरक इव क एषः आत्ममण्डलात् मुख-मण्डलात् प्रभोरिति शेषः निःसाध्वसं निर्भयं तथा तथा निष्ठेवम् आकण्य पिबन् सन् प्रमोदते प्रकर्षेण हृष्यति उल्लसतीत्यर्थः। वंश-स्थविलं वृत्तम्।

(झ) तारस्वरः महान् स्वरः। यामद्वयं प्रहरद्वयम्। अमीभिः पार्षदैः : रसान्तरेण अन्येन रसेन। विरहावेशतरङ्गः विच्छेदवैक्लव्य-परम्परा। प्रकृतरसान्तरम् अवश्यकर्त्तव्यव्यापारमित्यर्थः केन कथम् अन्तरयन्तु अतिक्रामन्तु अमी इति शेषः। प्रकृतकार्यं नातिक्रान्-तव्यमिति भावः। उभयथैव विरहवैकल्ये तदपनयनव्यापारे चेत्यर्थः।

काशी। तथाऽपि (ञ) विरहावेशो भक्तानां दुःसहः। इति पुनर्निभाल्य। देव! निर्व्यूढोऽयं कृत्योत्सवः। यदमी भगवन्तं धृत्वा स्वाऽऽवासं प्रति गच्छन्ति।

राजा। भद्रं सम्भाव्यते कदाचिदाह्निकमपि तदधुना मित्र! भगवत्समीपं गम्यतामहमिहैव क्षणं निद्रामि।

काशी। यथाऽऽज्ञापयसि। इति निष्क्रान्तः।

राजा। गतो मित्रस्तदिह निद्रामि। इति निद्रां नाटयित्वा पुनरुत्थाय। अहो! विभातेयं विभावरी। यतः

अस्ताचलोदयमहीधरयोस्तटान्तं
शीतांशुचण्डकिरणावुपसेदिवांसौ।
तुल्यत्विषौ मृदुतया वहतः प्रगल्भ
वर्षीयसः क्षणमिवोपरि लोचनत्वम्॥ (ट)

इति परितो विलोकयति।

नेपथ्ये। अहो! महत्कौतुकम्।

आह्निकस्य दैनिककरणीयस्य सन्ध्यावन्दनादेरिति भावः विगमः व्यतिक्रमः।

(ञ) तथापि आह्निकविगमेऽपीत्यर्थः।

(ट) अस्तेति। शीतांशुचण्डकिरणौ चन्द्रसूर्यौ अस्ताचलोदयमहीधरयोः अस्तोदयपर्वतयोः तटान्तं चूडाप्रदेशम् उपसेदिवांसौ गतौ अस्तं गच्छन् चन्द्रः उद्यन् सूर्यश्चेत्यर्थः मृदुता मार्दवेन तदानीमिति शेषः तुल्या त्विट् कान्तिर्ययोस्तादृशौ समप्रभावित्यर्थः सन्तौ वर्षीयसः स्थविरस्य प्रगल्भ प्रातःकालस्य उपरि क्षणं लोचनत्वमिव वहतः प्राप्नुतः। प्रगल्भ वर्षीयस्त्वं चिरकालव्यवस्थितेरिति बोध्यम्। वसन्ततिलकं वृत्तम्।

प्रातः प्रत्यहमर्घ्यगन्धतुलसीपुष्पादिभिः पूजय-
न्नद्वैते भगवन्तमन्तरतुलावेशेऽपि सत्त्रोमपि ।
खित्वा तैर्हठतो हृतैरतिरसेनाद्वैतमभ्यर्चय-
न्देवो दुर्दुरितैर्मुखेऽङ्गुलिदलैर्वाद्यवाद्यं व्यधात् ॥ (ठ)
अपि च, यस्य न्यस्य कराब्जकोषकुहरे पूजोपचारं प्रभोः
पूजां कर्तुमनाः प्रयाति कुतुकाद्द्वैतदेवोऽन्वहम् ।
श्रीनाथः स तदा प्रभोर्गुणनिधेः सन्दर्शनस्पर्शन-
प्रेमाद्यापतपाकढाक्कलया पूर्णान्तरोऽजायत ॥ (ड)

राजा । अये ! कथमयं तुलसीमिश्रः परीक्षामहापात्रं किमपि प्रस्तौति तत् श्रोतव्यं यत् सत्वरमित एवाभिगच्छति ।

प्रविश्य

तुलसी । देव ! जगन्नाथस्य रथयात्रा नेदीयसीति

(ठ) प्रातरिति । प्रत्यहं प्रातः अद्वैते अर्घ्यगन्धतुलसीपुष्पादिभिः भगवन्तं देवं पूजयति अतएव अन्तरतुलावेशेन आन्तरानन्दातिरेकेण उल्लसद्रोमपि रोमाञ्चितकलेवरे सति देवः श्रीचैतन्यः खित्वा हठतः सहसा हृतैः आकृष्टैः तैः अर्घ्यादिभिः अतिरसेन अनुरागातिशयेन अभ्यर्चयन् मुखे दुर्दुरितैः दुर्दुरशब्दं कुर्वद्भिरित्यर्थः अङ्गुलिदलैः उल्लाद्यम् उच्चैर्वादनीयं वाद्यं व्यधात् कृतवान् । शार्दूलविक्रीडितं वृत्तम् ।

(ड) यस्येति । अद्वैतदेवः अन्वहं प्रत्यहं यस्य कराब्जकोषकुहरे करकमलकुड्मलाभ्यन्तरे पूजोपचारं पूजोपकरणं न्यस्य अर्पयित्वा कुतुकात् कौतुकात् पूजां कर्तुं मनो यस्य तथाभूतः सन् प्रयाति गच्छति, स श्रीनाथः तदा गुणनिधेः प्रभोः श्रीचैतन्यस्य सन्दर्शनेन स्पर्शनेन प्रेमाद्यत्रेन प्रपाकढाक्कलया कृपातत्कोष्मनिधानेन च पूर्णम् अन्तरं यस्य तथाविधः अजायत बभूव । शार्दूलविक्रीडितं वृत्तम् ।

गुण्डिचामन्दिरमार्ज्जनक्षालनार्थं स्वयमेव महाप्रभुस्तत्रो-
द्यतः। (ढ)

राजा। प्रियं मे प्रियं किञ्चिदाश्चर्यमस्ति।

तुलसी। यदाश्चर्यं तत् काशीमिश्रेणैव सम्पादितम्।

राजा। किं तत्।

तुलसी। यावन्तस्तल्लोकास्तावन्त्य एव सम्मार्ज्जन्यो घटाश्च (ण) ततोऽधिकाः।

राजा। एतावन्मात्रम्।

तुल। किमन्येन तत्प्रयोजनम्।

नेपथ्ये कलकलः।

तुलसी। देव! पश्य पश्य।

श्रीहस्तेन विलिप्य चन्दनरसैः प्रत्येकमेषां वपु-
र्निक्षिप्याप्यधिकन्धरं भगवतो निर्माल्यमाल्यानि च।
उल्लासद्रुमपल्लवैरिव करं सङ्घट्टयन् शोधनी-
र्मोदयन् क्रमलङ्घनालसगतिर्गौरो विनिष्क्रामति॥ (त)

---

(ढ) महाप्रभुः श्रीचैतन्यः। तत्र तत्तत् कर्म्मणि।

(ण) घटाः कलसाः।

(त) श्रीहस्तेनेति। गौरः श्रीचैतन्यः श्रीहस्तेन प्रत्येकम् एषां सुभद्रा बलरामजगन्नाथानां वपुः शरीरं चन्दनरसैः विलिप्य अधिकन्धरं ग्रीवायां भगवतः निर्माल्यमाल्यानि निक्षिप्य च करम् उल्लासा एव द्रुमाः तरवः तेषां पल्लवैः ता इव शोधनीः सम्मार्ज्जनीः सङ्घट्टयन् करेण [illegible] कारयन् यः [illegible] महान् [illegible] तस्य [illegible] गतिर्यस्य तथाभूतः सन् विनिष्क्रामति निर्गच्छति देवकुलादिति शेषः। शार्दूलविक्रीडितं वृत्तम्।

अपिच । निर्गच्छन्ति मुदा मनोरथरथैः सन्तोषदन्तावलै-
रत्युल्लासतुरङ्गमैर्भवजये जैत्रा इवामी भटाः ।
रोमाञ्चावलिकञ्चुकावृतवपुषोऽश्रान्तस्रवैर्बिभ्रतो
वाष्पैर्वारुणमस्त्रमेव समदं हुङ्कारझङ्कारिणः ॥ (थ)

राजा । धिग् भूपत्वं कदाऽहमेषां मध्ये यः कश्चिदेव भवन् भगवन्तमनुव्रजामि । तुलसीमिश्र ! कथमिदं कौतुकमामूलमाकर्ण्यते । (द)

तुल । अस्ति कश्चिन्मदीयः पुरुषः स एव सर्वं समाकलय्यागतप्रायः । (ध)

राजा । प्रियं मे प्रियम् । प्रविश्य सत्वरः कश्चित् राजानं प्रणम्य ।

महाराज ! सर्वमवलोक्यागतम् । (न)

(थ) निर्गच्छन्तीति । भवस्य संसारस्य जये विषये जैत्रा जयशीला भटा योद्धार इव अमी पार्षदाः रोमाञ्चावलयः कञ्चुका गात्रावरणानीव तैः आवृतम् आच्छादितं वपुः येषां तथोक्ताः, अश्रान्तस्रवैः अविरतं निःसरद्भिः वाष्पैः आनन्दाश्रुभिः वारुणं वरुणदेवताकमेव अस्त्रं बिभ्रतः धारयन्तः तथा समदं सानन्दं हुङ्कारझङ्कारिणः हुङ्काररवं कुर्वन्त इत्यर्थः सन्तः मुदा आनन्देन मनोरथा रथा इव तैः सन्तोषा दन्तावला हस्तिन इव तैः, तथा अत्युल्लासाः तुरङ्गमाः अश्वा तैः निर्गच्छन्ति रूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

(द) भूपत्वं राजत्वं धिक् निन्दामीत्यर्थः धिङ्निर्भर्त्सननिन्दयो-रित्यमरः । आकर्ण्यते श्रूयते ।

(ध) समाकलय्य विदित्वा ।

(न) आगतं मयेति शेषः ।

राजा। कथय।

पुरुषः। देव! अवधीयताम्।

पाणौ कृत्वा मधुरमृदुले शोधनीमूर्द्धमूर्द्धं
सर्वैः सार्द्धं स्वयमयमसौ गुण्डिचामण्डपान्तः।
लूतातन्तून् मलिनरजसः सारयन्नेव तैस्तै-
र्व्याप्तो गौरः शशधर इव व्यक्तलक्ष्मा बभूव॥ (प)

अनन्तरम्।

हस्ताग्राग्रे कमपि समुपारोप्य कस्यापि चांशे
मा भैषीरित्यहह! निगदन् मेघगम्भीरयोक्त्या।
अभ्युत्क्षेत्रः सरजसतनुर्मार्ज्जयित्वोर्द्धमूर्द्धं
भित्तीः सिंहासनमथतलं शोधयामास देवः॥ (फ)

(प) पाणाविति। अयम् असौ गौरः स्वयं मधुरमृदुले मनोहरकोमले पाणौ शोधनीं मार्ज्जनीं कृत्वा गुण्डिचामण्डपान्तः गुण्डिचाख्यगृहाभ्यन्तरे सर्वैः पार्षदैः सार्द्धम् ऊर्द्धम् ऊर्द्धं स्थिताविति शेषः मलिनानि रजांसि रेणवः येषु तथाविधान् लूतातन्तून् सारयन्नेव अपनयन्नेव तैः तैः सरजसलूतातन्तुभिः व्याप्तः समावृतः सन् व्यक्तं स्फुटं लक्ष्म कलङ्कः यस्य तादृशः शशधर इव चन्द्र इव बभूव। मन्दाक्रान्तावृत्तम्।

(फ) हस्ताग्राग्रे इति। अथ देवः हस्ताग्राग्रे हस्तेन प्राप्तुमशक्ये देशे इति शेषः कस्यापि जनस्य अंसे स्कन्धे कमपि जनं समुपारोप्य मेघगम्भीरया उक्त्या वचनेन मा भैषीः भयं मा कुरु इति तं निगदन् अहह आश्चर्यम् अभ्युत्क्षेत्रः ऊर्द्धविप्रक्षेपनः तथा सरजसतनुः धूलिधूसराङ्गः सन् ऊर्द्धमूर्द्धं मार्ज्जयित्वा भित्तीः कुड्यानि सिंहासनं तलं कुट्टिमञ्च शोधयामास। मन्दाक्रान्तावृत्तम्।

अपि च । वर्हिर्वासोऽञ्चल्यामवकरचयं शोधनिकया
समाहृत्यापूर्य स्वयमथ बहिः सारयति सः ।
क्वचिद्धस्तप्राप्यावधि सरभसं मार्ष्टि च कलं
सुहृद्वर्गैर्गायत्यपि स कुतुकं गापयति च ॥ (ब)

राजा । ततस्ततः ।

ग्रह । एवं मूलमण्डप- जगन्मोहनभोग-मण्डपानां मार्ज्जनानन्तरम् ।

कूपात् केऽपि समुद्धरन्ति कतरः कस्यापि हस्ते ददौ
सोऽप्यन्यस्य करे स चापरकरे सोऽन्यः करे कस्यचित् ।
इत्थं शृङ्खलया घटानथ नयन् पूर्णानपूर्णांस्त्यजन्
पूर्णापूर्णपरिग्रहत्यजनयोः शिक्षां व्यतानीज्जनः ॥ (भ)

---

(ब) वर्हिरिति । अथ अनन्तरं स देवः स्वयं शोधनिकया मार्ज्जन्या अवकरचयं निःसारणीयद्रव्यसमूहं समाहृत्य एकत्रीकृत्य वर्हिर्वाससः अञ्चल्यां प्रान्तदेशे आपूर्य बहिः सारयति निष्कासयतीत्यर्थः । क्वचित् सः देवः हस्तप्राप्यावधि हस्तप्राप्यं यावत् सरभसं सवेगं मार्ष्टि शोधयति गायति अपि, सुहृद्वर्गैः कलं मधुरं गापयति च । शिखरिणीवृत्तम् ।

(भ) कूपादिति । केऽपि जनाः कूपात् अम्भः जलं समुद्धरन्ति समुत्तोलयन्ति घटैरिति शेषः, कतरः कोऽपि कस्यापि हस्ते ददौ जलकुम्भमिति शेषः, सोऽपि अन्यस्य जनस्य करे स चान्यः अपरस्य करे, सः अपरः कस्यचित् करे, ददाविति सर्वत्र योज्यम् । इत्थं शृङ्खलया पूर्णान् घटान् नयन् तथा अपूर्णांश्च त्यजन् जनः पूर्णापूर्णयोः परिग्रहत्यजनयोः पूर्णपरिग्रहस्य अपूर्णत्यागस्य चेत्यर्थः शिक्षां व्यतानीत् विस्तारयामास पूर्णः परिग्राह्यः अपूर्णस्त्याज्य इति शिक्षां ददाविवेति भावोऽत्रोत्प्रेक्षा । शार्दूलविक्रीडितं वृत्तम् ।

अपि च। केचिद्गौरगिरा मनोज्ञमतयः सिञ्चन्ति सिंहासनं
भित्तीः केचन केऽपि तस्य करयोर्वार्य्यर्पणं कुर्वते।
केचित् तत्पदपङ्कजोपरि घटैः सिञ्चन्ति सन्तोषत-
स्तत्तोऽप्यञ्जलिना पिबन्ति ददते केचिच्च मूर्द्धन्यपि ॥ (म)

राजा। ततः।

पुरु। ततः पूर्ववत् क्रमेण प्रक्षाल्य धौतपादा एव सर्वे स्वस्ववासोभिस्तत्क्रमेण सलिलान्यपसारयाम्बभूवुः। तथा स्नात्वा अङ्गणमुत्तीर्य्य तच्छोधनान्ते। (य)

पङ्क्तीभूयोपविष्टे निजजननिकरे कौतुकान्मध्यवर्त्ती
चिन्वन्वासःप्रपूरं चिरसमुपचिताः शर्करायत्वरस्य।
पश्यामः के कतीमा विदधति विचिता इत्यवोचद्यदेष-
स्तर्ह्येवामी प्रमोदादहमहमिकया चेतुमुद्योगमीयुः (र)

---

(म) केचिदिति। गौरस्य श्रीचैतन्यस्य गिरा वचनेन मनोज्ञा मतिर्येषां तादृशाः केचित् सिंहासनं सिञ्चन्ति, केचन भित्तीः कुड्यानि सिञ्चन्तीति शेषः। केऽपि तस्य देवस्य करयोः वार्य्यर्पणं जलप्रदानं कुर्वते। केचित् घटैः तस्य देवस्य पदपङ्कजोपरि पादपद्मोपरि सन्तोषतः आनन्देन सिञ्चन्ति। केऽपि तत् देवस्य पादपद्मस्पृष्टजलमित्यर्थः अञ्जलिना पिबन्ति, केचिच्च मूर्द्धन्यपि शिरस्यपि ददते अर्पयन्ति। शार्दूलविक्रीडितं वृत्तम्।

(य) तत्क्रमेण तस्य देवस्य क्रमेण नियमेन। अङ्गणं चत्वरम्। तच्छोधनान्ते तस्य अङ्गणस्य शोधनान्ते।

(र) पङ्क्तीभूयेति। निजजननिकरे स्वगणनिवहे पङ्क्तीभूय श्रेणीक्रमेणेत्यर्थः उपविष्टे सति मध्यवर्त्ती देवः देवः वासः प्रपूरं वसनपूर्णं चिन्वन् संगृह्णन् कौतुकात् यदा चत्वरस्य अङ्गणस्य चिरसमुपचिताः बहुकालसञ्चिताः इमाः शर्कराः कर्कराः के जनाः कति

एवं स्वचरितमिव निरवकरं (ल) स्वहृदयमिव स्निग्धञ्च सर्वतश्चत्वरतलं कृत्वा तेऽमी भगवत्कीर्त्तनमारेभिरे।

तथा हि

क्षोभं क्षोणीमृगाक्ष्याः स्थगनमिह रवेः कम्पमाशावधूनां
स्तम्भं वातस्य कुर्वन्नमरपरिवृढस्याप्सरस्सां सहस्रे।
खेदं सप्तर्षिगोष्ठ्याः परमरसमयोल्लासमौत्तानपादे-
र्ध्यानभ्रंशं विरिञ्चेः स जयति भगवत्कीर्त्तनानन्दनादः॥ (व)

ततश्च। नर्त्तित्वा क्षणमेव चारु मधुरं गौरो हरिर्नर्त्तया-
मासेऽहैतमनुक्रमेण मधुरं गोपालदासाभिधम्।
नृत्यन्नेव समूर्च्छितः सुखवशादेहान्तरं यश्चिरा-
देते स्विद्यति पाणिपद्मवलनादेव: स तं प्रापयत्॥ (श)

विचिताः संस्कृताः विदधति कर्त्तुं शक्नुवन्ति, पश्चाम इति अवोचत् कथयामास, तर्हि एव तदैव असौ तदीया जनाः प्रमोदात् उल्लासात् अहमहमिकया अहमग्रे अहमग्रे विचिनोमीत्युक्तिक्रमेणेत्यर्थः चेतः शर्करा इति शेषः उद्योगं चेष्टाम् ईयुः प्रापुः चक्रुरित्यर्थः। स्रग्धरा-वृत्तम्।

(ल) निरवकरं निर्दोषमिति भावः।

(व) क्षोभमिति। इह अस्मिन् जगति स भगवत्कीर्त्तनानन्दनादः हरिसङ्कीर्त्तनध्वनिः क्षोणीमृगाक्ष्याः पृथिवीनायिकायाः क्षोभं, रवेः सूर्य्यस्य स्थगनं तिरोधानम् अमरपरिवृढस्य देवराजस्य अप्सरसां मेनकादीनां सहस्रे... वाप्यजल सप्तर्षिगोष्ठ्याः सप्तर्षिमण्डलस्य खेदं श्रमम् औत्तानपादेः उत्तानपादतनयस्य ध्रुवस्य परमं रसमयम् उल्लासं तथा विरिञ्चेः ब्रह्मणः ध्यानभ्रंशं ध्यानभङ्गं कुर्वन् जयति सर्वोत्-कर्षेण वर्त्तते। स्रग्धरावृत्तम्।

(श) नर्त्तित्वेति। गौरो हरिः क्षणमेव अल्पकालमेव चारु

ततो हरिध्वनिकलं चकार।

राजा। अहो! मे दुरदृष्टं यदेतदपि न दृष्टम्।

पुरु। ततो नरसिंहनाथमण्डपस्थ संलाप्य धावयित्वा इन्द्रद्युम्नसरसि कृतजलविहारः सर्वैरेव तदभ्यर्णवर्त्तिनि (ग) कुसुमोद्याने विशश्राम। तदनु वाणीनाथपट्टनायकेनोपनीतानि भगवत्प्रसादादीनि सर्वैरेव सेवितानि।

नेपथ्ये। नेत्रोत्सवः सर्वजनस्य भावी
श्वः श्रीपतेः श्रीमुखदर्शनेन।
इतीव चित्तोत्सव एष जातो
महोत्सवस्यापि महोत्सवो यः॥ (घ)

राजा। महापात्र! काशीमिश्रोऽयं यथाऽऽलपति तथा मन्ये भवन्तमेव श्रावयति तदधुना नेत्रोत्सवस्य कृताकृतावेक्षणा (ङ) मादरतु भवान्।

---

मधुरम् अतिमनोहरं नर्त्तित्वा गापालदासाभिधं गोपालदासनामकम् अद्वैतस्य तनूजं पुत्रम् एकमधुरम् अतिमधुरं नर्त्तयाञ्चक्रे। स गोपालदासः मृत्ययात् देहान्तरं यस्मिन् गच्छन्निव प्राप्नुवन्निव मूर्च्छितः। ततोऽद्वैते खिद्यति विषीदति सति, स देवः पाणिपङ्कजतलनात् करकमलस्पर्शनात् तं गोपालं जीवयामासेत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(ग) धावयित्वा प्रक्षाल्य। सर्वैरेव पार्षदैः सहेति शेषः। तदभ्यर्णवर्त्तिनि तत्समीपवर्त्तिनि।

(घ) नेत्रोत्सव इति। श्वः परदिने श्रीपतेः जगन्नाथस्य श्रीमुखदर्शनेन सर्वजनस्य नेत्रोत्सवः नेत्रानन्दः भावी इतीव यः चित्तोत्सवः मनसः उल्लासः जातः, एष महोत्सवस्यापि महोत्सवो जात इति शेषः। उपजातिवृत्तम्।

(ङ) कृताकृतावेक्षणं कर्त्तव्याकर्त्तव्यदर्शनम्।

उभौ । यथाऽऽज्ञापयसि । इति निष्क्रान्तौ ।

ततः प्रविशति काशीमिश्रः ।

काशीमिश्रः । अहो ! अतिमधुरं भावि ।

काशीश्वरक्षपितलोकचयः पुरस्ताद्
गोविन्दपालितविलासगतिः परस्तात् ।
पार्श्वद्वये च सपुरीश्वरसस्वरूपो
नेत्रोत्सवाय स भविष्यति गौरचन्द्रः ॥ (च)

राजा । अहो ! मनसा सह वञ्चयन् (क) मामपि नावलोकते मिश्रः ।

मिश्रः । इत्थमेवेऽस्मि निश्चित्य । अहो ! निष्पन्नमखण्डमेव (ख) रथवर्त्मा विशेषतोऽयं श्रीजगन्नाथस्य रथः ।

उत्सर्पिदर्पचलदश्वविभावितश्रीः
सञ्चारचामरसुपीनचयैः परीतः ।
तेजोमयः समयमेत्य विराजमान
आनन्दयन्नयनमेव रथो विभाति ॥ (ग)

---

(च) काशीति । पुरस्तात् अग्रतः काशीश्वरेण क्षपितः अपसारितः लोकचयः लोकसमूहः यस्य तथोक्तः परस्तात् ततःपरं गोविन्देन पालिता विलासगतिः लीलागतिः यस्य तथाभूतः गोविन्दस्य यत्नेन सविलासं गच्छन्नित्यर्थः पार्श्वद्वये च उभयोः पार्श्वयोश्च पुरीश्वर च स्वरूपः पुरीश्वरस्वरूपाभ्यां सह वर्त्तमान इत्यर्थः स गौरचन्द्रः नेत्रोत्सवाय भविष्यति नेत्रानन्दं विधास्यतीत्यर्थः । वसन्ततिलकं वृत्तम् ।

(क) वञ्चयन् भावयन् ।

(ख) निष्पन्नमखण्डता, सुसम्पन्नेत्यर्थः ।

(ग) उत्सर्पीति । दर्प दर्पः उत्सर्पिभिः अर्द्धस्थितैः दर्पचलतां

सम्मुखमवलोक्य। अये! कथमिहैव राजा। उपसृत्य। जयति जयति महाराजः। महाराज! इह स्थितेनैव त्वया रथारोहणं भगवतोऽवलोकनीयं पश्चात् स्नानोत्तरं स्वसेवा विधेया। (च)

राजा। रथविजयसेवा मे नियताऽपि (छ) तथा मां नोत्कण्ठयति यथा महाप्रभोर्नृत्यदर्शनस्पृहा।

काशी। रथारोहणे जाते सति यामार्द्धान्तरित एव महाप्रभोर्नृत्यारम्भो भावी।

राजा। सवितर्कम्।

इतश्चेत् पश्येयं भवति परितोषो न मनस-
स्ततो वा पश्येयं तदपि सुलभं नैव भवति।
प्रवेशस्तद्गोष्ठ्यां मम न घटते तद्‌वृततया
तदन्तर्वर्त्तित्वात् कथमु कलये तस्य नटनम्॥ (ज)

सृष्टैः विभाविता विस्फुरिता श्रीः शोभा यस्य तथाभूतः, सद्भिः छत्रकैः चारुभिर्मनोज्ञैः चामरैः सह पीनचयैः पवनसमूहैश्च परीतः परिवृतः तेजोमयः प्रज्वलितप्रभ इत्यर्थः समयम् रथं प्राप्य विराजमानः शोभमानः जगतां नयनम् आनन्दयन्नेव विभाति विराजते। वसन्ततिलकं वृत्तम्।

(च) स्वसेवा निजकर्त्तव्या सेवा पूजा।

(छ) नियताऽपि निजकर्त्तव्यत्वेन स्थिताऽपि।

(ज) इत इति। इतः अस्मात् प्रदेशात् चेत् यदि पश्येयं तदा मनसः परितोषो न भवति, ततः तस्मिन् प्रदेशे स्थित्वेति शेषः, तदपि तत्र स्थितस्य दर्शनमपि नैव सुलभं भवति। तद्‌वृततया तेन श्रीचैतन्येन वृतः आहूत इत्यर्थः तत्तया तदादेशेनेत्यर्थः तद्गोष्ठ्यां तस्य श्रीचैतन्यस्य गोष्ठ्यां वर्गमध्ये मम प्रवेशः न घटते न सम्भवतीत्यर्थः

तथाऽपि यावन्नटनं तावदेव तत्रैव स्थेयं तत्कृपा-दृष्ट्यैव शरणम्।

काशी। महाराज! कञ्चुकिद्वारा महिषीभिरभ्यर्थि-तमस्ति (क) भगवतो गौरचन्द्रस्य नृत्यदर्शनार्थमिहा-वस्थानम्।

राजा। सुखेन पश्यन्तु कृतार्थयन्तु लोचने जनुष। (ज)

काशी। तत्त्वरस्व भगवतो रथारोहणकालः सन्निकृष्ट एव।

राजा। एवमेव।

काशी। अहमपि भगवन्निकट एव गच्छामि। इत्युभौ निष्क्रान्तौ।

ततः प्रविशन्ति कञ्चुकिनोपदर्श्यमानास्तामेव वडभीमारूढा महिष्यः।

कञ्चु। देव्यः पश्यन्तु।

सम्प्राप्तो रथकन्धरं तनुभृतां नेत्रैर्मनोभिः समं
श्रीनीलाचलचन्द्रमा रथपथं सम्प्राप गौरो हरिः।
भावाक्रान्ततयैव नेत्रमनसी तेषां परं मुञ्चतः
पूर्वं नैव परन्तु पूर्वपरयोः सत्यं बलीयान् परः॥ (झ)

---

अतः तदन्तर्वर्त्तित्वात् तस्य नटनं नृत्यं कथन्तु कथं वा कलये पश्या-मीत्यर्थः? [illegible]।

(क) कञ्चुकिद्वारा अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते इत्युक्तलक्षणेन कञ्चुकिना। अभ्यर्थितं प्रार्थितम्।

(ज) जनुष जन्मन।

(झ) सम्प्राप्त इति। श्रीनीलाचलचन्द्रमाः श्रीजगन्नाथः तनु-

अपि च । मण्डलैस्त्रिभिरसौ स्वजनाना-
माहृतो जयति काञ्चनगौरः ।
बीजकोष इव वारिरुहस्य
प्रोल्लसत्तरसहस्रदलस्य ॥ (ञ)

देव्यः । सोत्कण्ठं निरीक्ष्य प्रणमन्ति ।

कञ्चु । देव्यः पश्यन्तु पश्यन्तु ।

काशीश्वरोऽजनि बहिर्वलयस्य मुख्यो
गोविन्द उत्तमतमोऽजनि मध्यमस्य ।
अभ्यन्तरस्य मणिवज्जयति स्वरूपः
सामाजिकः किल पुरीश्वर ईश्वराग्रे ॥ (ट)

---

भ्रतां देहिनां नेत्रैः मनोभिः समं रथस्य कम्प्रं ग्रीवादेशं सम्प्राप्तः । गौरो हरिश्च तथैव रथपथं सम्प्राप्त। तेषां तत्तद्भक्तानां नेत्रमनसी आगमाकान्ततया परं पूर्वं श्रीजगन्नाथं युञ्जतः त्यजतः, परन्तु गौरं हरिन्तु नैव युञ्जत इति शेषः अतः पूर्वपरयोः जगन्नाथगौरचन्द्रयोः परः गौरचन्द्रः सतां बलीयान् श्रेष्ठः पूर्वस्य दारुमयत्वात् उत्तरस्य मूर्त्तत्वादिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ञ) मण्डलैरिति । असौ काञ्चनगौरः श्रीचैतन्यः स्वजनानां त्रिभिः मण्डलैः वृत्तैः आहृतः परिवृतः प्रोल्लसत्तरं प्रकर्षेण विकस्वर-तरं बहुदलं यस्य तादृशस्य वारिरुहस्य पद्मस्य बीजकोषः बीजाधार इव जयति सर्वोत्कर्षेण वर्त्तते । स्वागतावृत्तम् ।

(ट) काशीश्वर इति । काशीश्वरः बहिर्वलयस्य बहिर्मण्डलस्य मुख्यः श्रेष्ठः अजनि, गोविन्दः मध्यमस्य वलयस्य उत्तमतमः श्रेष्ठतमः अजनि । स्वरूपः अभ्यन्तरस्य वलयस्य अन्तर्मण्डलस्य मणिवत् रत्नमिव जयति । पुरीश्वरः ईश्वरस्य ईशस्य अग्रे सामाजिकः सभाधिपतिः किल इष्यते इति शेषः। वसन्ततिलकं वृत्तम् ।

सर्वं निभाल्य। अहो! महत् कौतुकम्।

सङ्कोचाद्विरलीकरोति न जनांश्चैतन्यपादाश्रयां-
स्तैस्तैर्गाढनिरन्तराहततया गौरञ्च नो पश्यति।
सोत्कण्ठं नयनद्वयीं तत इतो व्यापारयन्नन्तरं
सम्यक्प्राप्नुमहे रिचन्द्रनांसविलसहाहुरूपो भ्राम्यति॥ (ठ)

देव्यः। अस्स जादिसी उक्कण्ठा तादिसं ज्जेव ववहरदि(१)

कञ्चु। अहो! प्रमादः।

राजाश्चिवत्मभिदुरं हरिचन्द्रनोऽसौ
श्रीवाममन्तरयति स्वकरेण मन्दम्।
रुष्टा जघान तमसौ प्रतिवर्ष्टमेनं
राजैव सान्त्वयति सानुनयं नयेन॥ (ड)

(१) अस्य यादृशी उत्कण्ठा तादृशमेव व्यवहरति।

(ठ) सङ्कोचादिति। हरिचन्द्रनस्य अंसे स्कन्धदेशे विलसन् राजन् बाहुर्यस्य तथोक्तः स्वपः सङ्कोचात् कुण्ठीभावात् चैतन्यपादाश्रयान् जनान् चैतन्यपार्श्वदानित्यर्थः न विरलीकरोति नापसारयति, तैस्तैः चैतन्यपार्श्वदैरित्यर्थः गाढं यथा तथा निरन्तराहततया गौरं श्रीचैतन्यस्य नो पश्यति। तत इतः सोत्कण्ठं यथा तथा नयनद्वयीं व्यापारयन् निक्षिपन् अन्तरम् अवकाशं सम्यक् प्राप्तुमिच्छुः सन् भ्राम्यति। शार्दूलविक्रीडितं वृत्तम्।

(ड) राजेति। असौ राजभृत्यश्रेष्ठः हरिचन्द्रनः राज्ञः अचिवर्त्मभिदुरं नयनपथरोधकारं श्रीवासं स्वकरेण मन्दं यथा तथा अन्तरयति अपसारयति। असौ श्रीवासः रुष्टः सन् तं जघान प्रजहार, ततो राजैव प्रतिवर्ष्टम् एनं हरिचन्द्रनं नयेन सान्त्वनादिना सानुनयं सान्त्वयति। वसन्ततिलकं वृत्तम्।

देव्यः। तादिसाणं णिरवेक्खाणं को वराओ (ढ) हरिचन्दणो (१)।

वसु। पश्यन्तु पश्यन्तु।

उद्दामताण्डवविधौ जगदीश्वरस्य
सर्वे परस्परकरग्रहणं विधाय।
बाहू प्रसार्य्य परितः प्रतियन्ति यद्वत्
भूमौ स्खलत्तरतनोः शतपङ्क्त्येव ॥ (ण)

देव्यः। दाणिं सुहेण दीसइ (२)।

वसु। पश्यन्तु।

क्षणमुत्प्लवते मृगेन्द्रकल्पः
क्षणमाधावति मत्तनागतुल्यम्।
भ्रमति क्षणमप्यलातचक्र-
प्रभमानन्दतरङ्गितो यतीन्द्रः ॥ (त)

---

(१) तादृशानां निरपेक्षाणां को वराको हरिचन्दनः।

(२) इदानीं सुखेन दृश्यते।

(ढ) निरपेक्षाणां कमपि अनपेक्षमाणानामित्यर्थः, वराकः दीनः।

(ण) उद्दामेति। उद्दामताण्डवविधौ उत्कटनृत्यविधाने सर्वे पार्षदाः परस्परकरग्रहणं विधाय बाहू प्रसार्य्य यद्वत् सततं भूमौ स्खलत्तरा अतिशयेन स्खलन्ती तनुर्यस्य तादृशस्य जगदीश्वरस्य श्रीचैतन्यस्य शतपङ्क्त्या प्राकारसंशयेन एव परितः समन्तात् प्रतियन्ति परिवेष्टन्ते। वसन्ततिलकं वृत्तम्।

(त) क्षणमिति। यतीन्द्रः आनन्दतरङ्गितः आनन्दावेशात् क्षणं मृगेन्द्रकल्पः सिंहसदृशम् उत्प्लवते उल्लम्फनं करोति, क्षणं मत्तनागतुल्यं

अपि च, अन्तर्भावविदामुदारमनसामाद्यः स्वरूपो यदा
यद्गातुं दिशतीदमेव सकलः प्रीत्यैव तद्गायति।
तस्यार्थंस्तनुमानिव प्रतिफलन् गौरो नरीनृत्यते
स्तम्भाश्रुस्वरभङ्गकम्पपुलकप्रस्वेदमूर्च्छाञ्चितैः॥ (ख)

देव्यः। अच्चरिअं क्खु एदं पेम्माणन्दचमक्कारस्स (१)।

कञ्चु। पश्यन्तु।

आनन्दाम्बुनिधेर्न वेद्मि कतमैरुच्चावचैरूर्म्मिभि-
र्नृत्योन्मादमदेन गौरभगवत्यानन्दमूर्च्छां गते।
निश्वेव: कठिनोऽस्रमस्रवदभूच्छ्वासो न संलक्ष्यते
कान्तिः केवलमुज्ज्वलेव सुहृदामाश्वासवीजायते॥ (ट)

---

( १ ) आश्चर्यं खलु इदं प्रेमानन्दचमत्कारस्य।

---

मसकृत्सिसहृदयम् आधावति विद्रवति। अयमपि अलातचक्रप्रभं ज्वलदुल्मुकसदृशं भ्रमति।

( ख ) अन्तर्भावेति। अन्तर्भावविदाम् आन्तरिकभक्तिरसज्ञानाम् उदारमनसां महाशयानाम् आद्यः मुख्यः स्वरूपः यदा यत् गातुं दिशति उपदिशति, सकल एव जनः प्रीत्यैव प्रणयेनैव तदिदं गायति। तनुमान् मूर्त्तिमान् प्रतिफलन् स्फुरन् तस्य गीतस्य अर्थ इव गौरः स्तम्भाश्रुस्वरभङ्गकम्पपुलकप्रस्वेदमूर्च्छाञ्चितैः सात्त्विकैरुप-लक्षितः सन् नरीनृत्यते पुनः पुनरतिशयेन नृत्यति। शार्दूलविक्री-ड़ितं वृत्तम्।

(ट) आनन्दाम्बुनिधेरिति। आनन्द एव अम्बुनिधिः समुद्रः तस्य कतमैः कतिभिः उच्चावचैः नैकविधैः ऊर्म्मिभिः तरङ्गैः न वेद्मि न जानामि, नृत्योन्मादमदेन गौरभगवति देवे गौरचन्द्रे आनन्दमूर्च्छां गते सति निश्वेवः कठिनः अभवत्, अस्रं वाष्पवारि अस्रवत्, श्वासः

देव्यः । ईसरोत्ति सम्वित्तीज्जेव (ध) णो जीअणं धारेदि । अखधा एदं किं दंसिदुं सक्कीअदि (१) ।

कञ्चु । पुनर्निभाल्य । अहो ! जीवितमहो ! जीवितम् ।

रोमाञ्चाः पुनरुल्लिषन्ति नयने भूयोऽपि पर्य्यश्रुणी
निष्ठेवश्च पुनः प्ररोहति पुनः श्वासोऽधरं धावति ।
सर्वेषामभितोऽभितः समुदयत्याह्लादकोलाहलो
देवो जागरयाञ्चकार हृदयं स्वानन्दमूर्च्छां त्यजन् ॥ (न)

देव्यः । अम्महे जीविदम्ह जीविदम्ह ( २ )

कञ्चु । पुनर्निभाल्य । अहो ! अद्भुतम् ।

येनैव गीतेन बभूव मूर्च्छा
तेनैव भूयोऽजनि सम्प्रबोधः ।

---

( १ ) ईश्वर इति संवित्तिरेव नो जीवनं धारयति । अन्यथा एतत् किं द्रष्टुं शक्यते ।

( २ ) अहो जीविता स्मो जीविताः स्मः ।

---

न संलक्ष्यते । केवलम् उज्ज्वला कान्तिरेव सुहृदां बन्धूनाम् आश्वासबीजायते आश्वासबीजमिव आचरति आश्वासयतीत्यर्थः ।

(ध) संवित्तिः सम्यक् ज्ञानम् ।

(न) रोमाञ्चा इति । रोमाञ्चाः पुनः उल्लिषन्ति उद्गच्छन्ति । नयने नेत्रे भूयोऽपि पुनरपि पर्य्यश्रुणी अश्रुपूर्णे । निष्ठेवश्च जिह्वा-रसश्च पुनः प्ररोहति जायते । श्वासश्च पुनः अधरं धावति । अभितः अभितः सर्वतः सर्वतः सर्वेषां जनानाम् आह्लादकोलाहलः समुदयति समुद्गच्छति यतः देवः स्वानन्दमूर्च्छां स्वस्य आनन्देन मूर्च्छां त्यजन् सन् हृदयं जागरयाञ्चकार । शार्दूलविक्रीडितं वृत्तम् ।

किमेक एवैष स कोऽपि मन्त्रः
प्रयोगसंहारविधौ स्वतन्त्रः ॥ ( प )

अपिच, नृत्योन्मादतरङ्गिणीर्बलवतीरानन्दवात्या क्रमा-
दत्युल्लासयति स्म तत्र जनितो वीचीतरङ्गक्रमः ।
कश्चित् कश्चिदनीनशत्तमपरस्तञ्चापरस्तं पर-
श्चेत्यानन्दतरङ्गजैव विविधा वृत्तिर्न गीतार्थजा ॥ ( फ )

अहो ! स्वरूपस्य प्रेममाधुर्य्यम् । तथा हि

उत्थाय मन्दमुपविश्य सुखोर्मिवेग-
निघ्नस्य तर्जनिकया लिखतो धरित्रीम् ।
आशङ्कितः चतिकृते सदयं स्वरूपो
देवस्य पाणिमकरोन्निजपाणिनैषः ॥ ( ब )

(प) येनेति । येनैव गीतेन मूर्च्छा बभूव देवस्येति शेषः । तेनैव गीतेन भूयः पुनः सम्बोधः अजनि जातः । प्रयोगसंहारविधौ स्वतन्त्रः यन्त्रः एषः कोऽपि स मन्त्र एव एकः मुख्यः किम् ? उपजातिर्वृत्तम् ।

(फ) नृत्योन्मादेति । आनन्दवात्या आनन्दरूपिणी भटिका क्रमात् बलवतीः नृत्योन्मादतरङ्गिणीः नृत्योन्मादनदीः अत्युल्लासयति स्म अतिशयेन उत्सम्भयति स्म तत्र नदीषु जनितः उत्थापितः कश्चित् वीचितरङ्गक्रमः प्रबलतरङ्गपरिपाटी कश्चित् तरङ्गम् अनीनशत् नाशयामास । तं नाशकं तरङ्गम् अपरस्तरङ्गः, तञ्चापरं तरङ्गम् अपरः अन्यस्तरङ्गः, तम् अन्यं तरङ्गं परश्च अनीनशदित्यनेनान्वयः । इति इत्थं विविधा वृत्तिः व्यापारः आनन्दतरङ्गजैव, न गीतार्थजा । येन आनन्दतरङ्गेणैव मूर्च्छा, तेनैव आनन्दतरङ्गेण प्रबोधो देवस्य न गीतेनेति फलितार्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ब) उत्थायेति । एषः स्वरूपः उत्थाय प्रबोधोदयादिति भावः

पुनर्निरूप्य। अहो! कष्टम्।

गच्छत्येष जगत्पती रथगतो बाहू प्रसार्य्य स्वयं
प्रीत्योत्थापयितुं रथोदरमिव श्रीगौरचन्द्रं पुरः।
नृत्यन्नेव स चापसर्पति परं वाम्योदयेनात्मनो
द्वावेवाक्षिपथं व्यतीयतुरहो! भाग्यं विश्रश्राम नः॥(भ)

तद्वयमितोऽवतरामो यदयं राजाऽपीत एवागच्छति।

इति देवीरथतार्य्य ताभिः सह निष्क्रान्तः।

ततः प्रविशति राजा काशीमिश्रश्च।

राजा। अहो! निर्व्यूढो रथोत्सवः।

गुण्डिचायाटमवस्थित एकः प्रासवागुपवनान्तरमन्यः।
देवयुग्ममिदमेव जनानां चित्तमेव युगपत् प्रविवेश॥ (म)

---

मन्दं शनैः उपविश्य सुखोर्म्मिवेगनिमग्नस्य आनन्दतरङ्गनिमग्नस्य तर्जनिकया तर्जन्या धरित्रीं लिखतः जगतः देवस्य अतिक्रते पतनक्षतशङ्कया आशङ्कितः उद्विग्नः सन् निजपाणिना पाणिम् अरुणत् रुरोध संवाहयामासेत्यर्थः। वसन्ततिलकं वृत्तम्।

(भ) गच्छतीति। एष रथगतः रथस्थः जगत्पतिः जगन्नाथः स्वयं बाहू प्रसार्य्य प्रीत्या श्रीगौरचन्द्रं रथोदरं रथाभ्यन्तरम् उत्थापयितुमिव पुरः अग्रतः गच्छति। स च गौरचन्द्रः नृत्यन्नेव अपसर्पति रथपश्चात् अपवर्त्तते। द्वावेव जगत्पती इति भावः आत्मनः स्वस्य वाम्योदयेन आनन्दनाम्यवर्षेण परम् अत्यर्थम् अक्षिपथं नेत्रपथं व्यतीयतुः अतिक्रान्तौ। अहो! आश्चर्य्यं न अस्माकं भाग्यं विश्रश्रमे चचाल देवयोरदर्शनादिति भावः। शार्दूलविक्रीडितं वृत्तम्।

(म) गुण्डिचेति। एकः जगन्नाथः गुण्डिचायाटम् अवस्थितः। अन्यः उपवनान्तरं प्रासवान्। इदमेव इत्थमेव देवयुग्मं देवद्वयं जनानां चित्तं युगपदेव समकालमेव प्रविवेश। स्वागतावृत्तम्।

काशीमिश्र! होरापञ्चम्यां भगवत्याः श्रियो (य) देव्याः प्रयाणयात्रा सर्वतश्चमत्कारिणी यथा भवति तथा कार्य्या। छत्रचामरादीनि भगवद्भाण्डारागारे यावन्ति सन्ति यावन्ति वा मम कोषागारेषु सन्ति तावन्त्येव समानेयानि यथा दर्शीतृत्वादपि लोचनचमत्कारकारकत्वेन मूर्त्त एवाद्भुतरसो भवति।

काशी। यथाऽऽज्ञापयसि।

राजा। त्वमद्यारभ्य तथा कुरु अहमपि पुरं प्रविशामि। इति निष्क्रान्तः।

काशी। स्वगतम्। आरामान्तरमागतेषु भगवत्पार्षदेषु अद्वैतादिषु च समस्तेषु महत्सु किं वृत्तमिति निभालयामि। इति जगन्नाथवल्लभाख्यमुपवनं सहर्षमालोक्य। अहो! भगवतः श्रीकृष्णचैतन्यस्यैव साक्षात्।

श्वो मे परश्वो मम तत्परेऽह्नि
ममापरेद्युर्मम चापरेऽह्नि।
ममेति भिक्षादिननिर्णयेना-
द्वैतादयः कौतुकिनो बभूवुः॥(र)

तदधुनात्र मम प्रवेशोऽयोग्यस्तदहमासन्नस्य होरा-

---

(य) श्रियः लक्ष्म्याः।

(र) श्व इति। अद्वैतादयः मे मम श्वः कल्यं मम परश्वः, तत्परदिने, मम तत्परे अह्नि, मम अपरेद्युः अपरस्मिन् दिने, मम च अपरे अन्यस्मिन् अह्नि भगवते भिक्षा देयेति भिक्षादिननिर्णयेन कौतुकिनः कौतुकवन्तः बभूवुः। उपजातिवृत्तम्।

महोत्सवस्य सामग्रीसमवधानाय (ख) गच्छामि । इति निष्क्रान्तः ।

ततः प्रविशति श्रीकृष्णचैतन्यः परितोऽद्वैतादयश्च ।

श्रीचै । स्वरूप ! यद्यपि जगन्नाथो द्वारकालीला मनुकरोति तथाऽपि गुण्डिचाव्याजेन (ग) वृन्दावनस्मारकेष्वेतेषूपवनेषु विहर्त्तुं प्रत्यब्दमेव नीलाचलं परित्यज्य सुन्दराचलमागच्छति । कथं देवीं श्रियं परित्यजति ।

स्वरूपः । स्वामिन् ! वृन्दावनस्मारकेष्विति यदुक्तं स्वयमेव तदेव सिद्धान्तो नहि वृन्दावने श्रिया सह विहारोऽपि तु गोपाङ्गनाभिरेव ।

श्रीचै । तथाऽप्येषा कोपिनी (घ) भवति ।

स्व । प्रणयिनीनां प्रकृतिरेवायं यत् स्वायोग्यतां नेक्षते (ङ)

नेपथ्ये । महावादित्रनिर्घोषः ।

सर्वे । आकर्ण्य । अहो ! निमेषमात्रमिव दिनचतुष्टयं जातम् । यदयं होरापञ्चमीमहोत्सवः प्रत्यावर्त्तते ।

श्रीचै । यथाप्रस्तावमेवायं भगवत्याः श्रीदेव्याः कोप-

(ख) आसन्नस्य निकटवर्त्तिनः होरापञ्चम्युत्सवस्य होराख्यपञ्चम्यां श्रीदेव्या यात्रोत्सवस्य । सामग्रीसमवधानाय द्रव्यसंग्रहाय ।

(ग) गुण्डिचाव्याजेन गुण्डिचायात्राच्छलेन ।

(घ) एषा श्रीः कोपिनी क्रुद्धा ।

(ङ) स्वायोग्यतां स्वस्य आत्मनः अयोग्यताम् असामर्थ्यं न ईक्षते न पश्यति न विचारयतीत्यर्थः । वृन्दावने यद्यपि न श्रियो विहारायोग्यता, तदपि सा कुप्यतीति भावः ।

प्रयाणमहोत्सवः (स) । तदयमालोकनीयो भवति ।

सर्वे । एवमेव । इति आलोकनसमुचितं स्थलं उपसर्पन्ति ।

पुनर्नेपथ्ये जयजयध्वनिः ।

स्वरूपः । आलोक्य । भगवन् !

मानस्य क्रम एष नैव यदियं स्वैश्वर्य्यविख्यापकै-
र्नानादिव्यपरिच्छदैः स्वयमहो देवं प्रतिक्रामति ।
व्यक्तं रौद्ररसोऽयमम्बुधिभुवः क्रोधस्य यत् स्थायिनो
भूयानेव विकार एष विदितं वैदग्ध्यमस्याः परम् ॥ (ह)

पुरीश्वरः । स्वरूप । सत्यमेव । किन्तु पश्यतां पुनरद्भुत एव रसः । (च)

तथाहि । पताकाभिर्देवी कलहमनुभ[illegible]गीन्द्ररसना-
सहस्रस्य द्वाभ्यां युगपदिव लीढा दशदिशः ।

(स) कोपप्रयाणमहोत्सवः कोपयात्रार्थं महोत्सव इत्यर्थः ।

(ह) मानस्येति । एष मानस्य प्रियं प्रति कोपस्य न क्रमः न रीतिः । यत् इयं लक्ष्मीः स्वयं स्वैश्वर्य्यविख्यापकैः आत्मनः ऐश्वर्य्य-प्रकटकैः नानादिव्यपरिच्छदैः उपलक्षिता इत्यर्थः देवं जगन्नाथं प्रति क्रामति गच्छति, अहो ! आश्चर्य्यं व्यक्तं स्फुटम् अम्बुधिभुवः श्रियाः अयं रौद्ररसः, यत् अस्या विदितं यत् परं वैदग्ध्यं चातुर्य्यम् एष एव स्थायिनः स्थायिभावस्य क्रोधस्य भूयान् विकारः अवस्था-विशेषः । रौद्रः क्रोधस्थायिभाव इति दर्पणकारोक्तं रौद्ररसलक्षण-मत्र बोध्यम् । शार्दूलविक्रीड़ितं वृत्तम् ।

( च ) सत्यमेव रौद्ररसः, अद्भुत एव विस्मयस्य स्थायिभावत्वा-दिति भावः ।

(क) पताकाभिरिति । देवीकलहम् अनु देव्याः श्रियाः मान-मुपलक्ष्य इत्यर्थः पताकाभिः भोगीन्द्रस्य वासुकेः रसनानां सहस्रस्य

नभोवापीहंसैरिव मृदुचलैश्चामरचयैः
सितच्छत्रैः फुल्लधवलकमलौघैरिव हृता ॥ (क)

अपि च, सुधूपानां धूमैः प्रतिदिगमुदीर्णैरुपचिते
घनौघे गम्भीरं ध्वनति मुरजादिव्यतिकरे ।
बलाकानां श्रेण्यामिव धवलसत्तोरणततौ
चलन्त्यामुन्मत्ता इव दधति लास्यानि शिखिनः ॥

अद्वैतः । पुरो वारस्त्रीभिर्गुणविजितरम्भाप्रभृतिभि-
र्लसल्लीलालास्यं मुहुरभिनयन्तीभिरभितः ।
समन्ताद्दासीभिर्व्यजनचयताम्बूलपुटिका-
मणीभृङ्गारादिग्रहणपटुलाभिः परिवृता ॥ (ग)

---

छाभ्यामिव छिद्रद्वयरसनाभिरिवेत्यर्थः छिजिह्वत्वादिति भावः युगपद् इव स्थिताः क्रीडाः आच्छादिताः वस्त्रैः पताका उत्क्षिप्ता इत्यर्थः । तथा हंसैरिव सरोवरहंसैरिव मृदुचलैः मन्दमन्दसञ्चलितैः चामरचयैः चामरवृन्दैः तथा फुल्लैः विकसद्भिः धवलैः श्वेतैः कमलौघैरिव सितच्छत्रैः श्वेतातपत्रैः नभोवापी अन्तरीक्षसरसी हृता आच्छादिता । शिखरिणीवृत्तम् ।

(ख) सुधूपानामिति । प्रतिदिगमुदीर्णैः उत्थितैः सुधूपानां सुष्ठु धूपानां धूमैः उपचिते पुष्टिं नीते घनौघे मेघनिचये इवेत्यवबोध्यम् । मुरजादिव्यतिकरे मृदङ्गादिवादित्रसमूहे गम्भीरं ध्वनति सति, तथा बलाकानां बकानां श्रेण्यामिव धवलानां सताम् उत्कटानां तोरणानां बहिर्द्वाराणां ततौ समूहे चलन्त्यां राजन्त्यां सत्यां शिखिनः मयूराः उन्मत्ता इव लास्यानि दधति कुर्वते । शिखरिणीवृत्तम् ।

(ग) पुर इति । विभावयेति । पुरः अग्रतः गुणैः सौन्दर्या-दिभिः विजिता रम्भाप्रमुखाः अप्सरसः याभिः ताभिः वारस्त्रीभिः अभितः

अपि च, विमानस्य ग्लानीमिव विदधतीं मुग्धमहसा
चतुर्दोलीं चामीकरमणिमयीमुत्थितवती ।
अतिक्रोधान्धाऽपि स्मरभरसमाभुग्नहृदया
पयोधेः पुत्रीयं पितृजनितदर्पेव बलते ॥ (ग)

स्वरू । सोपहासम् । अहो ! मानवैदग्धमस्याः । (घ)

श्रीचैतन्यः । स्वरूप ! कीदृशं प्रणयकोपवैदग्ध्यम् ।

स्वरू । या यादृशी तस्याः खलु तथाविधं वैदग्ध्यम् ।

श्रीचै । तथाऽपि शृणुमः ।

स्वरू । कदाचित् कृतापराधे प्रणयिनि श्रीव्रजराज-
किशोरे सविधमागत्य समुचितं व्याहरति (ङ) सति ।



समन्तात् मुहुः पुनः पुनः लसत् शोभमानं लीलया विलासेन लास्यं नृत्यं यस्मिन् तद्यथा तथा अभिनयन्तीभिः गच्छन्तीभिरित्यर्थः व्यजनचयस्य चामरवृन्दस्य ताम्बूलपुटिकायाः ताम्बूलवीटिकायाः मणीभृङ्गारादेश्च धारणे चटुलाभिर्व्यग्राभिः दासीभिः समन्तात् परिवृता । मुग्धमहसा मनोज्ञकान्त्या विमानस्य देवयानस्य ग्लानीमिव मालिन्यमिव विदधतीम् आवहन्तीं चामीकरमणिमयीं सुवर्णमणिनिर्मितां चतुर्दोलीं तदाख्यं यानमुत्थितवती आरूढा अतिक्रोधान्धापि स्मरभरेण मदनातिरेकेण आभुग्नम् आनतं सरसमित्यर्थः हृदयं यस्याः तथाभूता इयं पयोधेः समुद्रस्य पुत्री लक्ष्मीः पित्रा पयोधिना जनितः उत्पादितः दर्पः अहङ्कारः यस्या तथाभूतेव बलते अभिगच्छति । शिखरिणी वृत्तम् ।

(घ) मानवैदग्ध्यं मानचातुर्यम् ।

(ङ) सविधं समीपम् । व्याहरति भाषते ।

किं पादान्तमुपैषि नास्मि कुपिता नैवापराद्धो भवा-
न्निर्हेतुर्न हि जायते कृतधियां कोपोऽपराधोऽथवा ।
योग्या एव हि भोग्यतां दधति ते तत्किं मयाऽयोग्यया
तेनाद्यावधि गोकुलेन्द्रतनय ! स्वाच्छन्द्यमेवास्तु ते ॥ (च)

इदं कोपवैदग्ध्यम् । प्रकारान्तरञ्च ।

दूरादुत्थितमन्तिकं मयि गते पीठं करेणार्पितं
स्मित्वा भाषिणि भाषितं मृदुसुधानिःस्यन्दि मन्दं वचः ।
आरूढेऽर्द्धमथासनं प्रकटितो हर्षस्तयाऽऽश्लिष्यति
प्रत्याश्लिष्टमवाममेव मनसा वाम्यं तयाऽऽविष्कृतम् ॥ इति (छ)

श्रीचै । पूर्वतोऽपि सुरसमिदम् ।

---

(च) किमिति । देव्या उक्तिरियम् । हे गोकुलेन्द्रतनय ! किं कथं पादान्तम् उपैषि चरणे निपतसि ? नास्मि अहं न कुपिता भवान् नैव अपराद्धः कृतापराधः । कृतधियां सुबुद्धीनामित्यर्थः निर्हेतुः अकारणः कोपः अथवा अपराधः नहि जायते । योग्या एव भोग्यतां दधति हि भोग्या भवन्तीत्यर्थः । तस्मात् अयोग्यया मया ते तव किं प्रयोजनमिति शेषः । तेन हेतुना अद्यावधि ते तव स्वाच्छन्द्यमेव स्वाधीनतैव स्वेच्छाचारित्वमेवेत्यर्थः अस्तु । शार्दूलविक्रीडितं वृत्तम् ।

(छ) दूरादिति । मयि अन्तिकं गते सति दूरात् उत्थितं करेण पीठं आसनमित्यर्थः अर्पितं दत्तम् । स्मित्वा भाषिणि मयीति शेषः । मृदु अल्पं सुधानिःस्यन्दि अमृतवर्षि मन्दं वचः भाषितम् उक्तम् । अथ अर्द्धम् आसनं आरूढे मयीति शेषः हर्षः प्रकटितः आविष्कृतः स्फुटमित्यर्थः । आश्लिष्यति आलिङ्गति मयीति शेषः प्रत्याश्लिष्टं प्रत्यालिङ्गितं सर्वत्र तयेति कर्त्तृपदमन्वेतव्यम् । इत्थं तदा मनसः अवामतयैव अप्रातिकूल्येनैव वाम्यं प्रातिकूल्यं मान इति भावः

श्रीवासः । सपरिहासम् । गोपाललत्ननानां कीदृश-मैश्वर्य्यम् । ऐश्वर्य्यं हि मदहेतुः । (ञ)

अस्याः पश्यत भो मदस्य महिमा दासीकुलेनेश्वरी-
गर्व्वोत्सेकमदोद्धुरेण यदमी बद्धा कटीरोधसि ।
मुख्या एव जगत्पतेः परिजनाः प्रत्येकमाकर्षता
पात्यन्ते स्म निजेश्वरीपदपुरः प्रापय्य चौरा इव ॥ (झ)

भृत्यापराधे स्वामिनो दण्ड इत्येव श्रुतम्। इदन्तु तद्विपरीतमेवेत्यहो (ञ) अत्यद्भुतम् ।

स्वरू । श्रीवासं प्रति । भोः पण्डित! पश्य पश्य तव देव्या वैदग्ध्यम् ।

अचेतनस्यास्य रथस्य को वा
मन्तुः कथं ताडित एव भृत्यैः ।

---

आविष्कृतं प्रकटितम् । शार्दूलविक्रीडितं वृत्तम् वक्तुं प्रति कस्य-चिन्नायकस्योक्तिरियम् ।

(ञ) मदहेतुः गर्व्वकारणम् ।

(झ) अस्या इति । भोः अस्याः श्रियाः मदस्य महिमा माहात्म्यं पश्यत अवलोकयत, यत् ऐश्वर्य्यां यः गर्व्वः तस्य उत्सेकेन उद्रेकेण यः मदः अहङ्कारः तेन उद्धुरेण उद्धतेन दासीकुलेन दासी-वर्गेण प्रत्येकं कटीरोधसि कटितटे बद्धा आकर्षता सता अमी मुख्याः प्रधाना एव जगत्पतेः जगन्नाथस्य परिजनाः निजेश्वर्य्याः देव्याः पदपुरः पदाग्रे प्रापय्य आनीय चौरा इव पात्यन्ते स्म । शार्दूल-विक्रीडितं वृत्तम् ।

(ञ) इदन्तु तद्विपरीतमिति स्वामिनः अपराधे भृत्यदण्ड इति भावः ।

यास्याम्यदूरेऽहमितीश्वरेण

प्रोक्ते कथं वाऽजनि दीर्घकोपः ॥ (ट)

श्रीवा। स्वामिन्! ईश्वर्य्या हि इयमेव रीतिः।

श्रीचै। श्रीवास! नारदत्वेन (ठ) भवान् द्वारकाविलास-प्रिय एव तेन तुभ्यमैश्वर्य्यांश एव रोचते। स्वरूपस्य वृन्दा-वनप्रियत्वात् तथाविधानन्दवैदग्ध्यांश एव प्रेयान्।

अद्वैतः। भगवन्!

भगवत्पदाम्भोरुहयोरनुग्रहा-

दस्माद्दृशामीदृशमीदृशं महत्।

बभूव सौभाग्यमहो महोत्सवा

मूर्त्ता इवामी विविशुर्दृशोः पथि ॥ (ड)

श्रीचै। किन्ते भूयः प्रियमुपकरोमि।

अद्वै। किं भूयः प्रियमुपकरिष्यसि।

(ट) अचेतनस्येति। अचेतनस्य अस्य रथस्य को वा मन्युः अपराधः आगोऽपराधो मन्युश्चेत्यमरः। कथमेषः रथः भक्तैः देव्या इति शेषः नाय्यते आकृष्यते। अहम् अदूरे निकटे यास्यामि शीघ्रमागमिष्यामीति भावः। इति ईश्वरेण प्रोक्तो वा कथं दीर्घकोपः अजनि जातः ?। उपजाति वृत्तम्।

(ठ) नारदत्वेन नारदांशावतारत्वेनेत्यर्थः।

(ड) भवदिति। भवतः पदाम्भोरुहयोः पदपङ्कजयोः अनु-ग्रहात् अस्माकं ईदृशमीदृशं महत् सौभाग्यं बभूव अहो! आश्चर्यं यत् अमी मूर्त्ता इव महोत्सवाः दृशोः पथि विविशुः दृष्टिगोचरा अभूवन्नित्यर्थः। वंशस्थविलं वृत्तम्।

हेलाखेलायितेनातनि कलिमथनं ख्यापितो भक्तियोगो
व्यक्तं तत्रापि नीतः परमसुनिभृतः प्रेमनामा पदार्थः।
क्वापि क्वापि प्रकीर्णा पृथुतरसुभगम्भावुका भावुकानां
तत्राप्याभीरनारीमुकुटमणिमहाभावविद्याऽनवद्या॥ (ढ)

अस्माकन्तु। धर्मार्थकामेषु परैव कुतृष्णा
लिप्सा न मोक्षस्य च कर्हिचिन्नः।
एभिः समस्तैस्तव देव! लोकै-
र्लोकान्तरेऽप्यस्तु सहैव वासः॥ (ण)

नीचैः। एवमेव।

वृन्दारण्यान्तरस्थः सरसविलसिते नात्मनात्मानमुच्चै-
रानन्दस्यन्दवन्दीकृतमनससुरीकृत्य नित्यप्रमोदः।

---

(ढ) हेलेति। हेलाखेलायितेन हेलया अवज्ञया यत् खेलायितं क्रीड़ितं तेन कलिमथनं कलेर्दमनम् अतनि कृतमित्यर्थः भक्तियोगः ख्यापितः प्रकटीकृतः। तत्रापि भक्तियोगे व्यक्तं स्फुटं यथा तथा परमः महान् सुनिभृतः अतिनिगूढ़ः प्रेमनामा पदार्थः वस्तु नीतः संयोजितः। तत्रापि क्वापि क्वापि प्रेम्णीत्यर्थः भावुकानां प्रेमिकाणां पृथुतरसुभगम्भावुका अत्यन्तप्रियतरा अनवद्या अनिन्द्या आभीरनारीणां गोपनारीणां मुकुटमणौ श्रीकृष्णे यः महाभावः महती प्रीतिः तस्य विद्या प्रकीर्णा प्रकाशितेत्यर्थः। स्रग्धरावृत्तम्।

(ण) धर्मार्थकामेष्विति। हे देव! नः अस्माकं धर्मार्थकामेषु परा महती एव कुतृष्णा अरतिरित्यर्थः अस्तु कर्हिचित् कदाचिदपि मोक्षस्य लिप्सा वाभेच्छा न अस्तु। एभिः समस्तैः लोकैः सहैव लोकान्तरेऽपि वासः अस्तु। इन्द्रवज्रावृत्तम्।

(त) वृन्दारण्यान्तरस्थ इति। अहं वृन्दारण्यान्तरस्थः सरसविलसितेन सरसेन विलासेन आत्मना स्वयम् आत्मानम् उच्चैः आनन्द-

वृन्दारण्यैकनिष्ठान् स्वरुचिसमतनून् कारयिष्यामि युष्मा-
नित्येवास्तेऽवशिष्टं किमपि मम महत्कर्म तच्चातनिष्ये॥ (त)

अपि च।

दास्ये केचन केचन प्रणयिनः सख्ये त एवोभये
राधामाधवनिष्ठया कतिपये श्रीद्वारकाधीशितुः।
सख्यादावुभयत्र केचन परे ये वाऽवतारान्तरे
मय्याबद्धहृदोऽखिलान् वितनवै वृन्दावनासङ्गिनः॥ (थ)

अद्वै। तथाऽस्तु।

निजेच्छया प्रापय यत्र तत्र
स्थलान्तरं मां वपुरन्तरं वा।

स्वच्छन्देन वन्दीकृतम् आविष्टं मनो यस्य तादृशम् उरीकृत्य अङ्गीकृत्य नित्यप्रमोदः सततानन्दमयः सन् युष्मान् वृन्दारण्यैकनिष्ठान् तथा स्वरुचिसमतनून् स्वेच्छाधीनविग्रहान् कारयिष्यामि। इत्येव मम किमपि महत् कर्म अवशिष्टम् आस्ते तच्च आतनिष्ये करिष्यामीत्यर्थः। स्रग्धरा वृत्तम्।

(थ) दास्ये इति। केचन दास्ये प्रणयिनः केचन सख्ये प्रणयिनः केचन त एव उभये दास्ये सख्ये चेत्यर्थः प्रणयिनः आसन्निति शेषः। कतिपये राधामाधवनिष्ठया राधामाधवप्रेम्णेत्यर्थः प्रणयिन इति शेषः। केचन श्रीद्वारकाधीशितुः श्रीकृष्णस्य सख्यादौ प्रणयिन इति शेषः परे केचन, उभयत्र राधाकृष्णयोरित्यर्थः प्रणयिन इति शेषः ये वा केचन अवतारान्तरे अन्यस्मिन् अवतारे रामनृसिंहादौ प्रणयिन इति शेषः। एतान् अखिलान् सर्वान् मयि आबद्धं हृत् येषां तथाविधान् वृन्दावनासङ्गिनः वृन्दावनासक्तान् वितनवै करवै। शार्दूलविक्रीडितं वृत्तम्।

नीतं तदाश्चर्य्यचरित्रमेव
जातिस्मरा एव चिरं स्मरामः ॥ (द)

तथाऽपीदमस्तु ।

आकल्पं कवयन्तु नाम कवयो युष्मद्विलासावलीं
तामेवाभिनयन्तु नर्त्तकगणाः शृण्वन्तु पश्यन्तु ताम् ।
सन्तो मत्सरतां त्यजन्तु कुजनाः सन्तोषवन्तः सदा
सन्तु क्षोणिभुजो भवच्चरणयोर्भक्त्या प्रजाः पान्तु च ॥ (ध)

भगवान् । तथैवास्तु । निष्क्रान्ताः सर्वे ॥

स्वधाममहोत्सवो नाम दशमोऽङ्कः ॥

---

(द) निजेच्छयेति । हे प्रभो ! त्वं निजेच्छया नः अस्मान् यद् इह एव स्वधामान्तरं स्थानान्तरं वा वपुषः स्वशरीरस्य अन्तरं प्रापय्य नय, एतत् तवैव आश्चर्य्यचरित्रं किन्तु वयं चिरं जातिस्मराः सन्तः स्मरामः भवन्तमिति शेषः । उपजाति वृत्तम् ।

(ध) आकल्पमिति । कवयः विद्वांसः आकल्पं युष्माकं विलासावलीं क्रीडाविलसितानि कवयन्तु रचयन्तु नाम । नर्त्तकगणाः तामेव युष्मद्विलासावलीं अभिनयन्तु नाट्येन प्रकटयन्तु । सन्तः साधवः तां शृण्वन्तु च पश्यन्तु च । कुजनाः दुर्जनाः मत्सरतां विद्वेषितां त्यजन्तु सदा सन्तोषवन्तः सन्तुष्टाः सन्तु । क्षोणिभुजः भूपालाः भवच्चरणयोः भक्त्या प्रजाः पान्तु पालयन्तु च । शार्दूलविक्रीडितं वृत्तम् ।

दशमोऽङ्कः समाप्तः ।

---

